# सूर्योदयः।

नवमे वर्षे } आषाढस्य पूर्णिमा सं० १९९० । { प्रथमसंख्या

## मङ्गलाचरणम्।

——:o:——

ऊर्ध्वं कृत्वा सुधीरं पदमनिललितं, पादमन्यं प्रसार्य,
प्रेम्णा पार्श्वं प्रपन्नं दरविनतमुखं प्रेक्षमाणो मुकुन्दः ।
बिभ्रच्चञ्चं च रश्मीन् करसरसिरुहैर्वेत्रतोत्रं च चक्रं,
गीताचार्योऽखिलेशः समररथगतः पातु नः सूतवेषः ॥

## सम्पादकीया अभिप्रायाः।

### सूर्योदयस्य नवमवर्षम्।

——:⊜:——

परमकारुणिकस्य भगवतः श्रीमतो जगदीश्वरस्य अतुलेन कृपाबलेन सूर्योदयोऽयं स्वीयायुषः अष्टमं हायनमतिवाह्य सम्प्रति नवमेऽब्दे पदं निदधातीति नितरां मोदमेति मानसम्। रागद्वेषनिशाटनं विधुरयितुम्, मोहतमो निराकर्त्तुम्, स्वकीयेन ज्ञानप्रकाशेन तमिस्रोत्पन्नं जडवादकैरवकुलं मूर्च्छयितुम्, विद्वत्कोकान् अशोकयितुम्, रोलम्बरूपान् राजनीतिविदो विपश्चितो मोदयितुम्, सुमनसां मनांसि सर्वतोभावेन मधुरयितुं च सूर्योदयेनैतेन प्रतिश्रुतिराचरिता। तत्र सफलोऽयं नवेति दोषज्ञाः प्रमाणम्। किन्तु वयमपीदं वक्तुं शक्नुमो यत् यादृशो दुरदृष्टसमयः समयः सुरसरस्वत्याः, संस्कृतसभ्यतायाः, सनातनधर्मस्य च कृते समायातः, तत्र सूर्योदयेन बहूपकृतम्। एतेन बहूनां विद्यार्थिनाम्, विदुषाञ्चाधिमानसं संस्कृतभाषायाम् प्रसृमरं प्रेम प्रकटितम्, संस्कृतसभ्यतायाम् सुदृढो विश्वासः समुद्भावितः, भगवति सनातने धर्मे च परमा प्रीतिः प्रादुर्भाविता।

इदमपि सर्वेषामेव सुधीधौरेयाणां परमं प्रमोदस्थानं यत् सूर्योदयो हि देवभाषोपनिबद्धान् अलभ्यान् ग्रन्थानपि प्रकाशयति, यतः सर्वैरेव सामयिकैः सह स्थायिनो लाभा अधिगम्यन्ते । अयं किल सूर्योदयो वर्षद्वयमध्ये त्रीणि पुस्तकानि प्रकटय्य संस्कृतप्रणयवतां विपश्चित्प्रवराणामन्तिके प्रहितवानस्ति । तेषां नामधेयानि यथा—कर्ममीमांसादर्शनम्, पुराणरहस्यम्, दैवीमीमांसादर्शनम् चेति । तेषु कर्ममीमांसादर्शनं तु सम्पूर्णतां गतम् । पुराणरहस्यमपि परिपूर्णप्रायमेव । पुराणरहस्येऽत्र केवलमार्कण्डेयपुराणस्यैव शङ्कानां समाहितयः सन्ति । एवं प्रकारेण अन्येषामपि पुराणानां शङ्कासमाधानं भविष्यति प्रकाशितं भविष्यति । दैवीमीमांसादर्शनस्य कियानेव अंशः प्रकाशितः; तद्दर्शनस्यावशिष्टो भागस्तु वर्षं यावत् केनापि विघ्नविशेषेण निरुद्ध आसीत् । स च विघ्नो निराकृतः । अवशिष्टो भागः पुनः प्रकाशमेष्यति ।

भारतेऽत्र प्रायशः संस्कृतपत्राणामभाव एव जागर्त्ति । कानिचिदेव संस्कृतपत्राणि दृष्टिगोचरतामापद्यन्ते । अस्य सूर्योदयस्य जन्मदिनमारभ्य बहूनि संस्कृतपत्राणि निर्गतानि, किन्तु अस्माकं दुर्भाग्यविलसितेन बहूनां नामशेषोऽभूत् । परमकारुणिकस्य जगदाधारस्य कृपाकटाक्षमाश्रित्य सूर्योदयो हि स्वकीयं बाल्यजीवनमतिवाह्य कैशोरावस्थायां पदमर्पयति । भगवान् भूतभावनस्तथा कृपां विदध्यात्, यथा एष स्वकीयानि जगद्धितकराणि शुभोद्देश्यानि पूरयन् चिरजीवी भवेदिति ।

---

## साधुवादानर्पयामः ।

नास्ति तिरोहितमिदं केषाञ्चिदपि महानुभावानां यत् समाचारपत्राणां जीवनाधारा अनुग्रहग्रहिला ग्राहकमहाभागा एव भवन्ति । ग्राहकमहोदयानां दयाऽभाव एव पत्रप्रणाशस्य परमो हेतुः । सूर्योदयाविर्भावदिवसादारभ्य साम्प्रतं यावत् बहवो हि विपश्चिदुत्तमाः विद्यार्थिसत्तमाश्च सोढं सोढमपि द्रव्याभावक्लेशसहस्रं 'सूर्योदय'स्य ग्राहकतामङ्गीकृत्य देव्याः संस्कृतसरस्वत्याः प्रसारे परमं साहाय्यमन्वतिष्ठन् । संख्यातीताः किल संख्यावन्तः स्वयं ग्राहकत्वमङ्गीकुर्वन्तः अन्यानपि निजान् बन्धुबान्धवान्, प्रेयसः सुहृदः, छात्रादीन् एतस्य असंख्यान् ग्राहकान् अनुतिष्ठन्तः सर्वातिशायिनीं दयां विहितवन्तः । अपरे च परःशताः प्रेक्षावन्तः समयाभावे सत्यपि यथासमयं स्वकीयसर्वोत्कृष्ट-

प्रबन्धप्रदानेन सूर्योदयमनुगृहीतवन्तः सन्ति। वयं किल निखिलेभ्य एव पण्डित-प्रकाण्डेभ्यो, ग्राहकानुग्राहकेभ्यो, विद्यार्थिसार्थेभ्यो, लेखकपाठकेभ्यः संवाद-प्रेषकादिभ्यश्च सादरं, सविनयं, सबहुमानपुरस्सरं च संख्यातीतान् साधुवादानर्पयामः।

---

## स्तुत्यः प्रयत्नः।

—:*:—

सर्व एव सचेतस इदमामनन्ति यत् राष्ट्रभाषासमुन्नतिमेव बाहुल्येन भारतराष्ट्राभ्युदयो निर्विभर्त्ति, यत्र राष्ट्रे सन्ति बहवो भाषाः, सर्वाश्च ताः राष्ट्रियभाषापदमारोढुं परस्परं विवदन्ते स्पर्द्धन्ते वा तस्य राष्ट्रस्य समुन्नति-र्दूरापास्ता। बहवो हि संस्कृतसुधीधौरेयाः संस्कृत्रिमां वाचमेव सर्वविधगुण-गणसंयुक्तां मन्यमानास्तामेव भारतराष्ट्रसिंहासनमारोपयितुमभिप्रयन्ति। वयन्तु सुरसरस्वत्याः सर्वभाषातिशायिनीं योग्यतामभिमन्यमाना अपि राष्ट्रभाषास्पदे हैन्दवीं वाचमारोपयितुमेव वाञ्छामः। कदाचिद् भारतवर्षस्य आसीत्तादृशः समयः, यत्र संस्कृता वाग् राष्ट्रिया जाता, किन्तु नाऽयं कालस्तादृशः। साम्प्रतमत्र भारतराष्ट्रे अनेका जातयो, बहवोऽन्यधर्माणस्तत्तन्मतावलम्बिनो मानवा विलसन्ति। न च सर्वे संस्कृत्रिमायां वाचि तथा बद्धादराः प्रकृष्टप्रेमाणो यथा खलु हिन्दवः। अतो गुणाधिक्ये सत्यपि न वयमत्राननुकूले काले तस्या राष्ट्रभाषात्वसमर्थकाः स्मः। केचन पण्डितसत्तमाः कथयन्ति यत् कदाचिद्देशेऽत्र आसीदार्यजातीयानां मातृभाषा सुरगवीति। नास्माकमयं विश्वासः। वयं तु प्राधान्येन भुवि देवभूतानामार्याणाम्, अन्येषां शिक्षासम्पन्नमानवानां, सूक्ष्मलोकवास्तव्यानां सुरासुराणां च पारस्परिकव्यवहारोपयुक्ता व्यापिका कदाचिदासीत् देववाणीति मन्यामहे। भूमण्डलप्रसरणशीलं संस्कृतसरस्वत्याः स्थानमेतर्हि प्राय आधिक्येन आङ्गलभाषया अधिकृतमास्ते। भारतवर्षेऽपि आङ्गलभाषायाः सुमहान् आतङ्कः प्रसारश्च समवलोक्यते। एतत्कारणमस्मन्मते शिक्षितम्मन्या अस्मद्देशीया एव सन्ति। बहवोऽस्मद्देशवास्तव्या विद्वन्मानिनस्तान् शिक्षितानेव न गणयन्ति, ये मनुतनुजनुष आङ्गलभाषां न जानन्ति। इतः पूर्वं संस्कृतप्रचारस्य प्रबलं प्रयत्नमाचरन्नपि वाराणसेयो राजकीयः संस्कृत-महाविद्यालयीयपरीक्षाविभागः स्वकीयपरीक्षाफलविषयकान् 'गजट' प्रभृतीन् निबन्धान् आङ्गलभाषायामेव प्रकाशयतिस्म। किन्तु एषमो रजिस्ट्रार महोद-

यानां श्रीमङ्गलदेवशास्त्रिणां प्रयत्नेन परीक्षाविषयको गजटाख्यः प्रबन्धो हिन्दी-भाषायां प्रकाशित इति परमं प्रमोदस्थानमस्माकम्। एतस्य कृते शास्त्रिमहोदयेभ्यः तत्सहायकवर्गेभ्यश्च शतशो धन्यवादा दीयन्ते।

---

## भारतस्य गुरुत्वं सुरक्षितं स्यात्।

—:०*०:—

अधुना किल संस्कृतस्य प्रचारे महती बाधा समवलोक्यते। इदानीं हि संस्कृतसरस्वत्या यथार्थतः संरक्षका विद्वत्तल्लजास्तदीयपुत्रा अन्तेवासिनश्च सर्वत्रैव समुपेक्ष्यन्ते! न कोऽपि तेषां दीनां दशां विलोकयति। आबाल्यकालात् जराजीर्णावस्थां यावत् भारतसर्वस्वभूतशास्त्रैकसंरक्षणपराणां स्वस्वगुरुवराणां सर्वत्रैवानादरं वीक्षमाणा अन्तेवसन्तः किमिति संस्कृताध्ययने प्रवृत्ता भविष्यन्ति? पुरा किल संस्कृतसरस्वतीसेवकानां कृते साधीयान् राजप्रबन्ध आसीत्। प्रत्यहमेव राजकर्मचारिण स्तेषां तेषां सुधीधौरेयाणां निवासस्थानानि स्वयमाहिण्डमाना स्तानि तानि जीवनोपयोगकराणि अन्नवस्त्रादीनि बहुमूल्यान्यपि समर्पयन्ति स्म। मध्ये मध्ये स्वयं महाराजास्तत्तद्देशाधिपतयस्तेषां सन्निधानमागत्य बद्धाञ्जलयस्ताननामयमपृच्छन्। एतादृशं नैजगुरूणामादरातिशयमवलोक्य विद्यार्थिनोऽपि सर्वथा निजगुरूननुकुर्वन्तो विद्योपार्जने बद्धपरिकरा बोभूयन्तेस्म। किन्तु सम्प्रति खलु तद्गुरव एव कदाचित्तण्डुलाभावेन, कदाचिद् द्विदलाभावेन, कदाचिदुभयोरभावेन, कदापि इन्धन-लवण शाकादीनामभावेन दुःखमनुभवन्ति! तेषां शास्त्रकचिन्ता साम्प्रतं क्वापि विलीना जाता। विद्यार्थिनोऽपि स्वशिरस्सु समापतिष्यत् चिन्तासन्तानवितानमनुभूय भोजनदानेऽप्यसमर्थां संस्कृतसरस्वतीं दूरत एव नमस्कुर्वन्तो दरीदृश्यन्ते।

भो भो भारतीया धनिकधौरेयाः! नूनं जानन्तु भवन्तो यत् प्राचीनपण्डितैरेव भारतीयं वास्तविकं गौरवं सुरक्षितमास्ते, विदेशीया अपि विद्वांसो हि एतेषामेव व्याकरण-न्याय-वेदान्तादिशास्त्रपाण्डित्यतो बिभ्यति। एतैरेव भारतीयमाध्यात्मिकं ज्ञानम् संरक्षितम्। अतः तथा प्रयतन्तां भवन्तो येन भारतस्य वास्तविकं गुरुत्वं सुरक्षितं स्यात्।

---

## सञ्चालका भृशं निवेद्यन्ते।

—०:※:०—

विहारोत्कलसंस्कृत एसोसिएशनसमितिसदस्याः प्रतिवर्षत्रयं संगृह्यन्त इति जानन्त्येव तद्विदः। अस्मिन् अपि वर्षे तस्य निर्वाचनं भविष्यति। पाश्चात्या पद्धतिरेव निर्वाचनकार्ये समादृतेति खिद्यते चेतः! भारतवर्षस्य परिस्थिति र्न तथेति बहूनां विश्वासः। यद्यपि डिस्ट्रिक्टबोर्ड म्युनिसिपलबोर्ड-कौंसिलप्रभृति-सभानां कार्यसम्पादनार्थं सम्प्रति सैव पाश्चात्या पद्धतिः समाद्रियते, किन्तु संस्कृतवातावरणस्य सा सर्वथा प्रतिकूला। न केवलं संस्कृतस्यैव, प्रत्युत भारतस्य सम्पूर्णस्यापि प्रकृतेः सर्वथाऽनुपयुक्ता। सचेतसो बुद्धिमन्तो विद्वांसः स्वमुखेनैवात्मप्रशंसां कुर्वन्तो द्वारं द्वारमाहिण्डमाना वोटभिक्षां न याचन्ते! अत एव पूर्वोक्तासु तासु तासु राजकीयप्रबन्धसभासु सत्यसेवापरायणानां सदस्यानां प्रवेशाभावात्, तत्रत्यानि कार्याणि न साधीयांसि सम्पद्यन्ते! दण्डादण्डि, हस्ताहस्ति, केशाकेशि प्रभृतिकलहमन्तरा कुत्रत्यमपि निर्वाचनकार्यं न सम्पद्यते, अयोग्या अपि इतस्तत आत्मानं प्रख्यापयन्तस्तादृशसभासु प्रविशन्तः कार्याणि विगुणयन्ति। प्राधान्येन संस्कृतज्ञा विद्वांसो न कुत्रापि आत्मप्रशंसां कुर्वन्ति, साधीयांसः संस्कृतसरस्वत्या मर्मज्ञाः सचेतसः सुधियो न कदापि कथमपि वोटभिक्षार्थं कमपि निवेदयिष्यन्ति। एतद् विना प्रवेश एव दुर्लभः। अतो मया एतादृशपद्धतिपरिवर्त्तनार्थं विहारोत्कलसंस्कृतसमितिसञ्चालका भृशं निवेद्यन्ते!

---

## 'शिवराजविजय'तः संकलितस्वरूपः सन्तापः।

—:०:—

अहह! कथमिव समायातोऽयं दुर्भाग्यमयः समयः सनातनधर्मस्य यद्, यत्र गरुडाङ्किता महाध्वजाः समुद्धूननै र्गगनतलोद्धूयमानपवनमपावयन्, तत्र विस्रगन्धिनो विविधसाञ्चारिकरोगनिदानभूता वीथिप्रणाल्युध्मानधूमध्वजा भारताभिजनसघनकलङ्का इव समुद्धूयन्ते; यत्र कोटिजन्मार्जितमहापातकदीर्घदावदावानलज्वालामालाभिरिव हरिहरनामघोषणाभिर्व्यापूर्यत वसुधा, तत्र कर्णकषाया श्रीतकारमयाः शिवविष्णुनिन्दानादाः कर्णौ स्फोटयन्ति; यत्र कदा जन्माष्टमी? कदा रामनवमी? कदैकादशी? कदा प्रदोषः? इति पृच्छा समश्रूयत पण्डितमण्डलेषु, तत्र हि कदा मोहर्रमः? कदा रामयानम्? कदा कृष्ट-

मासः ? कदा ईस्तरः ? इत्यादिरनवरतमाकर्ण्यते विरामकुतुकानां विनोदैक-लालसानां विमुक्तपरमपुरुषार्थानामस्मद्देशीयानां प्रश्नविन्यासः; यत्र विपणिषु सर्वदा द्राक्षा रम्भा, आम्राणि नारिकेलानि दाडिम्बानि, बीजपूराणि, जम्बीराणि, लिकुचानि पनसानि च व्यक्रीयन्त, तत्राऽधुना वर्तिका स्तित्तिराः, कुक्कुटा लावाः कलविङ्काः, सारसाः श्येना उलूका स्तत्तद्रक्ताश्च विक्रीयन्ते; यत्र पुन विशालतिलकाः कलितरुद्राक्षतुलसीकमलाक्षमालिका ऊर्णाकौशेयमात्रपवित्र-वसनाः काष्ठपादुकारोहिणो भगवन्नामामृतरसरमनरसिकरसना-विहिततीर्थसा-र्थसञ्चरणचरणाः स्वोचिताचाराचरणमात्रव्यसनिनो महात्मानः सप्रश्रयं सस्तवं सपादस्पर्शञ्च प्राणम्यन्त, तत्र त एवाऽधुना वीथिषु राजपथेषु, तडागतटेषु उद्यानेषु, विपणिषु समाजेषु च, महामांसढक्कारपूतिगन्धसम्बन्धान्धीकृतपारि-पार्श्वकैः, चिरजलानवगाहनोद्भूतमहामलावलिमलीमसैः, मद्य स्वेद-निष्ठ्यूत कर्णकिट्ट-सिङ्घाण-दूषिकादि विविधमलमलिनचिराक्षालितमलिनवसनैः, आजानु-परिधृतदीर्घचर्मोपानद्भिः, वारवधूच्छिष्टभोजिभिः, दुराचारहतकैर्बन्धुभिरेव सगर्वं साहङ्कारं सोन्मादं च अवहेल्यन्ते, अवधीर्यन्ते गालिप्रदानपुरःसरं तिर-स्क्रियन्ते,क्वचन ताड्यन्ते, निःसार्यन्ते च ! समायातोऽयं घोरः कलियुगो, नाऽत्र संशयः । हन्त ! यै दुराचारहतकै र्दशाऽप्यवलोकितमन्नादि, अस्मत्पूर्वजैर्महा-नुभावैः, शुनकेभ्यो वितीर्णम् , तैरेव व्रात्यापसदैः साकमधुना, एकपङ्क्तौ, एकासने, एकभाजन एव, गौरवबुद्ध्या तादृशमहाकुलप्रसूतैरेव भुज्यते ! ये चाऽस्मत्सनातनधर्माचारनिन्दकाः सजिह्वाच्छेदमस्माकं पूर्वपुरुषै रार्यसमया-न्निरवासिषत, त एवाऽधुना राजास्थानेषु, नागरिकसमाजेषु, पण्डितपरिषत्सु च साऽञ्जलिजयध्वनिसन्तोषकरघोषपुरःसरम् अभिवाद्यन्ते, अभिनन्द्यन्ते, सश्लाघमनुमोद्यन्ते च !

अहो ! सम्प्रत्यपि बहवः साधवः, पाश्चात्यदुर्मतदुराचारदुर्मर्यादाभूत-प्रेतपिशाचिकाग्रस्तैः शिरोमुण्डन-कञ्चुकधारण-दीर्घोपानद्ग्रहणादिभिरेव स्वान् नवनागरिकशेखरान् मन्यमानाः आर्यपदानर्हैः हिंस्रपसदृशापदैः सहठा-त्कारं सर्वथा परिभूयमाना अपि, व्याघ्रवदनाघ्राणसाहससोदर्यसाहसोपबृंहिताः कृपाणधारास्विव धावमानाः प्राणानप्यगणयन्तः, "शिव राम गोविन्द ! हरे दामोदर महादेव !! नारायण वामन वैकुण्ठ रमापते गौरीपते !!!" इत्यादीनि सकलकलिकल्मषापनोदनपटूनि, अधरीकृतसुधामाधुर्याणि, सवीणावादं नारदेन रसनीयानि भगवन्नामानि उच्चारयन्तः कलितपरमपवित्रवेषाः विमुक्तराग-द्वेषाः तत्तत्कुलाचारसम्प्राप्ततिलकपुण्ड्रचूडादिधारणपवित्रीकृतसकलगात्राः,

सहमाना अपि वाचाटानामेतेषां दुराचारहतकानामरुन्तुदा वाचः, कथं कथमपि स्वधर्मं निर्वहन्ति ! हा ! धिगस्मान्, ये दुराचाराणामेतेषां ईदृशमात्मधिक्कारं ईक्षामहे ! सहामहे !! जीवामश्च !!! आः ! ग्रहा एव प्रतिकूलाः ! विधिरेव वामः ! समय एव अशुभमयः ! अदृष्टमेव निकृष्टम् ! भवितव्यमेव निन्दितव्यं सनातनधर्मस्य ! अन्यथा कोवा दार्शनिकंमन्यः सकलभारतीयसनातनधर्ममूलभूतानां अद्वैत-विशिष्टाद्वैतरूपाणां त्रिविधब्रह्ममीमांसादर्शनानामेकतमस्याऽपि सिद्धान्तलेशस्य लेशमपि निराकर्तुमलम् ? परन्तु ऐक्यमेव न भवत्यस्माकं विमतस्थानां सनातनधर्मसर्वस्वानुयायिनामपि ! यदि नाम सर्वेऽपि भारताभिजनवैदिकवराः सह युञ्जीरन्, तद्वयं क्षणेन पारावारमपि मरूकुर्मः । स्वजातीयबन्धुभिरेव कृतवैराणां परजातीयमहाशयैः सोपहासं बहिष्कृतानामुभयभ्रष्टानां भारताभिजनसमयाचारपरिष्कारकंमन्यानां दुराचारहतकानामेतेषां प्रशमनन्तु को नाम कठिनो व्यापारः ।

हा भारत ! किं दुराचारहतकैरेव भोक्ष्यसे ? हा वसुन्धरे ! किं दीनप्रजानां रक्तैरेव स्नास्यसि ? हा सनातनधर्म ! किं विलयमेव यास्यसि ? हा चातुर्वर्ण्य ! किं कथावशेषमेव भविष्यसि ? हा मन्दिरवृन्द किं धूलिसादेव सम्पत्स्यसे ? हा साङ्गवेद ! किं भस्मतामेव प्राप्स्यसि ? अहह धिग् ! धिग् !! रे कलिकाल !! यस्त्वं सत्यं रत्नकानेव भल्लकान् विदधासि ! हन्त भगवन्, महति दुराचारे प्रवृत्ते, धर्मसंस्थापनार्थमवतरामीति प्रतिज्ञातवानसि । तत् किमितोऽप्यधिकतरं दुराचारपेक्षसे ? अहह ! परः कोट्यो देवतामूर्तयः प्रमदवनेषु कौतुकागारेषु प्रदर्शनस्थलेषु च क्रीडामूर्तयः कल्प्यन्ते ! असंख्यानि देवमन्दिराणि विहारमन्दिराणि क्रियन्ते ! अनन्तसंख्या पुण्यभूमयः आपानभूमयः सम्पद्यन्ते ! राशीकृतानि वेदादिपुस्तकानि कीटदग्धानि प्रमादज्वालाजालै र्ज्वल्यन्ते ! कुलीनानामपि कन्यकाः कदर्यहतकैः कुत्सिताभिप्रायेण स्वमतादूबलादाच्छिद्यन्ते ! विधवोद्वाहानां, प्रौढाविवाहानां, असवर्णस्त्रीपुरुषविवाहानां, विजातीयपङ्क्तिभोजनानां, विमतावलम्बनानां, विप्रतिषिद्धविदेशगमनानां, मांसभक्षणानां, मद्यपानानां, धूमपत्रानुसेवनानां, चूडापुण्ड्रादिविहितकर्मपरित्यागानां, विदेशीयदुराचारादिनिषिद्धकर्मपरिग्राहाणां च क्रीडा इव क्रियन्ते ! भगवन् ! नाऽधुनाऽपि तव हृदये दया सञ्चरति ? प्रभो ! किमिति 'दीनबन्धु' पदेन सम्बोध्यसे ? यासां भारतीयप्रजानां दीनतामवलोक्य ग्रावाणोऽपि रुदन्ति, तासामुपरि करुणामयीं दृष्टिमपि न क्षिपसि ! हन्त कियच्छयिष्यसे ? अहह ! अस्माकं महाक्रन्दनकोलाहलैरपि न विद्राव्यते तव निद्रा ?

हा ! तवापि कथं व्यामोहः ? गरलं तु धूर्जटिना पीतम्, मधु च दानवै रास्वादि, किन्तु चित्रं यदेव विलक्षणस्त्वयि दृश्यते व्यामोहः ! त्वं हि राजप्रासादो वा, क्षीरसागरो वा, दन्तिदन्तपर्यङ्को वा, कुण्डलिराऽनन्तभोगाभोगो वा, इति किमपि न वेवेक्षि । आपीतफणावलिफूत्कृतैरिव वीज्यमानः, विमलकमलोदरसोदर, सौन्दर्याभ्यां कमलकोमलकमलाकरतलाभ्यां पादयोः पीड्यमाना निःशङ्कं तस्मिन्नेव कोमलतमेऽपि शेषे शेषे ! तत् किं जगतः शेषे तव निद्रया भङ्क्ष्यते ? अथवा तस्यैव महागरलस्य महामद्यस्य च भगिन्या कनकाङ्गिन्या समालिङ्गित इति, पन्नगकुलमूलस्य शेषनागस्य गरलावलीढै र्निश्वासैः प्रतिरोमकुहरं रञ्जित इति च कलयसि काञ्चन मूर्च्छां मत्ततां च ? कथमन्यथा, क्षीराब्धिवेष्टित एव, क्षीराब्धिकन्यया रमेथाः !

किन्तु, मैवम् ! क्षमस्वैनामनल्पजल्पकल्पनाम् !! सर्वत्रैवाऽसि, सर्वान् पश्यसि, सर्वं वेत्सि सर्वेषु दयसे, इति सन्त्यत्र परः सहस्राणां प्रमाणिकानां वचनानि ! येषु विश्वस्य तव सत्ता अङ्गीक्रियते, कथं तेष्वेव विश्वस्य, तवेदृग्गुणिता नाऽङ्गीकरिष्यते ? परं अहह ! पश्यन्नपि, विदन्नपि न दयसे ? हन्त ! किं कथ्यते, जगदीश्वरोऽस्मि ? तत् किं गजोद्धारधावनस्थगितोऽसि, यन्न धावसि ? विप्रचरणहननघनवासत्रीडितोऽसि यन्नाऽवतरसि ? कंसच्छेदनायासस्मरणेन तूष्णीकोऽसि, यदभयं न ददासि ? चिरन्तन इति वलीपलित विग्रहो वा सम्पन्नोऽसि यन्नाऽऽविर्भवसि ? न ज्ञायते तत्त्वम् ! यादृशस्त्वं तादृशमेव वयं नमस्कुर्मः । प्रभो, प्रणतार्तिहर, दयस्व ! दयस्व !! वरदराज, वन्दारुजनमन्दार, क्षमस्वाऽस्मान् ! क्षमस्व !! हा गदाधर ! कदा तव कौमोदकी मोदं जनयिष्यति ! अहो शार्ङ्गपाणे ! कदा तव चापस्तापं विलयं यापयिष्यति ? अहो सुदर्शनोज्ज्वल ! कदा तव चक्रं दुष्टचक्रं चङ्क्रमिष्यते ? अहो नन्दनन्दन ! कदा वा तव नन्दकः साधुवृन्दान् नन्दयिष्यति ? मा स्म, भगवन्, अस्मदपराधान् स्मार्षीः । पाहि !! परमात्मन् पाहि !!!

———

# जनताया अन्धपरम्परा-परत्वम्।

—०:*:०—

प्रणेता—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री।

('मुलतान'स्थ-स० ध० सं० कालेजाऽध्यापकः)

"सनातनधर्म्मा(१) जनता प्राचीनरूढीरुपासीना (२) अन्धपरम्परा-परा वर्त्तते" इति हि वक्ति वर्त्तमान 'सुधारक' व्यपदेश्यानां कदाचित् प्रवादः। परन्त्वयत्वे तु स तेष्वेव प्रसक्तो दरीदृश्यते। भेदोऽत्र केवलमयमेव लक्ष्यते; यत्—'सनातनधर्म्मा जनता प्राक्तनानां भविष्यद्-द्रष्टॄणामृषीणां वचनानि आयतीशुभावहानि मत्वा तानि समनुतिष्ठति स्म; परमद्यत्वे तु वार्त्तमानिकजनानां वचांसि उदर्कशून्यानि प्राचीनताशश्रूयितानि प्रजायत्यपि विचारशून्या सुधारकजनता तानि सर्व्वतो मन्वाना 'अन्धेनैव नीयमाना यथाऽन्धाः' इति वाक्यं चरितार्थयति।

मद्विचारेणेयं वर्त्तमानक्रान्तिः खलु राष्ट्रिय(३)परिषत्कर्णधारस्य गान्धि-महोदयस्य नेतृत्वे १९१९ ईशवीयाऽब्दतः प्रारब्धा। स्मर्य्यताम्—'गान्धि' महोदयेन प्राग् जनता 'सत्याग्रह' पाठं पाठिता(४)। तस्मिन् समये गान्धि महोदय 'व्यक्तित्व' प्रभावेण सत्याग्रहशब्दो विश्वद्र्यङ्(५)जातः। जनताऽपि च तद्भावभाविता तादृश्येव कर्म्माणि तन्वाना तत्सेवने प्रसिता जाता। केचित् तदर्थं 'सत्याग्रह' साहित्यं प्राचीचरन्; केचन तु तद्विषये व्याख्यानाख्यानं कुर्व्वाणा दृष्टाः, एके च तदर्थमन्यविधकर्म्माणि कुर्व्वन्त आलोकिषत। परं तस्य फलं किञ्जातम्—कथं वा तस्य 'सत्याग्रहस्य' दुर्विपाको जातः, कथं

---

(१) सनातनधर्म्मा। 'धर्म्मादनिच्'। नान्तत्वात् प्राप्तं ङीपं 'मनः' 'अनो बहुव्रीहे' रिति वा निषेधति। 'अन उपधालोपिन' इति ङीप् तु न; 'न संयोगाद्वमन्ताद्' इत्युपधालोपनिषेधात्।

(२) उपासीना। उपोपसृष्टादास्तेः कर्त्तरि शानचि 'ईदासः'।

(३) राष्ट्रियेति। 'राष्ट्राऽवारपाराद् घखौ' इति घः। 'आयनेयी—' इति इयादेशः। १९१ पृष्ठे मल्लेखे 'राष्ट्रीय' इति मुद्रकाणां प्रमादान्मुद्रितम्।

(४) जनता पाठं पाठिता। 'शब्दकर्म्मकाणां निजेच्छया' इति गौणे कर्म्मणि क्तः। प्रधाने तु 'जनतां पाठः पाठित' इति भवति।

(५) विश्वद्र्यङ्। विश्वमञ्चति। विश्वशब्दस्य सर्वनामत्वाद् 'विष्वग्देवयोश्च' इति च शब्देन—टेरद्रिः।

वाऽनुतापं बिभ्राणो गान्धिमहोदयः 'सत्याग्रहा'ऽवग्रहं व्यदधात्—जनताश्च तस्मिन्ननधिकृतताममन्यत–इति न परोक्षं तात्कालिकपरिस्थितिविदां विदाम् ।

पुनश्च तेनैव महोदयेन स्वमौनेनाऽपरितुष्यता 'स्वराज्य' साधनं 'हिन्दु-माहम्मदयोः पारस्परिकमैक्यम्' उद्घुष्टम् । जनताऽपि च 'गताऽनुगतिका' जाता । केचन तदा 'अल्लाहो अकबर' इति तारस्वरेण जोघुष्यमाणा दृष्टाः, अपरे यवनैः सह भुञ्जाना आलोकिषत । हन्त ! यैः स्वजन्मतःप्रभृति कदाऽप्येकादश्यादिव्रतोपासना(१)नाऽक्रियत; त एव महाशयास्तदा 'रोजा'दिमाहम्मदव्रतान्युपासीना अदृक्षत(२) । निर्ज्जलैकादश्याद्यवसरे ते यवनान् सितामिश्रितजलं पाययन्तोऽपि निध्याताः । यदा कोऽपि सनातनधर्म्मा तान् 'स्वजातिर्दुरतिक्रमा' इति प्रबोधयति स्म; तदा ते तं स्वराज्याऽन्तर्गडुलं मत्वा घृणास्पृशा दृशा वीक्षन्ते स्म । परं तस्य परिणामः कीदृशी जाता इति नाऽप्रत्यक्षं तादृशे समये वर्त्तमानानाम् । तैरेव यवनैः पुनर्हिन्दव ईदृशं पाठं पाठिताः, यदधुना कोऽपि सुधारको हिन्दुयवनानामेकतां केनाऽप्यभिधीयमानां न मृष्यति, यवनजातिश्च स्वशत्रुं मन्यते । अस्तु ।

तदुत्तरं गान्धिमहोदयेन 'स्वराज्य' साधनम् 'असहयोगः' स्वान्तःकरणात् प्रचालितः । तस्मिन्नपि समये तदीयवैयक्तिकप्रभावेण मुग्धाऽन्धा जनता तदनुकरणप्रवणाऽजनि । केचिद् राजकीयभृतीस्त्याक्षुः, अपरे कारागारं निजागारं व्यधिषत, इतरे व्याख्यानमञ्चे तद्विषये चीत्कुर्व्वन्तो निभालिताः, एके च तद्व्याजेन समाचारपत्राणि प्रचाल्य तद्विषयकलेखाँल्लिखित्वा स्वकीयसमाचारपत्रं प्रचार्य्य स्वोदरपूरणं कर्त्तुमुद्येमिरे । फलतस्सर्व्व एव गड्डलिकाप्रवाहवत् तदनुगच्छन्तोऽवलोकिताः । परं परिणतिसमये सोऽपि प्रस्तावोऽनुत्तीर्णोऽभवत् । बहूनां वराकाणां जीविका गता; बहवो वराका बन्धनादिहानीः प्राप्नुवन्; अनल्पाः (३)क्षतक्षतवपुष्का जाताः । परं गान्धिमहादयो जनताया एव मौर्ख्यमपिशुनयत् खेदं प्रकाश्य च 'असहयोगम्' (Non-co-operation) न्यवीवृतत् ।

(१) व्रतशब्दो दन्त्योष्ठ्यादिर्भवति । परं मुद्रकास्तु बवयोः साङ्कर्यं कुर्व्वन्ति ।

(२) अदृक्षत । दृशेः कर्म्मणि लुङि बहुवचनम् । 'न दृशः' इति क्सनिषेधात् सिच् । 'लिङ्सिचा–' इति किस्वादयोऽभावः । चिण्वद्भावाऽभावे इदं रूपम्; अन्यत्र 'अदर्शिषत' इति ।

(३) अनल्पाः क्षतेति । अत्र जिह्वामूलीयविसर्गस्तु न, 'शर्परे विसर्जनीय' इति शर्परकखरि विसर्गस्य विसर्गताया एवोपदेशात्; तेन क्षकारे जिह्वामूलीयोऽक्षन्तव्यः ।

कतिपयदिवसपर्य्यन्तं जोषमासीनो गान्धिमहोदयः पुनरपरं प्रकारं स्वराज्यप्राप्तेः 'सविनयाऽऽज्ञाभङ्गं' प्राचकटत् (१) स्वोदरदरीमुखात्। पुनर्जनताऽपि तदनुगता कारागारं 'कृष्णसदनं' मन्वानाऽपि तं नियमं परिणतौ विषं जानाना तस्माद् विरता बभूव।

पुनर्बहुसमयं यावन्मौनं बिभ्राणो गान्धिमहोदयो भूयो लवणनिर्म्माणं स्वराज्यसाधनमामनत्। बहव एव एतत्कर्म्म प्रारभन्त। केचिच्च तदर्थं स्वजीविकाहानिं कुर्व्वाणाः कारावासगमनेऽपि बाध्या जाताः; परमिदमान्दोलनमपि अधुना मृतमिव जातम्। इदानीं हि गान्धिमहोदयो यरवदाकारागारमधितिष्ठन् स्वपूर्वप्रकृतिमनुसरन् स्वमौने स्वप्रभावलाघवमिव मन्वानः पुनर्नवीनं स्वराज्यसाधनम् 'अस्पृश्यता-दूरीकरणम्' प्राचकाशत्। स्व'व्यक्तित्वप्रभावं' जनतायां दृष्ट्वाऽस्पृश्यतादूरीकरणस्योपायम् 'उपवासम्' अकार्षीत्। दयालुहिन्दुजनता 'अयं मृतो माभूद्' इत्यनिच्छन्त्यपि तद्वचनमूरीकृत्य अस्पृश्यतोपेक्षायां संलग्ना। अधुना एतत्परिणतिस्तु भविष्यद्गर्भे विलीना वर्त्तते। तथाऽप्यत्रैतदेवाऽनुमातुं शक्यते; यदिदमपि साधनं प्राक्तनसाधनराशिरिव सखेदं निवर्त्तयितुमापतिष्यति। अधुनाऽनेन नव्यसाधनेनाऽयं लाभो भवन्नास्ते; यद् हिन्दूनां परस्परं भेदो वृद्धिमासीदिति(२)। धर्म्मो विहन्यते, भेदेच्छुकानामभिलाषाः पूर्य्यमाणा निभाल्यन्ते। अस्पृश्यानाञ्च मस्तिष्कमुन्नतं क्रियते। अस्पृश्यता दूरीकरणाऽर्थकेनाऽनेन प्रयासेनाऽधुनाऽस्पृश्याः स्पृश्या भवन्ति; स्पृश्याश्च पुनरस्पृश्या भविष्यन्ति। ते (अस्पृश्याः) आपणिका भविष्यन्ति; इमे च ( स्पृश्याः ) मलवाहका भविष्यन्ति। एवन्तु अस्पृश्यता स्थिरैव भाविनी(३)।

अथाऽवसरप्राप्ताऽस्पृश्योद्धारसम्बन्धेऽत्र विमृश्यते किञ्चित्। नेतृमानिनोऽभिदधति; यदस्पृश्यता केनाऽपि शास्त्रेण नोरीकृता। यदा तत्र शास्त्र-

(१) प्राचकटत्। प्रकटमकार्षीत्। अत्र टेलुंसत्वादग्लोपित्वेन न दीर्घसन्वद्भावौ। 'प्राचीकटत्' इति तु प्रोपसृष्टात् कटतेः। तस्य लटि 'प्रकाटयति' इति। नामधातोस्तु लटि 'प्रकटयती' ति। अल्लोपस्य स्थानिवद्भावान्न वृद्धिः।

(२) स्मर्य्यतामत्र हरिद्वारेऽर्द्धकुम्भिकाऽवसरे मालवीयमहोदयस्य श्रीशङ्कराचार्य्यमहोदयानां च विसँवादः। एवमन्यत्र।

(३) एतन्निबन्धाऽवसरेऽस्माभिः श्रुतं यच्छ्रीगान्धिना पुनरस्पृश्यतादूरीकरणार्थमुपवासः प्रारब्धः। परमत्र वयं तद्-बालचापलं पश्यामः। इयमप्येका हिंसैव; यत् स्वोपवासद्वारा हैन्दवसिद्धान्तान् स आहन्ति अहिंसावादिम्मन्यः।

वचनान्युपन्यस्यन्ते; तदा ते कथयन्ति-'प्रक्षिप्तमिदम्' । इदमेवोत्तरं दत्त्वा कृतकृत्यम्मन्या भवन्ति । इदमुत्तरं स्पष्टमेव तेषां दौर्बल्यमाचष्टे । इममुपयुक्ताऽवसरमासाद्य आर्य्यसामाजिकैरपि कोलाहलः प्रारब्धः । परं तेषां नेता स्वामिदयानन्दसरस्वती तु अस्पृश्यतामन्ताऽऽसीद् । एतद् यैर्दिदृक्षणीयं स्यात्; तैर्मूलत्राणनिवासि-गोस्वामिवर्य-श्रीयदुकुलभूषणशास्त्रिकृतं 'अछूत और आर्य्यसमाज' नामकं पुस्तकमानाय्य द्रष्टव्यम् । तत एव (१)एकद्व-प्रमाणोद्धारः क्रियते—

'अग्नये पीवानं पृथिव्यै पीठसर्पिणं वायवे चाण्डालम्............'यजुः अ० ३० मं० २१, अस्य मन्त्रस्य दयानन्दकृतभाष्ये 'वायवे चाण्डालम्' इत्यंशस्य 'वायुके स्पर्शके अर्थ भंगीको दूर कीजिये' इत्यर्थः कृतो वर्त्तते । दयानन्दकृतभावार्थे-('भङ्गीके शरीरमें आया वायु दुर्गन्धयुक्त होनेसे सेवने योग्य नहीं होता') तु स्फुटमेवाऽस्पृश्यता साधिता । एतदध्यायीयसप्तममन्त्रस्य भावार्थे तेन 'चाण्डालादिको दूर बसावें' इति व्यक्तीकृतम् ।

अथ च 'अस्पृष्टा अस्पृश्या यवना भविष्यन्तीत्यत एव अस्पृश्यता दवयितव्या' इति नेतृम्मन्यानां कथनमपि न विचारचारु । यद्यद्य ते स्पर्शार्थमिमां विभीषिकां प्रददति, (२)तदा अन्यदा ते भोजनविवाहसम्बन्धादिकार्थमपि विभीषिकां प्रदास्यन्ति; तर्हि किं भवन्तो मंस्यन्ते । तान् भवन्तो यवनान् भवतो वीक्ष्य स्वा बालिकास्तेभ्यः प्रदास्यथ ? 'त एवं न करिष्यन्ति'-इदमपि न शक्यं वक्तुम् । यथा प्राक् तेषां मन्दिरप्रवेशाद्यान्दोलनं स्वप्नेऽप्यस्माभिर्नाऽनुभूतं तदेवाऽद्य नेतॄणां कृपया दृश्यते । तथेदमपि परस्ताद् द्रक्ष्यते । ते च ( नेतारः ) इममुद्यमं केवलं हिन्दूनां सङ्ख्यावृद्ध्यायैव कुर्वते; तर्हीदृश्या सङ्ख्यावृद्ध्या को लाभो ययाऽस्माकं विधर्म्मिभ्यो भेद एव नाऽवतिष्ठेत । हिन्दूनां सङ्ख्या हिन्दुत्व एव वर्द्धिता भविष्यति' एवन्तु अस्माकं यवनेभ्य आङ्ग्लेभ्योऽपि च तर्हि को भेदः, सर्व्व एव हिन्दुसङ्ख्यायां लेखयितव्याः, श्रेयानयमुपायः सङ्ख्यावृद्धौ । परमेतदवश्यं ध्येयम्—

'एकश्चन्द्रस्तमो हन्ति न च तारासहस्रकम्' । अत्र 'सुप्रभात' प्रथमवर्षीयदशमसङ्ख्यायां प्रकाशितो मत्सन्दृब्धः श्लोकोऽपि द्रष्टव्यः—

---

(१) एकद्वेति । एको द्वौ वेति विग्रहे 'सङ्ख्ययाऽव्यया---' इति बहुव्रीहिः । 'बहुव्रीहौ संख्येये' इति डच् । टेर्लोपः ।

(२) एवमेव एतद्विषये गान्ध्यादीनामुपवासोऽप्यनुचितविभीषिकैव । तैस्तु स्वकीयजनतावर्त्तिनः प्रभावस्य दुरुपयोग एव विधीयते । बत !

"अस्पृश्यानाञ्जनानां मनुतनुजनुषः शुद्धिलग्नास्तथा तै-
'रोटीं' 'बेटीं' प्रबन्धं, रतनिजमतयः स्वैक्यसंलग्नचित्ताः ।
व्यर्थस्तेषां प्रयासो नहि शतकमपि क्रोष्टुवर्गस्य किञ्चि-
च्छक्तं कार्य्यं विधातुं भवति खलु यथा केसरिक्षुद्रपोतः" ।

गान्धिमहोदयोऽस्पृश्यताकलङ्कं दिदवयिषति; परमस्पृश्यतया तु येन केन-चिद्रूपेण स्थातव्यमेव । एतद्विस्मयाऽऽस्पदम्—स ( गान्धिः ) तान् अस्पृश्य-तातोऽपसारयति; स्पृश्याँश्चादिशति; यदन्यदीयान् पुरीषालयाँस्ते शोधयन्तु । बत ! समाजे उच्चताऽप्यपेक्षिता भवति नीचताऽपि; सर्व्वं एव उच्चा भवन्तु चेत् साधारणकार्य्याणि कस्तावत् कुर्य्यात् । सर्व्वे बी० ए० परीक्षोत्तीर्णा भवन्तु चेत्; भारवाहक ( कुली ) कृत्यं को विदधीत । नीचा अपि यदि उच्चनिर्विशेषाऽक्रियेरँस्तर्हि तेषां साधारणकृत्यनिष्पादने रुचिरेवा न प्रव-र्त्तेत । इदमेव वैज्ञानिकरहस्यमाश्रित्य चातुर्वर्ण्यं सृष्टं वर्त्तते । यदि नीचो-च्चता कर्म्मणा कृताऽभविष्यत्; तदाऽपि महत्यव्यवस्थाऽभविष्यत् । अत एव जन्मना सा नियमिता । तेन काऽप्यव्यवस्था न भवितुमर्हति । तर्हि वर्ण-व्यवस्थाऽनुसारञ्च येषां ये ये धर्म्मा मताः; तेषां तथैव विधाने समाजस्थितिर-क्षुण्णा भवितुमर्हति । अत एव गीतायां पौनःपुन्येनैव गीतमेतत्—

'स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः' ।
'श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात्' ।
'स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः' ।
'स्वभावनियतं कर्म्म कुर्वन् नाप्नोति किल्बिषम्' ।
'सहजं कर्म्म कौन्तेय ! सदोषमपि न त्यजेत्' ।

मनुनाऽप्युक्तम्—

'वरं स्वधर्म्मो विगुणो न पारक्यः स्वनुष्ठितः' ।

अथ च स्पर्शादिकसौविध्येन भवन्तऽपरस्परं प्रेम मन्वते । तर्हि वालि-सुग्रीवयो रावणविभीषणयोऽकौरवपाण्डवादीनाञ्च किमु परस्परं स्पर्शो न भवति स्म ? किमेते इतरेतरमस्पृश्यं मन्यन्ते स्म ? तर्हि कथमेषु कलह आसीत् ? अथ च ऋतुकाले स्वस्त्रियमस्पृशताम् अपवित्रत्वे स्वपुत्रमप्यस्पृशतां च नऽकिं तैः सह प्रेम नश्यति ?

यदि भवद्भिः सर्व्वेषां शरीरसाम्यमेव दर्शयित्वाऽस्पृश्यानामपि समा-नाऽधिकार आख्यायते; तदर्थञ्च शास्त्राज्ञाऽवहेल्यते; तर्हि किं कारणम् ? भवन्तः स्वभगिन्या विवाहं न कुर्वन्ति ? शरीरसाम्यं तु तत्राऽपि, कथं न तत्र पत्नीवद्

व्यवहरन्ति ? प्रत्युत एतदाख्याने भवन्तोऽस्मभ्यं कुध्यन्ति। तत्र किं कारणम् ? केवलं शास्त्रस्याऽपरिहार्य्यतैव। शास्त्रमाप्तवचनभूतम्। युक्तिभिर्भवन्तः स्वजनकमपि स्वजनकं साधयितुमनलम्भूष्णवः, यतो भवतां न तत्र प्रत्यक्षम्, नाऽप्यनुमानम्। तत्राप्तवचनमेव प्रमाणं भवति, यदयम्भावत्कः पिता। एवमेव परमात्मसिद्धिरपि द्रष्टव्या। तेन यदा भवत्कृते शास्त्रपराङ्मुखताऽश्रेयसी; कथं तर्हि भवन्तोऽधुना शास्त्रविरुद्धमनुतिष्ठन्ति। भवतां कथनमात्रेण शास्त्राणि कथमनृततामेष्यन्ति ? एवं तु वेदोऽपि भवद्भिस्त्यक्तव्यो भविष्यति। परमेश्वरेणाऽसौ रचित इत्यत्र भवतां पार्श्वे न किमपि प्रमाणम्। वेदप्रमाणानि च 'न हि सुशिक्षितोऽपि वटुः स्वस्कन्धमारोढुं पटु' रिति न्यायान्न प्रमाणानि। तत्र भवन्तः स्मृत्यादीन् प्रमाणपदे दर्शयिष्यन्ति, आस्तिक्यं च स्वकीयं दर्शयिष्यन्ति। परमस्मिन्नान्दोलने भवद्भिः स्मृत्यादिशास्त्रं कथमुपेक्ष्यते; कथञ्च नास्तिकताऽवलम्ब्यते ? भवद्विषये तु गोस्वामिश्रीमद्गोकुलनाथमहाराजानाम् अधस्तन्युक्तिर्यद्—"येषामधर्म्म एव धर्मः, दुराग्रह एव सत्याग्रहः, स्वैराचार एव स्वातन्त्र्यम्, स्वमतमेव शास्त्रमतम्, ऐहिकसुखमेव परमानन्दः, सतां मानखण्डनमेव स्वमतमण्डनम्, नियमभङ्ग एव विनयः, अविनय एव सत्यप्रियत्वम्, एव मादिगुणान् धारयन्तोऽपि लोकाऽभ्युदयाय प्रयतन्ते ते, तदेवाश्चर्य्यम्—"। इति सर्व्वांशे घटते।

कथं भवद्भिः काश्चित्काऽर्थवादवचनानि समुपन्यस्य साधारणधर्म्मोऽपाक्रियते; ? 'सामान्यातिदेशे विशेषाऽनतिदेश इति हि न्यायः। इतिहासवार्त्ताः सर्व्वा आचरणीया न भवन्ति; किन्तु विधिवाक्यान्येव आचरणीयानि भवन्ति; अन्यथा द्रौपदीवत् स्त्रीणां बहुपतित्वमपि विधेयम्, रावणवच्च परकीया दारा अप्यपहर्त्तव्याः।

कथनस्येदमेवाऽभिसंहितम्; यत्–प्राचीनैर्ये नियमाः प्रचालिता आसन्; ते धर्म्मस्य वृद्धिकरास्सन्तः पुंसामपि लाभलम्भका अविद्यन्त। तत्प्रमाणमेतदेव; ते परस्कोटिवर्षेभ्यः प्रचलन्तोऽपि अद्याऽपि तदवस्थास्सन्ति। न तैर्नियमैः केषामपि हानिर्भवति; न बन्धनालया गन्तव्या भवन्ति, न जीविका व्याहन्तव्या भवति; न तदर्थं धननाशो विधातव्यो भवति, न तदर्थं समाचारपत्राणां स्तम्भा अत्युक्त्यनृततामिश्रितोक्तिभिः कलुषयितव्या भवन्ति; न वा परिणतौ दुरुदर्कता निध्यातव्या भवति। तैः प्राचीना शृङ्खला न भिद्यते, अत एव काऽप्यशान्तिरपि न भवति; अत एव तेषां नियमानां प्रवर्त्तनं, तदनुकरणं, तदनुगमनञ्च अन्धपरम्पराव्यपदेश्यमपि न हानिप्रापकम्। अद्यतनाना-

मदूरदर्शिनां जनानां तु वचनानि आपातमनोहराण्यपि अनुपदमेव दुर्विलसितानि दर्शयन्ति सन्ति। परमेतत् प्रजानती अपि जनता तेषां वचनान्यनुगच्छन्ती अनुकुर्वती च धर्म्मपराङ्मुखतायै अपि उद्‌यच्छते। अत एव कथं न(१)वदाम; यदियं सुधारकजनतैव अन्धपरम्परा-परा; न किल सनातनधर्म्मा तादृशी। अन्ते लवपुरीयसंस्कृतपत्रे 'उद्योत' दशमसङ्‌ख्यायां (जनवरी सन् १९२९) 'हैन्दवसङ्‌ख्याह्रसिम-निदानविमर्श' इति स्वकीयनिबन्धस्याऽन्ते प्रकाशितं स्वसन्दृब्धमेव वचनमुद्‌धृत्येमं लेखं समापयामि। तदित्थम्—

"अद्यत्वेऽस्माभिर्हिन्दुष्वेतदनुभूतमेव, यत् पश्चाऽब्दयुत्तरमेव एषां विचारवैचित्र्यं जायते। यदा यैव एषां विचारधारा प्रसरेत्; सैवैषां दृष्टिकोणे 'धर्म्मो' भवति। सैव एषां 'वेदे' दृश्यते। प्राचीना एषां रूढयश्च नवीनतां स्पृशन्ति; नव्याश्च प्राचीनतां गाहन्ते। एवमेव जातायां सत्यां विचारधारायाम्; एतद्रोधे चाऽननुष्ठिते सति—'सत्यं वदामि—' इयमार्य्यजातिर्नाम-मात्रेणैव इतराऽनार्य्यजातिभ्यो भेदं स्पर्द्धयति; इयञ्च सर्व्वाऽवस्थास्वेव आङ्गलाद्यनार्य्यजात्यन्तर्ल्लीना सती स्वस्वरूपं स्वसत्ताञ्च च्यावयिष्यति। नेयं वैशद्याऽनपेता भणितिर्व्यभिचारकोटिमाटीकेत;न वेयञ्च केनाऽप्यन्यथयितुं शक्येत; नाऽत्र विषये कोऽपि(२) विशयोऽवसेयः। इयमस्मज्जातिरधुनाऽग्रेऽमृतं गवेषयते; परं परिणामं विषोपमं न विविनक्ति।"

ह्रसिमकारणविवेके तत्र तृतीयकारणे याऽस्माभिर्भविष्यद्‌वाणी कृता; साऽधुना सत्यतामश्नुवाना निभाल्यते; साऽपि प्रदर्श्यते—"तार्त्तीयीकं कारणम् उत्तरोत्तरं सुविधाप्रदानमेव सङ्‌ख्याऽल्पीयस्त्वे। केचिन्नव्याः सुधारका अधिधर्म्मं प्रविश्य तद्रहस्यमनाकलयन्तो विषयाऽभिलाषुकाणां स्वार्थव्यग्राणां वा पुंसां कृते समाजद्वारा काश्चित् सुविधा विधापयन्ति, अनुष्ठापितवन्तश्च। तद्‌दुर्विलसितमेतदेव जायमानमनुभूयते, यद्—अन्ये अन्या अपि सुविधा ईप्सन्ति। सौविध्याऽदाने सति धर्म्माभासान्तराश्रयणविभीषिकामपि ददति; धर्म्मान्तराण्याश्रयन्तेऽपि। एवमेव तेषां स्वार्थकाम्यतां सर्व्वेऽभिलाषाऽपूर्णीक्रियेरँश्चेत्; तदा इतरधर्म्माभासेभ्योऽस्य धर्म्मस्य वैशिष्ट्यं भेदो वा नाऽवशिष्येत। केचिन्महात्मानः सुविधाऽनर्प्पणमेव हिन्दुसंख्याह्रासे

(१) 'वदाम' इति लोटि 'नित्यं ङितः' इति सलोपः, 'लोटो लङ्वत्' इत्यतिदेशात्। मदीये गतलेखे मुद्रकाणामेवाऽसावधानतया १९२ पृष्ठे 'प्रवर्त्तयाम' 'प्राचालयाम' 'स्पृहयेम' प्रभृति लोट्–लङ्–लिङ्प्रयोगेषु विसर्गा मुद्रिताः। अन्यत्र वत्योर्व्यत्ययश्च कृतः।

(२) विशयः–सन्देहः।

निदानं व्यपदिशन्ति; परं वयमेतद् विप्रतिपन्ना वर्त्तामहे। पूर्व्वमेवाऽन्याय्य-सुविधाविश्राणनस्यैवतद् दुर्विलसितम्। अधुनाऽस्पृश्येभ्यो याः सुविधा वितीर्य्यन्ते, परस्तादेतस्य यः परिणामो भावी, स दूरदृष्ट्या निभालनीयः"।

इयं १९२८ वर्षस्य वार्त्ता १९३३ वर्षे प्रत्यक्षमनुभूयमाना निभाल्यते। अन्तेवयं नेतृम्मन्यान् अनुरुन्ध्महे; यत्ते अस्पृश्यानामार्थिकदशासुधारण एव प्रयतन्ताम्; न तु तेभ्यश्शास्त्रविरुद्धाधिकारदापने शक्तेरपव्ययं कुर्व्वन्तु। जनतामपि प्रार्थयामहे; यच्छास्त्रविरुद्धं किमपि कार्य्यं न तया कार्य्यम्। अन्यथा याऽधुना तदीया दुरवस्था विराजते अग्रे एतामपेक्षयाऽपि अधिकतां स्पर्द्धयेति सा। खलु मुखरतां कुर्वेति।

---

## श्रीशारदाऽष्टकम्।

—:○०○:—

लेo—पंo श्रीशिवशङ्कर झाः शर्म्मा, साहित्याचार्य्यः।

"जनकपुरस्थ" राजकीयसंस्कृतविद्यालयाऽध्यापकः।"

देवी गिरां दिविषदैः प्रणता प्रसन्ना, सन्नारदादि-मुनिभिः श्रितपादपद्मा।
सन्ना श्रुतेश्शमनभीतिविनाशदक्षा, रक्षापरा विजयते वरपुस्तहस्ता ॥ १ ॥
मातः! समस्तनिगमाऽऽगमकल्पवल्लीं सँल्लीनमानसतया भवतीञ्जना ये।
आद्यां श्रयन्ति शुभदां कमनीयकान्तिं भ्रान्तिञ्च यान्ति कृतिनो विदिताऽऽत्मतत्त्वाः॥
तत्प्रार्थयामि वरदे! वरदेवतान्त्वां शान्तां सुधेव धवलां परमेष्ठिकान्ताम्।
किं भारतं नहि निजैः करुणाकटाक्षैः सम्भाल्य भारतममुं कुरुषे रुषेव ॥ ३ ॥
ये पुत्रकास्तव विदः परमे! जगत्यां गत्यां गता गुरुतया पथदर्शकत्वम्।
ते कापथस्य पथिका निजशास्त्रदीपं हित्वा भवन्ति किमतो न च दूयसे त्वम्॥४॥
कीलालया-सहचरी-कबरी-द्विरेफी-संसक्तपादकमलां सरलां सुरेशीम्।
वीणाधरां विविधमङ्गलदानशीलां त्वां ज्ञानदां मदनुदां भजते जनोऽयम् ॥५॥
ज्ञानाऽर्य्यमा भवतमोनिखिलं निवार्य्य कार्य्ये सहायमकरोदिह भारते नः।
तत्रैव रिङ्गणगणो लभते प्रतिष्ठां, तिष्ठामि कुत्र यदि नो दयते दया ते ॥ ६ ॥
अन्धत्वमापयति यद्द्रविणौघवर्षं तर्पं प्रकर्षयति तन्नच कामयेऽहम्।
सत्यं शिवं पदमुदेति यतोऽम्ब! नृणां तां भारतीमभिलषे जननीङ्कवीनाम् ॥७॥
वाणीं "वसन्ततिलका" ञ्चितचारुमूर्त्तिञ्च ञ्चन्मणिप्रकररञ्जितदामभूषाम्।
कुन्दैः सरस्वति! मधौ सुमनोभिरर्च्यां सम्पूज्य मोक्षपदवीमधियान्ति विज्ञाः॥८॥

---

# गीर्वाणवाण्या अभ्युदयोपायाः ।*

ले०—डाक्टर श्रीमङ्गलदेवशास्त्री विद्यारत्न एम्० ए०, डी० फिल०,
( आक्सफोर्ड ) ।

तापत्रयावलिविमूर्च्छित चेतनाना-
मात्मस्वरूपमवमत्य सदा स्थितानाम् ।
अज्ञाननाशनपटूनवबोधहेतून्
वेदान्विकाशयति यस्तमहं नतोऽस्मि ॥

विनयभाववशेन नतेन तं
त्रिभुवनाधिपतिं शिरसा ततम् ।
अमितमोदयुतं करुणानिधि-
मविदितं परितोषयितुं यते ॥

अयि भो ! अशेषशास्त्रतत्त्वानुशीलनसञ्जातनिर्मलशेमुषीकाः सामाजिकाः ! श्रीमतां समक्षं देववाण्याः समुन्नतेरुपायमधिकृत्योपन्यसितुं प्रवृत्तस्य यत्सत्यं वेपत इव मे हृदयम् । तथाहि—

नाना शास्त्रविचक्षणोऽपि प्रथमं प्राप्तः सभां मानवः
सम्यक्पारयते न भावकथने संकोचवश्यः सदा ।
चित्रं नो यदि वेपनं मम हृदः सञ्जायते सम्प्रति
यस्मान्नास्मि विचक्षणः, पुनरियं संसत्सतां नूतना ॥

अथापि श्रीमतामादेशरूपं महान्तमनुग्रहं शिरसा विभ्राणः-
चन्द्रोदये तु सत्यपि द्विजवृन्दं किन्न भासते गगने ?
तद्वद्विदुषां मध्येऽप्रौढोऽपि न दोषभाक्कथने ॥
इत्यस्मिन्नर्थे च श्रद्दधानः
नीरसमपि मम वचनं कृत्वा करुणां सुशीलसम्भूताम् ।
आकर्णयन्तु भव्याः सन्तस्तुष्यन्ति परभणितौ ॥
इत्येवं तत्र भवतामवधानं दीयमानमभ्यर्थये ।

सभ्याः ! अद्य खलु कथं नु देववाण्याः समुन्नति र्भवेदित्यस्मिन्विषये किञ्चिदावेदयितुं समादिष्टोऽहं श्रीमद्भिः । महानेष गभीरो विषयः-विशेषतो मादृशां विषये-नैकशास्त्रनैकभाषापरिशीलनापेक्षी च । उन्नत्यवनतिव्यवहारस्य सापेक्षत्वेन कस्या अपि भाषाया उन्नत्यवनत्योरवधारणाय नैकभाषाणां

* लेखकस्य 'प्रबन्धप्रकाश' नामक ग्रन्थात् समुद्धृतोऽयं प्रबन्धः ।

तारतम्यपरीक्षणस्यावश्यकत्वात् तद्विषयकज्ञानस्यास्मिन्विषये नितरामावश्यकत्वम् । कस्या अपि भाषाया वस्तुस्थितेरवगत्यै च तदन्तर्गतनाना शास्त्राणामवस्थाया अपि ज्ञानमपरिहार्यम् इति नैकशास्त्रपरिशीलनस्याप्यावश्यकत्वं स्फुटमेव। तथापि यथामति विषयेऽस्मिन् भवतां पुरः किञ्चिद्वक्तुमुपक्रमे ।

इह खलु परिवृत्तिशालिनि जगति तत्रापि जाग्रत्यनिमानमहिम्नि काले कस्यापि सर्वदैकरसेनैवावस्थिति नितरामसम्भवा। सर्वमपि वस्तु परवशं चक्रनेमिक्रमेण नानावस्थाः समुपभुङ्क्ते। यत्र दिनं तत्र रात्रिः, यत्र च रात्रिस्तत्र दिनं पर्यायानुसारमाविर्भवति।

एतन्नियमानुरूपमेव चिराज्जगदिदमुन्नतिपथानुगं सम्प्रति समालोच्यते। उदयाचलमारूढो भगवान ज्ञानभास्वान् भुवनमाभासयितुं प्रवृत्तः। सर्वोऽप्यविद्यातमिस्रापगमे मोहनिद्रामुन्मुच्य स्वीय-स्वीयपदार्थजातपरीक्षणपरो दृष्टिपथमायाति ।

अनुसरन्त एवैतन्नियमं चिरादस्मद्देशीया देववाण्याः स्वरूपमालोचयितुमुद्यतास्तदुन्नतेरुपायपरिमार्गणपराः सन्ति। न च उन्नतेरुपायचिन्तनमवनतिमादौ स्थापयति। तत्र "सति कुड्ये चित्रम्" इति न्यायेन देववाण्या अवनतेरभावात्तदुन्नत्युपायचिन्तनस्यामूलकत्वं वैयर्थ्यापत्तिश्चेति वाच्यम् ।

तदवनतेः साम्प्रतं साक्षात्त्वात्, सर्वैः स्वीकृतत्वाच्च । तत्रैते श्लोका भवन्ति—

> दैवी वाणी पुरा यासीदुन्नतेरासने स्थिता ।
> दौर्भाग्येणास्य देशस्य दुर्दशामद्य सा गता ॥
> या प्राचीननिबन्धेषु लोकभाषेति वर्णिता ।
> भारतान्येषु देशेषु कम्बोजादिषु भाषिता ॥
> सैकस्यापि नरस्याद्य न भाषात्वेन गण्यते ।
> अथापि मृतभाषेति लोकैर्हा ! सातिनिन्द्यते ॥
> विस्तरः कान्यभाषाणां तदवस्था च सम्प्रति ।
> क्व चैषा देववाणी हा ! महान् भेदः प्रतीयते ॥
> भोजविक्रमवत्कोऽपि न तस्याः पोषकः क्वचित् ।
> प्रचाराः सन्ति सर्वत्र ह्यन्यासां कोऽत्र संशयः ॥
> कूपोदकं यथा तद्वद् रुद्धं बद्धं च वाङ्मयम् ।
> पुरावन्नाद्य विद्वांसो दृश्यन्ते भारते क्वचित् ॥

भव्याः! नेयमत्युक्तिः। यत्रास्मात्कालात् स्थूलदृष्ट्या चतुर्दशशत संवत्सरेभ्यः प्रागपि—

> पुरा विद्वत्तासीदुपशमवतां क्लेशहतये
> गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम्।
> इदानीं तु प्रेक्ष्य क्षितितलभृतः शास्त्रविमुखान्।
> अहो कष्टं! सापि प्रतिदिनमधोऽधः प्रविशति॥

इत्येवं राजर्षिणा भर्तृहरिणा तस्या अवनतिः प्रदर्शिता, तत्राद्य सम्यक् प्रवृत्ते सर्वथा प्रतिकूले वर्तमाने काले, सम्प्रतिष्ठिते चान्यभाषाणां साम्राज्ये, तस्या अवनतिं प्रति नहि भवितुमर्हति संशयलेशावकाशः। तदेवं पूर्वमेवोन्नतिसद्भावात्तदुन्नतेर्नापेक्षितत्वमिति वदन्तः परास्ताः।

ततश्च दृष्ट्वाप्येतां सर्वलोकविदितां देववाण्या अवनतिम्, स्मृत्वापि तस्या नाम्नैव समाख्यातं त्रिलोक्यामसाधारणं पूर्वकालीनं परमं यशः को नाम भारतबन्धुर्धर्मधुरीणो धीमांस्तदुन्नत्युपाय-समालोचने मन्दप्रयत्नो भविष्यति?

तत्र "प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते" इति न्यायानुसारेणैतत्तावद् विचारणीयं यत् किन्तु खल्वस्मिन् प्रसङ्गे उन्नतिशब्देनाभिप्रेयते, कथं च तत्स्वरूपनिर्णयः कर्तुं शक्यत इति। एतद्विचारानन्तरमेव तस्या उन्नत्युपायचिन्तनमवसरप्राप्तत्वेन समुपयुज्यते। तत्साधनार्थं च प्रयतितुं शक्यते। तदत्र प्रथममेतदेवाधस्ताद् विचार्यते।

अद्यत्वे तावत् कस्याश्चिद् भाषाया उन्नतिस्वरूपनिर्णये प्रवृत्तेनानेकविषयेषु दृष्टेरनुधावनमाकाङ्क्ष्यते। शब्दान्तरेष्वयमेवार्थ एवं वक्तुं शक्यते यत् कस्याश्चिद् भाषाया उन्नतिस्वरूपपरीक्षणायैता स्तावदधो निर्दिष्टा वार्त्ताः समालोचनीयाः—

(१) प्रथमं तावत्तस्या भाषाया भाषिणां संख्या।

(२) द्वितीयं देशापेक्षया तस्या विस्तृतिः। अर्थात् कियान् देशः, को देशः, कति देशा वा तां भाषां भाषन्ते। तद् यथा इंग्लिशभाषाभाषिणां संख्या सामान्येन पञ्चदशकोटिपरिमितास्ति। स्थूलदृष्ट्या सप्तसु अष्टसु वा देशेषु, अगणितेषु प्रदेशेषु, द्वीपेषु च सा भाष्यते।

परमर्थद्वयमप्येतदद्यत्वे भाष्यमाणानां भाषाणां विचारप्रसङ्ग एव समीक्षितुं शक्यते। प्राचीनभाषाणां अथवा तासां भाषाणां विषये तु याः सम्प्रति कुत्रापि न भाष्यन्ते, अपि तु पुराकाल एव याः कस्मिन्नपि देशे भाषिता आसन्, नैतद् विचारणीयं भवति। यतो नाद्यत्व एकोऽप्येतादृशो मानवो

यस्यैकापि तासां स्वभावतो मातृभाषा भवेत् । दौर्भाग्येणास्माकं देववाण्यप्येतद् द्वितीयकोट्यामेव पतिता भवति । साम्प्रतत्वे न क्वापि केनापि स्वभावतो मातृभाषात्वेन भाष्यते ।

( ३ ) तृतीयं तदीयसाहित्यस्य विस्तर उपयोगिता ( उपादेयता ) वर्तमानकालप्रवाहस्तदध्ययनाध्यापन सौलभ्यं च ।

अस्यार्थस्य समीक्षणं प्राचीनोत्कृष्टभाषाणामाधुनिकभाषाणां च स्वरूपावधारणे समानत्वेनोपयोगि । अत एव च प्रधानम् । युक्तं चैतत् । साहित्येनैव हि कस्याश्चिद् भाषाया गौरवं महिमा च वस्तुतः प्रतीयते । साहित्यमेव भाषायाः स्थिरा सम्पत्तिरन्ततः शेवधिश्च । सभ्यताया उत्कर्षापकर्षौ, दर्पणे रूपमिव सद्यः साहित्य एव प्रतिबिम्बीभावमापद्येते । साहित्यद्वारैव पूर्वपूर्वैः ऋषिभिर्महर्षिभि मुनिभिराचार्यैः कविभिश्च "साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुरुपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च" ( निरुक्ते १२० ) इति, किं पुनराप्तानां प्रामाण्यम् ? साक्षात् कृतधर्मता भूतदया यथाभूतार्थचिख्यापयिषेति । आप्ताः खलु साक्षात्कृतधर्माण इदं हातव्यमिदमस्य हानि हेतुरिदमस्याधिगन्तव्यमिदमस्याधिगमहेतुरिति भूतान्यनुकम्पन्ते । तेषां खलु वै प्राणभृतां स्वयमनवबुध्यमानानां नान्यदुपदेशादवबोधकारणमस्ति । न चानवबोधे समीहावर्जनं वा । न वाकृत्वा स्वस्तिभावो नाप्यस्यान्य उपकारकोऽप्यस्ति । हन्त ! वयमेभ्यो यथादर्शनं यथाभूतमुपदिशामस्त इमे श्रुत्वा प्रतिपद्यमाना हेयं हास्यन्त्यधिगन्तव्यमेवाधिगमिष्यन्तीति । एवमाप्तोपदेशः ।" ( न्यायभाष्ये २।१।६८ ) इत्याद्यनुसारमनुकम्पापरैः प्रज्वालितं ज्ञानज्योतिः स्थूलसूक्ष्माद्यनेकविधपदार्थजातविषयकं तेषामनुभवं विचारं च प्रख्यापयत् सहस्रशो वर्षेष्वतीतेष्वपि उत्तरोत्तरं विवर्द्धमानमद्यापि समुद्भासमानं संदृश्यते । यद् विषये हि—

> ब्रह्मादयो विश्वहिताय तप्त्वा परः सहस्रा शरदस्तपांसि ।
> एतान्यपश्यन् मुनयः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥

इति किञ्चित् परिवर्तिता महाकविभवभूतेरुक्तिर्वक्तुरभिप्रेतप्रसङ्गभङ्गेऽपि सम्यक् संगच्छते ।

ततश्च कस्या अपि भाषायाः स्वरूपनिर्णये एतदेव मुख्यतो विचारणीयं भवति यदस्ति किञ्चित् सर्वमनोहारि निखिलपुरुषार्थसाधकमखिल-दुरितापहारकं च तत्सारभूतं साहित्यं तस्यां भाषायाम् । सत्यपि च तस्मिन् विष-

र्याणां समष्टि व्यष्टिदृष्ट्या कियांस्तस्य विस्तरः कियच्च गाम्भीर्यम्। अथवा भिन्नभिन्नदेशकालेषु वर्तमानाभिर्मनुष्यजातिभिः प्रचारितेषु समुन्नतिपदं च नीतेषु नानापुरुषार्थोपयोगिषु दर्शनविज्ञान-धर्म्मशास्त्रकाव्य-सङ्गीतादि-विषयेषु शास्त्रेषु तदवस्था या तारतम्यदृष्ट्या कस्य कस्य शास्त्रस्य केन केन च परिमाणेन प्रचारणं समुन्नतिश्च सम्पादिते तस्यां भाषायाम्, सत्स्वपि च नानाविषयकगूढगम्भीरनिबन्धेषु कियती तेषामुपयोगिता उपादेयता च। उपादेयता सद्भावेऽपि, एतदपि समीक्षणीयं यदद्यत्वे कीदृशी तस्य साहित्यस्य गतिः, उन्नतिमुखी किं वावनतिमुखी। अथवा नानादेशीयशास्त्राणामुन्नतेरपेक्षया तस्य गतिः सन्तोषावहा न वा। अन्तत एतदपि विचारणीयं यत् तत्साहित्य ज्योतिःप्रकाशोऽन्तरायमन्तरेण सर्वसाधारणान् यावदधिगन्तुं शक्नोति न वा। शब्दान्तरेषु तदध्ययनाध्यापनसौलभ्यमपि वर्तते न वा। देववाण्याः साहित्यस्य तावदतिविस्तृतत्वे परमोत्कृष्टत्व उपादेयतायां च दिष्ट्या नहि कश्चिद् विवादः। संसारे नहि काचिदेतादृशी भाषा यस्याः साहित्यं प्राचीनतादृष्ट्यास्याः साहित्यस्य समतामासादयेत्।

विस्तृत्यपेक्षयापि 'ग्रीक' लैटिन, इत्यादि परमप्रसिद्ध-प्राचीनोत्कृष्ट-भाषाणां कयोरपि द्वयोः साहित्यमेकत्रीकृतमपि न तावद् विस्तृतं देववाण्याः। न चापि देववाणीसाहित्यं साकल्येनाद्य यावत् समुपलभ्यते सहस्रशो ग्रन्थानां ग्रन्थकाराणां च केवलं नाममात्रेणैवोल्लेखो नानाग्रन्थेषु दृश्यते। निरन्तरं च च प्रकाश्यन्ते नूतननूतनग्रन्थरत्नानि प्राचीनसंस्कृतग्रन्थोद्धारतत्पराभिर्नैकसंस्थाभिः। तदेतत्सर्वं देववाण्याः साहित्यस्य निरुपमां विस्तृतिमेव ख्यापयति। द्योतयति च "कलां नार्हन्ति षोडशीम्" इत्यस्य चरितार्थतां संस्कृतापेक्षया उपर्युक्त 'लैटिन' आदिभाषाव्यक्तिरिक्तप्राचीनभाषाणां विषये। अर्थगाम्भीर्यभाव सौन्दर्याद्यपेक्षयापि संसारभाषाणां न केवलं प्राचीनानां किन्तु आधुनिकीनामपि शिरोमणिभूतैव नो देववाणी। उपनिषदो भगवद्गीता दर्शनशास्त्राणि, भागवतम्, शाकुन्तलम्, उत्तररामचरितम् इत्याद्यलौकिकसाहित्यरत्नैरलङ्कृता सा सहसैवान्या भाषा अतिक्रामति। एकैकमपि हि एतादृशं साहित्यरत्नं कस्या अपि भाषायाः सौभाग्यसम्पादनायालं गौरवास्पदं च। धर्मार्थमोक्षाख्यानखिलानेव च पुरुषार्थान् लक्ष्यीकृत्य प्रवृत्तं तत् साहित्यम्। अत एव च सर्वाङ्गसम्पूर्णम्। न केवलमेतावतैव तस्याः प्राधान्यम्। अतिप्राचीनत्वेनास्या वेदादिरूपसाहित्यभागस्य नानाविषयाणां तुलनात्मकदृष्ट्याध्ययनेऽप्यतीवोपयोगिनी देववाणी। अस्याः शब्दरचनायाश्चातिस्पष्टतया चिरकालादेव च लोकोत्तरप्रतिभानवद्भिराचार्यैर्व्याकृतत्वेन निरुक्तत्वेन च स्वपरिवारसम्बन्धिनीनां 'इंग्लिश' जर्मन, ग्रीक, लैटिन प्रभृतीनां भाषाणामध्ययने चास्याः परमोपयोगित्वं भाषाशास्त्रवेदिनः कस्य नाविदितम्।

अत एव 'जर्मनी' अमरीका इत्यादि सुदूरनानादेशेषु शतशोऽध्यापकाश्छात्राश्च तदध्ययनाध्यापनतत्पराः श्रूयन्ते। भारतवर्षीयान् प्रति तु तस्या उपयोगित्व-प्रतिपादनं केवलं पुनरुक्तिरेव। न केवलं तेषामतिप्राचीनेतिहासो नितान्तं देववाण्या अध्ययनादेवावगम्यते, तेषां सभ्यताया धार्मिकविश्वासानां च प्रासादस्य मूलभित्तिरपि संस्कृतसाहित्य एवावतिष्ठते। आधुनिक 'हिन्दी' बङ्गाली, प्रभृति भाषाणामप्यन्ततः संस्कृतमेवोत्पत्तिभूमिः। किं बहुना जन्म-प्रभृति मरणपर्यन्तं तेषामभ्युदयनिःश्रेयससाधनतत्परा सततं स्वसाहि-त्यसरोरसामृतेन तानाप्याययन्ती सर्वथा मङ्गलमयी मातृकल्पैव भारतीयानां देववाणी।

सत्यपि सत्य एतस्मिंस्तद्विषयकवृत्तान्ते महानेव परितापविषयो यत् तस्या आधुनिकप्रवाहो न सन्तोषावहः। सत्यं प्राचीनग्रन्थोद्धारः प्रतिदिनं क्रियमाणः श्रुतिपथमायाति। सत्यं यत्तस्या अध्ययनाध्यापनं सुदूरदेशान्त-रेषु क्रियते। तस्या गौरवं यशश्च प्रतिदिनमुत्तरोत्तरं विवर्धमानं सान्त्वयति नो भारतीयानां चेतांसि। तथापि सर्वमेतत्प्राचीनसाहित्यमात्रविषयकम्। अद्यत्वे तस्याः साहित्यस्य गतिरवनतिमुखी एवेत्यत्र नहि कस्यचिद् विवादः। चिरादेव नानाशास्त्रेषु नूतनविचाराणां सृष्टिस्तद्द्वारा तस्याः साहित्यस्य समुन्नतिश्चावरुद्धा दृश्यते। सन्तु केचिदङ्गुलिनिर्देश्याश्चर्वित-चर्वणपिष्टपेषण-कारिणष्टीकाटिप्पणीकर्तारः, परन्तु वस्तुतः स्वोपज्ञविचारविचारकाणां नूतन-ग्रन्थनिर्मातॄणां सर्वथाऽभाव एव। ज्योतिष-दर्शन-वैद्यकप्रभृतिशास्त्राणां प्रायशः सर्वेषां विषये समानेयमवस्था। न चापि तस्या अध्ययनाध्यापनसौलभ्यं प्रचारबाहुल्यं च यथाभीष्टं विद्यते। पुरा खलु "महान् हि शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती त्रयो लोकाः" किञ्च 'शवतिर्गतिकर्मा कम्बो-जेष्वेव भाषितो भवति। विकार एनमार्या भाषन्ते शव इति। (महाभाष्ये-पस्पशाह्निके) इत्यादि प्रमाणेभ्यो न केवलं भारतवर्ष एव किन्त्वस्माद् बहिरपि तस्याः प्रचारः आसीदित्यवगम्यते। "तत्रायमप्यर्थ इदमपि सिद्धं भवति प्राजितेति। किञ्च भो इष्यत एतद्रूपम् ? बाढमिष्यते। एवं हि कश्चिद् वैया-करण आह—कोऽस्य रथस्य प्रवेतेति। सूत आह। आयुष्मन्नहं प्राजितेति। वैयाकरण आह अपशब्द इति। सूत आह। प्राप्तिज्ञो देवानां प्रियो न त्विष्टिज्ञ इष्यत एतद् रूपमिति। वैयाकरण आह। अहो खल्वनेन दुरु-तेन बाध्यामह इति। सूत आह-न खलु वेञः सूतः सुवतेरेव सूतो यदि सुवतेः कुत्सा प्रयोक्तव्या दुःसूतेनेति वक्तव्यम्" (महाभाष्ये २।४।५६) उदाहारि भगिनी या त्वं कुम्भं हरसि शिरसानडवाहं साचीनमभिधावन्तमद्राक्षीरिति" (महा-भाष्ये १।१।५८) (क्रमशः)

# अहं रूप्यकमस्मि ।

( हिन्दीलेखस्यानुवादः )

अनुवादकः—चन्द्रकुमारशर्मा 'शाण्डिल्यः' मुलतानम् ।

——०:*:०——

अहं रूप्यकमस्मि ।

अहं शिशूनां शैशवक्रीडनकमस्मि, मित्रमस्मि । अहं यूनां यौवनप्राणोऽस्मि, मदोऽस्मि । अहमेव जरतां जरा-यष्टिरस्मि, आश्रयोऽस्मि । अहं रूप्यकमस्मि ।

मानवो ममाधीनः; तमहं सहस्रशो नर्त्तयितुमीशे, नर्तयामि, अनर्तयञ्च । मत्तः संसारोऽयं भ्रर्ष्यते; तमहं प्रतिकूलयितुं पारयामि, प्रतिकूलमकरवम्, प्रतिकूलं करोमि च । प्रकृति र्मम वशवर्तिनी आस्ते; तामहं साधयामि, विगुणयामि, भिनद्मि, संकोचयामि च । अहं रूप्यकमस्मि ।

इह विशाले संसारे यदि कोऽपि ईश्वरोऽस्ति तर्हि अहमेव । यदि कोऽपि धर्म्मो विद्यते तर्हि अहमेव । किमपि प्रेम यद्यस्ति, तर्हि अहमेव । अहं रूप्यकमस्मि ।

अहं सत्यमस्मि, शिवमस्मि, सुन्दरमस्मि, सदस्मि, चिदस्मि, अहमानन्दोऽस्मि । लोकोऽप्यहम्, परलोकोऽप्यहम् । अहं हर्षः, अहं शोकः, अहं मोहः, अहं क्षमा । अहं रूप्यकमस्मि ।

मदीये 'झन् झन्' ध्वनौ यदलौकिकं माधुर्यं वरिवर्ति; तद् वीणापाणेर्वीणायां क्व, कमलाधवस्य पाञ्चजन्येऽपि क्व, कोकिलस्य कले कलकलेऽपि क्व, कामिन्याः कोमले कण्ठेऽपि क्व, ढक्काधारिणो ढक्कायामपि क्व, मृदङ्गेऽपि क्व, तन्त्र्यामपि क्व, 'जलतरंग' नाम्नि वाद्येऽपि क्व, अत्र नास्ति, तत्र नास्ति । सप्तस्वराग्रगण्योऽष्टमोऽहं स्वरः, परमं मधुरमहमस्मि । अहं रूप्यकमस्मि ।

भो ! भो !! गीतागायकाः ! चण्डी-सप्तशतीपाठकाः ! भगवद्भक्ताः ! सत्यनारायणकथानुरागिणः ! रामायणबद्धरागा ! महाभारतमन्तारः ! यूयम् मामकीनं गीतं गायत, मामकं पाठं पठत, मम भक्ताः भवत, मदीया गाथा शृणुत, मयि अनुरज्यत, मामेव मन्यध्वम्, मम शरणम् एत, अहं रूप्यकमस्मि ।

अहं तरण—तारणमस्मि, भव-भयहरणमस्मि, अशरणशरण्यमस्मि, जन-मनोदुःखहरणमस्मि, धवलवर्णमस्मि, मङ्गलकरणमस्मि, पुण्यचरणमस्मि । अहं रूप्यकमस्मि ।

मम घूर्णयिता, ममावहेलयिता, महा द्रोग्धा, किं कोऽपि मत्तो मोक्षमेष्यति ? न कोऽपि, न कोऽपि ।

अहं भूमिपतिरस्मि, जननाथोऽस्मि, नृपनाथो ( सम्राट् ) ऽस्मि, अहमीश्वरोऽस्मि । अहं रूप्यकमस्मि ।

लंकापुरी—सीतायाऽकोपेन तोपेण वा न भस्मसादभूत् । अपि तु मम कोपेन तोपेण च भस्माभूत् । अहं विभीषणे तुष्टिमधारयम् । कौरवाः—द्रुपदसुतायाः शापेन न नाशमीयुः, अपि तु मम शापेन । पाण्डवा मम प्रीति-भाजनान्यासन् । 'जर्मनी' राज्यम्—'ब्रिटिश'—राज्यस्य तथा 'अमेरिका'—राज्यस्य धूर्ततया न पराजयमाप, अपि तु मम धूर्ततया । अहं 'ब्रिटेन' नाम्नि राज्ये प्रसीदामि । अहं रूप्यकमस्मि ।

इष्टदेव मूर्तिः सम्भापयितुं न पारयति, अहन्तु सम्भापयामि, अतः इष्टदेवमूर्त्या अपि गरीयोऽस्मि । इष्टदेवः चलितुं न शक्नोति, अहं तु चलामि, अत इष्टदेवात् श्रेयान् मम प्रयासः । नहि ता देवता आकर्षणकारिकाः, यादृक् मयि विद्यते आकर्षणम् । मत्सदृशं तेजऽप्रभावपि न विद्यते । तस्मिन् प्रभौ न तावती शक्तिः विद्यते, यादृशी मय्यस्ति । अहं रूप्यकमस्मि ।

न कलियुगमदः, अपि तु तर्कयुगम्, उदाहरणयुगम्, प्रत्यक्षयुगम्, स्वयं प्रभुतायुगम् । अहं प्रत्यक्षमस्मि, सद्यऽफलजनकमस्मि, अहं स्वयमेव प्रभुः । अहमपकर्षकमस्मि, ईश्वरोऽस्मि, ईश्वरादपि गुरुरस्मि । अहं रूप्यकमस्मि ।

मत्तः वरमादाय पापं कुरुत; देवा युष्मान् अर्चयिष्यन्ति । मत्तः, आत्तवरा यूयम्—एकमपास्य, द्वावपास्य-सप्तानां घातं कुरुत, प्रत्यक्षं मोक्षमेष्यथ ।

राज्यम् अपरराज्येन सह योधयध्वम्; वर्धमानं मानवीयं क्षेत्रं कर्तयध्वम्, उत्तालयध्वम्; महिलानां मान-मर्यादां पणके सेटकद्वयपरिमिताम्, अह्नि दशधा क्रीणीत, + विक्रीणीध्वम् । संसारं विधवानाम्, शिशूनाम्, स्थविराणाम्, दीनानाञ्च क्रन्दनैऽपूरयध्वम्; दीर्घनिःश्वासैऽकम्पयध्वम्; धरणी—कम्पं जनयत; प्रलयं कुरुत, किं बहुना ईहानुकूलं सर्वं विधद्ध्वम्, परं मत्तः वरमादाय । अहं सर्वशक्तिमानस्मि ! अहं रूप्यकमस्मि ।

भो ! भो !! पौनऽपुन्येनैतत्स्मरत-

"सर्वधर्मान् परित्यज्य, मामेकं शरणं व्रज"

हा...हा...हा अहम्, अहं रूप्यकमस्मि ।

---

+ अत्र 'परिव्यवेभ्यः क्रियः' इति तङ् ।

# अखिलभारतवर्षीय-संस्कृतविश्वविद्यालयान्तर्गतायाः

## काशी-आयुर्वेदसम्मिलन्याः परीक्षाफलम् ।

### आचार्यपरीक्षायां प्रथमविभागे—

| छात्रनामानि ] | [ अध्यापक नामानि— |
|---|---|
| श्रीगणेशदत्तजोशी । | ज्योतिश्चन्द्रभट्टाचार्य वैद्यवाचस्पतिः कवीन्द्रविद्यालय काशी । |
| श्रीपं० रामशर्माशास्त्री ( अयं धर्मशास्त्रेऽपि समुत्तीर्णः ) | आयुर्वेदधर्ममहाविद्यालय अमृतसर । |
| श्रीगिरिधरशर्मा त्रिवेदी ( अयं धर्मशास्त्रेऽपि समुत्तीर्णः ) | ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पतिः कवीन्द्रविद्यालय काशी । |
| श्रीजगद्राम शर्मा । ( अयं धर्मशास्त्रेऽपि समुत्तीर्णः । ) | पं० रामरत्नशर्मा आयुर्वेद महाविद्यालय बांसबाजार अमृसर । |
| श्रीस्वामी लक्ष्मीगिरि आयुर्वेदशास्त्री ( अयं धर्मशास्त्रेऽपि समुत्तीर्णः ) | पं० हरिदेवजी पाण्डेय आयुर्वेदपाठशाला कलकत्ता । |
| श्रीपं० हरि उपासनी | पं० ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पतिः कवीन्द्रविद्यालय काशी । |
| श्रीपं० टीकारामशर्मा उपाध्यायः<br>श्रीरामानुजद्विवेदी | पं० यतीन्द्रनाथ काव्यतीर्थः, सम्मिलनी विद्यालय काशी । |
| श्रीसंत प्रतापसिंहः । | पं० विष्णुदत्त आयुर्वेदाचार्यः, मोगा अमृतसर । |

### शास्त्रिपरीक्षायां प्रथमविभागे ।

| | |
|---|---|
| श्रीताराचन्द्र शर्मा । ( अयं धर्मशास्त्रेऽपि समुत्तीर्णः ) | पं० रामस्वरूपशास्त्री वैद्यविशारदः सनातनधर्म संस्कृतपाठशाला अबोहरमण्डी फीरोजपुर (पंजाब) । |
| श्रीसमीरणचन्द्र धरः । | श्रीरेन्द्रचन्द्र आयुर्वेद शास्त्री, महेश आयुर्वेद विद्यालय काशी । |

| छात्रनामानि | अध्यापक नामानि |
| --- | --- |
| श्रीश्यामलाल शर्मा । | पं० कालीकिशोरविद्याविनोदः विद्या-प्रबोधिनी पाठशाला काशी । |

## द्वितीय विभागे ।

| छात्रनामानि | अध्यापक नामानि |
| --- | --- |
| श्रीविक्रमादित्य चतुर्वेदी ।<br>श्रीगौरीशंकरमिश्रः ।<br>श्रीरामचन्द्रत्रिपाठी । | यतीन्द्रनाथ काव्यतीर्थः सम्मिलनी-विद्यालय काशी । |
| श्रीरामचन्द्र सुरिडयालः । | पं० कालीकिशोरविद्याविनोदः प्रणवविद्यालय काशी । |
| श्रीमोहनप्रसाद शर्मा मिश्रः । | पं० ज्योतिश्चन्द्र भट्टाचार्य वैद्य-वाचस्पतिः कवीन्द्र विद्यालय काशी । |
| श्रीतोयनाथ शर्मा ( अयं धर्म-शास्त्रेऽपि समुत्तीर्णः ) | दीनानाथ आयुर्विज्ञानाचार्यः, गंगादेवी पाठशाला काशी । |
| श्रीकालीचरण त्रिपाठी | पं० ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पतिः कवीन्द्र विद्यालय काशी । |
| श्रीजयदेवपाठकः ( अयं धर्मशास्त्रेऽपि समुत्तीर्णः ) | पं० शम्भूदेवशास्त्री षड्दर्शन-विद्यालय काशी । |

## वैद्यभूषणपरीक्षायां द्वितीयविभागे ।

| छात्रनामानि | अध्यापक नामानि |
| --- | --- |
| श्रीबलवन्त शर्मा ( अयं धर्मशास्त्रेऽपि समुत्तीर्णः ) | प० शंकरलाल शर्मा, मानिकबाई संस्कृत-पाठशाला पोरबन्दर गुजरात । |
| श्रीशिवदत्त शर्मा | पं० रामस्वरूप शास्त्री, सनातनधर्मसंस्कृत पाठशाला अबोहर मंडी (पंजाब) । |
| श्रीहरिचंद ( अयं धर्मशास्त्रेऽपि समुत्तीर्णः ) | पं० विष्णुदत्त आयुर्वेदाचार्यः मोगा अमृतसर । |
| श्रीत्रिपुरानन्द भट्टाचार्यः । | पं० यतीन्द्रनाथ काव्यतीर्थः संमिलनी विद्यालय काशी । |
| श्रीआत्मारामः (अयं धर्मशास्त्रेऽपि समुत्तीर्णः) | स्वामी हरिनारायणजी शास्त्री खासरोड अमृतसर । |
| श्रीसंतरामः (अयं धर्मशास्त्रेऽपि समुत्तीर्णः ) | पं० विष्णुदत्त आयुर्वेदाचार्यः मोगा अमृतसर । |
| श्रीदीवानचन्द शर्मा (अयं धर्म-शास्त्रेऽपि समुत्तीर्णः) | पं० रामस्वरूपशास्त्री सनातनधर्म सं० पाठशाला अबोहरमण्डी, फिरोजपुर । |

| (छात्र नामानि) | (अध्यापक नामानि |
|---|---|
| श्रीअमरनाथ शर्मा | पं० रामरत्नशर्मा बांसबाजार अमृतसर । |
| श्रीमती सुधारानी वसु<br>श्रीमती पद्मादेवी<br>श्रीमती कृष्णादेवी दीक्षित | जगदम्बा आयुर्वेद-विद्यालय काशी । |
| श्रीरविदत्त शर्मा | पं० ईश्वरीदत्त शास्त्री वटपति विद्यालय मिश्रपोखरा काशी । |
| श्रीसतीशप्रसाद मिश्रः | पं० गिरीशप्रसादमिश्रः सहथा । |
| श्रीशंकरलाल शर्मा (अयं धर्म-शास्त्रेऽपि समुत्तीर्णः) | पं० बलवन्तशर्मा, पोरबन्दर स्टेट पाठशाला । |
| श्रीमहादेवशर्मा | पं० यतीन्द्रनाथ काव्यतीर्थः सम्मिलनी विद्यालय काशी । |

## मध्यमा परीक्षायां प्रथमविभागे ।

| | |
|---|---|
| श्रीहरिशंकर चौधुरी ।<br>श्रीनवकिशोर सेनः ।<br>श्रीहरिपद चौधुरी । | श्रीगणेशचन्द्र कविभूषण, हेरम्ब-नाथ कविरत्न तिलोड़ी शिक्षाश्रम बांकुड़ा । |
| श्रीसुधांशुकुमार सेनगुप्तः । | पं० कालीकिशोर विद्याविनोदः प्रणव विद्यालय काशी । |
| श्रीशिवकुमार पाण्डेयः । | पं० ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाच, स्पतिः कवीन्द्रविद्यालय काशी । |
| श्रीगंगाधर नियोगी ।<br>श्रीहेमेन्द्रनाथ सेनः । | पं० गणेशचन्द्र कविभूषण, हेरम्ब-नाथ कविरत्न, तिलोड़ी शिक्षाश्रम बांकुड़ा । |
| श्रीशिवराम शर्मा । | पं० कालीकिशोर विद्याविनोदः प्रणवविद्यालय काशी । |
| श्रीमुनीश्वर प्रसादः । | पं० यतीन्द्रनाथ काव्यतीर्थः सम्मिलनी विद्यालय काशी । |
| श्रीविरंचीलाल शर्मा (अयं धर्म-शास्त्रेऽपि समुत्तीर्णः) । | पं० लक्ष्मीनारायण राजवैद्यः सरस्वती औषधालय जयपुरम् । |
| श्रीभागीरथ शर्मा | पं० कालूरामजी वैद्यः चिड़ावा जयपुरम |

| छात्र नामानि | अध्यापक नामानि |
|---|---|
| श्रीरामलोचनप्रसाद शुक्लः | पं० ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पति कवीन्द्र विद्यालय काशी। |
| श्रीरामानन्द उपाध्यायः | पं० यतीन्द्रनाथ काव्यतीर्थः सम्मिलनी विद्यालय काशी। |
| श्रीअवन्ती कुमार भट्टाचार्यः | पं० धीरेन्द्रचन्द्र आयुर्वेदशास्त्री महेश आयुर्वेद विद्यालय, काशी। |
| श्रीपारसनाथ पाण्डेयः<br>श्रीपरमानन्द पाण्डेयः | पं० यतीन्द्रनाथ काव्यतीर्थः सम्मिलनी विद्यालय काशी। |
| श्रीहरिपद बक्सी | पं० गणेशचन्द्र कविभूषण, हेरम्बनाथ कविरत्न तिलोड़ी शिक्षाश्रम बांकुड़ा। |
| श्रीभगवती प्रसाद शर्मा | पं० यतीन्द्रनाथ काव्यतीर्थः सम्मिलनी विद्यालय काशी। |
| श्रीसातकड़ी भट्टाचार्यः | पं० ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पतिः कवीन्द्र विद्यालय काशी। |
| श्रीठाकुरदत्त त्रिपाठी | पं० लालचन्द्र वैद्यशास्त्री, आयुर्वेद प्रबोधिनी पाठशाला काशी। |

## मध्यमायां द्वितीयविभागे।

| | |
|---|---|
| श्रीगणपति भट्टाचार्यः | पं० ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पतिः कवीन्द्र विद्यालय काशी। |
| श्रीमती लावण्यप्रभा देवी | जगदम्बा आयुर्वेद विद्यालय काशी। |
| श्रीपाह्न रामस्वरूप शर्मा | पं० ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पतिः कवीन्द्र विद्यालय काशी। |
| श्रीदुलीचन्द्र गुप्तः | पं० केदारनाथ झा शास्त्री, रामदास औषधालय तथा विद्यालय कटनी जबलपुर। |
| श्रीशिवानन्द स्वामी | पं० ज्योतिश्चन्द्रभट्टाचार्य वैद्यवाचस्पतिः कवीन्द्र विद्यालय काशी। |
| श्रीद्वारिका पाण्डेयः | पं० यतीन्द्रनाथ काव्यतीर्थः सम्मिलनी विद्यालय काशी। |
| श्रीदेवहरि उपाध्याय घिमीरे। | पं० दीनानाथ आयुर्विज्ञानाचार्यः गंगादेवी पाठशाला काशी। |

| छात्र नामानि | अध्यापक नामानि |
|---|---|
| श्रीव्रजमोहनप्रसादः | पं० ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पतिः कवीन्द्र विद्यालय काशी। |
| श्रीरामफलदासः | पं० जानकीनाथ सरस्वती औषधालय नैपालीखपरा काशी। |
| वैद्यविशारद पं० हरिराम शर्मा (अयं धर्मशास्त्रेऽपि समुत्तीर्णः) | पं० रामेश्वर शर्मा जगदीशमन्दिर पाठशाला चिड़ावा जयपूर। |
| श्रीनामावर शर्मा | पं० ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पतिः कवीन्द्रविद्यालय काशी। |
| श्रीगोटीराम त्रिपाठी | कालीकिशोर विद्याविनोदः प्रणव विद्यालय काशी। |

## मध्यमायां तृतीयविभागे।

| | |
|---|---|
| गोस्वामी राधामोहन शर्मा (अयं धर्मशास्त्रेऽपि समुत्तीर्णः) | पं० प्यारेलालजी शास्त्री राजवैद्य पटियाला। |
| श्रीसुरेशानन्द कुकेरती | पं० महादेव शर्मा शास्त्री, यतीन्द्रनाथ विद्यालय काशी। |
| श्रीनारायणदत्त शर्मा | पं० लालचन्द वैद्यशास्त्री, विद्याप्रबोधिनी पाठशाला काशी। |
| श्रीभगवानदास मिश्रः | पं० नर्मदाप्रसाद शुक्लः, ऋषिकुल ब्रह्मचर्याश्रम हुशंगाबाद। |
| श्रीरामेश्वरदास मिश्रः | पं० रामस्वरूप शास्त्री, सनातनधर्मसंस्कृत पाठशाला अबोहर मण्डी (पंजाब) |
| श्रीदुर्गादत्त शर्मा | पं० ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पतिः कवीन्द्र विद्यालय काशी। |
| श्रीसदानन्द शर्मा रतुड़ी (अयं धर्मशास्त्रेऽपि समुत्तीर्णः) | पं० गिरिधरशर्मा शास्त्री लक्ष्मण संस्कृत विद्यालय देहरादून। |
| श्रीशिवनाथ शर्मा | पं० ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाचस्पतिः कवीन्द्र विद्यालय काशी। |
| श्रीद्वारकाप्रसाद शर्मा (अयं धर्मशास्त्रेऽपि समुत्तीर्णः) | पं० रामेश्वरशर्मा, जगदीश मन्दिर पाठशाला चिड़ावा जयपुर। |

| छात्र नामानि | अध्यापक नामानि |
|---|---|
| श्रीकैलाशनारायण आचार्यः | पं० रामकृष्ण शास्त्री संस्कृत पाठशाला भूपाल। |
| श्रीपुनतामकर शम्भूनाथ शर्मा<br>श्रीचैतन्यभारती | पं० ज्योतिश्चन्द्रभट्टाचार्य वैद्यवाचस्पतिः, कवीन्द्र विद्यालय काशी। |
| श्रीचन्द्रप्रसाद साईंकोटा | दीनानाथ आयुर्विज्ञानाचार्यः, गंगादेवी पाठशाला काशी। |
| श्रीमुरलीधर शर्मा | पं० चिरंजीवलाल शास्त्री, वेद-वेदाङ्ग संस्कृत पाठशाला चिड़ावा जयपुर। |

## प्रथमपरीक्षायां प्रथमविभागे।

| | |
|---|---|
| श्रीसुधीन्द्रनाथ भट्टाचार्यः। | पं०कालीकिशोर विद्याविनोद, प्रणव-विद्यालय काशी। |
| श्रीशोभनाबाला पाल। | जगदम्बा आयुर्वेदविद्यालय काशी। |
| सुकुमार चक्रवर्ती। | धीरेन्द्रआयुर्वेद शास्त्री महेशआयुर्वेद विद्यालय काशी। |
| श्रीमाणिक दासी।<br>श्रीदयामयी देवी। | जगदम्बा आयुर्वेद विद्यालय काशी। |
| श्रीचन्द्रशेखर गौड़माइ।<br>श्रीबलराम शर्मा द्विवेदी। | पं० नर्मदाप्रसाद शुक्लः, ऋषिकुलब्रह्मचर्याश्रम हुशंगाबाद। |
| श्रीसुधीरकुमार वक्सी। | गणेशचन्द्र चौधरी, हेरम्बनाथ सेनः तिलोड़ी शिक्षाश्रम बांकुड़ा। |
| श्रीबलरामः (अयं धर्मशास्त्रेऽपि समुत्तीर्णः।)<br>श्रीमाधवदत्त शर्मा (अयं धर्मशास्त्रेऽपि समुत्तीर्णः।) | पं० रामरत्न शर्मा, सनातनधर्म-आयुर्वेद महाविद्यालय अमृतसर। |
| श्रीटीकाराम स्वर्णकारः। | पं० नर्मदाप्रसाद शुक्लः ऋषिकुल ब्रह्मचर्याश्रम हुशंगाबाद। |
| श्रीलक्ष्मणप्रसाद शर्मा। | पं० रामेश्वरशर्मा सरस्वती औषधालय जयपुर। |

| छात्र नामानि | अध्यापक नामानि |
|---|---|
| श्रीबुद्धिरामः ( अयं धर्मशास्त्रेऽपि समुत्तीर्णः । ) | पं० रामरत्नशर्मा सनातनधर्म आयुर्वेद महाविद्यालय अमृतसर । |
| श्रीलक्ष्मीप्रसाद शर्मा भट्टः ( अयं धर्मशास्त्रेऽपि समुत्तीर्णः ) | पं० गिरिधर शर्मा शास्त्री लक्ष्मण संस्कृत विद्यालय देहरादून । |
| श्रीरामनारायण शर्मा ( अयं धर्मशास्त्रेऽपि समुत्तीर्णः ) | पं० रामेश्वर शर्मा जगदीश मंदिर पाठ-शाला चिड़ावा ( जयपुर ) |
| श्रीजयदेवशर्मा ( अयं धर्मशास्त्रेऽपि समुत्तीर्णः ) | पं० गोविन्दराम कविराजः हीवेट् संस्कृत पाठशाला टिहरी गढवाल । |
| श्रीमातादीन शर्मा | पं० रामस्वरूप शास्त्री सनातनधर्म संस्कृत पाठशाला अबोहर मंडी पञ्जाब । |
| श्रीदेवेन्द्रदत्त शर्मा तिवारी ( अयं धर्मशास्त्रेऽपि समुत्तीर्णः | पं० गिरिधर शर्मा शास्त्री लक्ष्मण संस्कृत पाठशाला देहरादून । |
| श्रीश्रीनाथचन्द्र पाल चौधुरी | पं० देवेन्द्रनाथ आयुर्वेदभूषण भवानी औषधालय काशी । |
| श्रीवंशीधर शर्म्मा | पं० जानकीनाथ शर्मा सरस्वती औषधालय नैपालीखपरा काशी । |

## प्रथमायां द्वितीयविभागे ।

| छात्र नामानि | अध्यापक नामानि |
|---|---|
| श्रीरामप्रपन्न त्रिपाठी | पं० ज्योतिश्चन्द्र भट्टाचार्यः कवीन्द्र विद्यालय काशी । |
| श्रीनीलकंठ शर्मा | पं० नन्दवल्लभशास्त्री वटपति विद्यालय काशी । |
| श्रीपुरुषोत्तम पन्त | पं० ज्योतिश्चन्द्र भट्टाचार्यः कवीन्द्रविद्यालय काशी । |
| श्रीवादी रामचन्द्रशर्मा | प्राइवेट् बनारस । |
| श्रीराम शर्मा व्याकरणरत्न । | पं० लालचन्द्र वैद्यशास्त्री विद्याप्रबोधनी पाठशाला काशी । |
| श्रीगिरिधारीलाल शर्मा । | पं० लक्ष्मीनारायण वैद्यः सरस्वती औषधालय ( जयपुर ) |
| श्रीलक्ष्मीनारायण शर्मा । | पं० जगन्नाथ राजवैद्यः दातव्य औषधालय ( जयपुर ) |

| छात्र नामानि | अध्यापक नामानि |
| --- | --- |
| श्रीअतथीलाल शर्मा । | पं० गोविन्दराम कविराजः, हीवेटरोड |
| ( अयं धर्मशास्त्रे पि समुत्तीर्णः ) | संस्कृतपाठशाला टिहरी गढ़वाल । |
| श्रीभवानीशंकर शर्मा । | यतीन्द्रनाथ काव्यतीर्थः |
| | सम्मिलनी विद्यालय काशी । |
| श्रीगिरिधारी मिश्रः | पं० गिरीश प्रसादमिश्रः सहता । |
| श्रीराम शर्मा | पं० गोविन्दरामशर्मा हीवेट् रोड |
| (अयं खलु धर्मशास्त्रेऽपि समुत्तीर्णः) | संस्कृत पाठशाला गढ़वाल । |

## प्रथम परीक्षायां तृतीयविभागे—

| | |
| --- | --- |
| श्रीमहावीरप्रसाद शर्मा | पं० गोविन्दराम शर्मा । |
| (अयं खलु धर्मशास्त्रेऽपि समुत्तीर्णः) | हीवेट रोड टीहरि गढ़वाल । |
| श्रीमहादेवप्रसाद शर्मा | पं० गोविन्दराम शर्मा । |
| (अयं खलु धर्मशास्त्रेऽपि समुत्तीर्णः) | हीवेट् रोड टिहरी गढ़वाल । |
| श्रीअम्बादत्त शर्मा | " " " |
| (अयं खलु धर्मशास्त्रेऽपि समुत्तीर्णः ) | |
| ब्रह्मचारी निश्चिदानन्दशर्मा । | पं० ज्योतिश्चन्द्र भट्टाचार्य वैद्यवाच- |
| | स्पतिः कवीन्द्र विद्यालय काशी । |
| श्रीराधाकृष्ण शर्मा | पं० रामेश्वरप्रसाद शास्त्री |
| ( अयं धर्मशास्त्रेऽपि समुत्तीर्णः । ) | जगदीश मंदिर पाठशाला ( जयपुर ) |
| श्रीरामकुमारमिश्रः । | पं० अनन्तदेवत्रिपाठी |
| | बिड़ला वेदवेदाङ्गविद्यालय जयपुर । |
| श्रीपरमानन्दशर्मा । | पं० शम्भूदेवशास्त्री |
| | षड्दर्शन आयुर्वेद विद्यालय काशी । |
| श्रीबाकीप्रसाद उपाध्यायः । | श्रीरामकृष्णशास्त्री |
| (धर्मशास्त्रेऽपि समुत्तीर्णः ) | संस्कृत पाठशाला भूपाल । |
| श्रीविन्दाप्रसाद कुंवर । | पं० गिरीशप्रसादमिश्रः सहथा । |

आयुर्वेदाचार्य-कविराज पं० ज्योतिश्चन्द्र भट्टाचार्य कविरत्न-
काव्यतीर्थः, विद्याभूषण, सांख्यरत्न, वैद्यवाचस्पतिः,
सम्पादकः—सं० वि० वि० अन्तर्गत
आयुर्वेदसम्मिलनी, नं० ८३ दशाश्वमेध, बनारससिटी ।

# सूर्योदयः।

नवमे वर्षे } श्रावणस्य पूर्णिमा सं० १९९० । { द्वितीय-संख्या

## सम्पादकीया अभिप्रायाः।

——:o:——

### महात्मा तुलसीदासः।

संवत् सोलह सौ असी, असी गङ्गके तीर।
श्रावण शुक्ला सप्तमी, तुलसी तज्यौ शरीर ॥ (हिन्दी)

हिन्दीभाषायां रचितया कवितयैतयोपर्युक्तया सुस्पष्टमिदमवगम्यते यत् महात्मनस्तुलसीदासस्य मरणकालादारभ्येदानीं यावत् शतत्रयाधिका दश अब्दा व्यत्यगच्छन् इति। सर्वत्रैव भारते वर्षे श्रावणशुक्लसप्तम्यां तिथौ तस्य महामहिमशालिनो महापुरुषस्य जयन्ती-महोत्सवः सर्वत्रैव सर्वैरुत्साहधनैर्धर्मधुरीणैर्महानुभावैः सम्भाविन इति नास्त्यविदितं ग्राहकानुग्राहकमहानुभावानाम्। महात्मना तुलसीदासेन स्वीये समये हिन्दुसमाजस्य यादृशी सेवा समनुष्ठिता, तादृशीम् अल्पीयांस एव विद्वांसो विहितवन्तः, महात्मन एतस्य समये साम्राज्यमासीद् भारते माहम्मदानाम्। तस्मिन् काले संस्कृतप्रचारवैरल्यात्, वेदशास्त्रदर्शनस्मृतिपुराणादीनामध्ययनाध्यापनराहित्याच्च भगवान् सनातनो धर्मो ह्रसमानो न लोकरक्षायै प्राभवत्। समस्ताऽपि हिन्दुजनता परस्परं व्यस्ता सती धर्ममर्मज्ञानाभावात् अधो गच्छन्ती बभूव। भारतीया वैदिकाः पञ्चापि सम्प्रदायाः, विशेषतः शैवा वैष्णवाश्च परस्परं कलहायमाना ददृशिरे। तत्कालीना भारतीयाः सोदराणां निजानां बन्धुबान्धवानामेव रक्तपिपासवः समवालोक्यन्त। धर्मपरिपालनपराणानामादर्शक्षत्रियाणां प्रायेणाभावोऽभूत्। एतादृशे कराले काले, धर्मज्ञानं पुनराविर्भावयितुम्, पञ्चसु सम्प्रदायेषु शैवेषु वैष्णवेषु च परस्परं प्रेम प्रवर्धयितुम्, भारतीयबन्धूनां कर्त्तव्यं प्रदर्शयितुम्, आदर्शभूतस्य क्षत्रियराजन्यस्य चरित्रं चित्रयितुम्, किं बहुना, कुटिलैः कदर्यहतकै निशाचराधमैरपहृतां भारतलक्ष्मीं पुनरानयितुं च मन्ये स्वयमेव भगवानादिकविर्वाल्मीकिरवतीर्य तुलसीरूपो

रामचरित्रमानसप्रणयनपरः अधःपतितभारतजनतोद्धारहेतवे सर्वतः समुत्कृष्टं श्रेयस्करं पन्थानं निर्दिष्टवान्। तुलसीकृतरामायणेन भारतीयानां यादृश उपकारो विहितः, स चानिर्वचनीय इति सर्ववादिसम्मतो राद्धान्तः।

आधुनिका असंख्येया हिन्दीभाषाकवयो गीर्वाणवाणीज्ञानराहित्यात् समाजेषु नितान्तमनुत्कृष्टं हीनहीनमादर्शमुपस्थापयन्तो देशं जातिं चाधो नयन्ति। तै र्महात्मा तुलसीदासो नूनमनुकरणीयः, तैस्तु संस्कृतस्याध्ययनं नूनं समनुष्ठेयम्। अस्माकं तु प्रबलोऽयं विश्वासो यत् येषां नास्ति संस्कृतभाषायाः परिज्ञानं ते न कथमपि हिन्दीभाषायाः कवयो लेखका वा भवितुमर्हन्ति। संस्कृतसरस्वती तु संसारस्य सर्वासामेव भाषाणां जननी। सांसारिकसर्वभाषाशब्दाः प्रायेण संस्कृतशब्दसाम्यतां भजन्ते। तत्रापि हिन्दीभाषायाः सर्वेऽपि शब्दाः, छन्दोव्याकरणादीनां निखिला अपि नियमोपनियमाः सुरभाषातो नातिरिच्यन्ते। अतो हिन्दीभाषासेवकै र्महात्मानं तुलसीदासमनुकृत्य संस्कृतस्य विशिष्टं ज्ञानमवश्यं सम्पादनीयम्। भगवान् तुलसीदासः संस्कृतस्य साधीयान् पण्डित आसीदित्यत्राधोनिर्दिष्टानि तदीयानि संस्कृतपद्यान्येव प्रमाणरूपेण प्रदर्श्यन्ते—

बालकाण्डे, यथा—

वर्णानामर्थसङ्घानां रसानां छन्दसामपि।
मङ्गलानां च कर्त्तारौ वन्दे वाणीविनायकौ॥
भवानीशङ्करौ वन्दे श्रद्धाविश्वासरूपिणौ।
याभ्यां विना न पश्यन्ति सिद्धाः स्वान्तःस्थमीश्वरम्॥
वन्दे बोधमयं नित्यं गुरुं शङ्कररूपिणम्।
यमाश्रितो हि वक्रोऽपि चन्द्रः सर्वत्र वन्द्यते॥
सीतारामगुणग्रामपुण्यारण्यविहारिणौ।
वन्दे विशुद्धविज्ञानौ कवीश्वरकपीश्वरौ॥
उद्भवस्थितिसंहारकारिणीं क्लेशहारिणीम्।
सर्वश्रेयस्करीं सीतां नतोऽहं रामवल्लभाम्॥
यन्मायावशवर्त्तिविश्वमखिलं ब्रह्मादिदेवासुरं
यत्सत्वादमृषैव भाति सकलं रज्जौ यथाऽहेर्भ्रमः।
यत्पादप्लव एक एव हि भवाम्भोधेस्तितीर्षावतां
वन्देऽहं तमशेषकारणपरं रामाख्यमीशं हरिम्॥

### अयोध्याकाण्डे, यथा—

वामाङ्के च विभाति भूधरसुता देवापगा मस्तके
　　भाले बालविधुर्गले च गरलं यस्योरसि व्यालराट् ।
सोऽयं भूतिविभूषणः सुरवरः सर्वाधिपः सर्वदः
　　सर्वः सर्वगतः शिवः शशिनिभः श्रीशङ्करः पातु माम् ॥
प्रसन्नतां या न गताऽभिषेकतः, तथा न मम्लौ वनवासदुःखतः ।
मुखाम्बुजश्री रघुनन्दनस्य मे, सदाऽस्तु सा मञ्जुलमङ्गलप्रदा ॥
नीलाम्बुजश्यामलकोमलाङ्गम्, सीतासमारोपितवामभागम् ।
पाणौ महासायकचारुचापम्, नमामि रामं रघुवंशनाथम् ॥

### अरण्यकाण्डे, यथा—

मूलं धर्मतरोर्विवेकजलधेः पूर्णेन्दुमानन्ददं
　　वैराग्याम्बुजभास्करं ह्यघघनध्वान्तापहं तापहम् ।
मोहाम्भोधरपूगपाटनविधौ श्वासं भवं शङ्करम्
　　वन्दे ब्रह्मकुलं कलङ्कशमनं श्रीरामभूपप्रियम् ॥
सान्द्रानन्दपयोदसौभगतनुं पीताम्बरं सुन्दरम्,
　　पाणौ बाणशरासनं कटिलसत्तूणीरभारं वरम् ।
राजीवायतलोचनं धृतजटाजूटेन संशोभितम्,
　　सीतालक्ष्मणसंयुतं पथिगतं रामाभिरामं भजे ॥

### किष्किन्धाकाण्डे यथा—

कुन्देन्दीवरसुन्दरावतिबलौ विज्ञानरूपावुभौ
　　शोभाढ्यौ वरधन्विनौ श्रुतिनुतौ गोविप्रवृन्दप्रियौ ।
मायामानुषरूपिणौ रघुवरौ सद्धर्मवर्माञ्वितौ
　　सीतान्वेषणतत्परौ पथिगतौ भक्तिप्रदौ तौ हि नः ॥
ब्रह्माम्भोधिसमुद्भवं कलिमलप्रध्वंसनं चाव्ययं
　　श्रीमच्छम्भुमुखेन्दुसुन्दरवरं संशोभितं सर्वदा ।
संसारामयभेषजं सुखकरं श्रीजानकीजीवनं
　　धन्यास्ते कृतिनः पिबन्ति सततं श्रीरामनामामृतम् ॥

### सुन्दरकाण्डे, यथा—

शान्तं शाश्वतमप्रमेयमनघं निर्वाणशान्तिप्रदं
　　शम्भुब्रह्मफणीन्द्रसेव्यमनिशं वेदान्तवेद्यं विभुम् ।

रामाख्यं जगदीश्वरं सुरगुरुं मायामनुष्यं हरिं
वन्देऽहं करुणाकरं रघुवरं भूपालचूड़ामणिम् ॥
नान्या स्पृहा रघुपते हृदये मदीये सत्यं वदामि च भवानखिलान्तरात्मा ।
भक्तिं प्रयच्छ रघुपुङ्गव निर्भरां मे कामादिदोषरहितं कुरु मानसं च ॥
अतुलितबलधामं स्वर्णशैलाभदेहं
दनुजवनकृशानुं ज्ञानिनामग्रगण्यम्,
सकलगुणनिधानं वानराणामधीशं
रघुवरवरदूतं वातजातं नमामि ॥

लङ्काकाण्डे यथा—

रामं कामारिसेव्यं भवभयहरणं कालमत्तेभसिंहं
योगीन्द्रज्ञानगम्यं गुणनिधिमजितं निर्गुणं निर्विकारम् ।
मायातीतं सुरेशं खलवधनिरतं ब्रह्मवृन्दैकदेवं
वन्दे कुन्दावदातं सरसिजनयनं देवमुर्वीशरूपम् ॥
शङ्खेन्द्वाभमतीवसुन्दरतनुं शार्दूलचर्माम्बरं
कालव्यालकरालभूषणधरं गङ्गाशशाङ्कप्रियम् ।
काशीशं कलिकल्मषौघशमनं कल्याणकल्पद्रुमं
नौमीड्यं गिरिजापतिं गुणनिधिं कन्दर्पहं शङ्करम् ॥

उत्तरकाण्डे, यथा—

केकीकण्ठाभनीलं सुरवरविलसद्विप्रपादाब्जचिन्हं
शोभाढ्यं पीतवस्त्रं सरसिजनयनं सर्वदा सुप्रसन्नम् ।
पाणौ नाराचचापं कपिनिकरयुतं बन्धुना सेव्यमानं
नौमीड्यं जानकीशं रघुवरमनिशं पुष्पकारूढरामम् ॥
कोशलेन्द्रपदकञ्जमञ्जुलौ कोमलावजमहेशवन्दितौ ।
जानकीकरसरोजलालितौ चिन्तकस्य हृदयालिसङ्गिनौ ॥

महात्मनस्तुलसीदासस्य संस्कृतभाषाप्रखरपाण्डित्यसम्बन्धे अनेका घटनावल्यः समुपलभ्यन्ते । तथाहि—

( १ ) महादेवप्रसादपण्डितः स्वरचिते "भक्तिविलास" नामधेये ग्रन्थे वदतीत्थं यत्—

समधिगतवेदान्ततत्त्वोऽनेकवेदान्तग्रन्थानां रचयिता, गीता-शाङ्करभाष्य-टीकाप्रणेता ज्ञानिनामग्रगण्यः श्रीमधुसूदनसरस्वती वाराणस्यामस्यां निवसन्

गोस्वामितुलसीदासस्य पाण्डित्यविषये निम्नाङ्कितं संस्कृतपद्यं समुदीरयामास—

"आनन्दकानने ह्यस्मिन् जङ्गमस्तुलसीतरुः।
कवितामञ्जरी यस्य रामभ्रमरभूषिता" ॥

( २ ) गोपालदासो नाम कविः स्वरचित "रामायणमाहात्म्य" ग्रन्थे एवं लिखति यत्—

आनन्दकाननेऽस्मिन् काशीक्षेत्रे निवसतो महात्मनस्तुलसीदासस्य पाण्डित्यं काशीस्थास्तदानीन्तनाः पण्डितप्रकाण्डा नाङ्गीकुर्वन्तः, तस्मिन्नेव काले काश्यां सर्वसुधीधौरेयाणाम् श्रीमताम् "आनन्दकाननब्रह्मचारि" महानुभावानां मुखारविन्दादुपर्युक्तं संस्कृतपद्यमाकर्ण्य वाराणसेयाः सर्वेऽपि विपश्चिदुत्तमा महात्मनस्तुलसीदासस्य पाण्डित्यं सहर्षं स्वीचक्रुरिति।

( ३ ) गोस्वामी तुलसीदास एकदा काश्यां मणिकर्णिकाघट्टे स्नातुमायातः। तदानीमेकः सुधीधौरेयस्तमवोचत्—"भो गोस्वामिवर्य! संस्कृतस्य साहित्यस्य महता पण्डितेनापि सता भवता हिन्दीभाषायां कथं नु कविता क्रियते?" तुलसीदास उवाच—"संस्कृतलिखितया नायिकावर्णनरूपया कवितया रामरसार्द्रा हिन्दीकविताऽपि मदीया शोभनैव वर्त्तते" पण्डितोऽब्रवीत्—"कथमिव?" सोऽवदत्—

"मणि भाजन विष पारई पूरन अमी निहार,
का छाँडिय का संग्रहिय कहहु विवेकविचार" ( हिन्दी )

( ४ ) गोस्वामितुलसीदाससमकालीनो घनश्यामशुक्लो नाम संस्कृतकविः संस्कृतसाहित्यस्य साधीयान् पण्डित आसीत्। किन्तु तेन हिन्दीभाषायामेव बाहुल्येन कविता विरच्यते स्म। हिन्दीकविताविधानेन वाराणसेयाः केचन पण्डितास्तस्मै भृशमकुप्यन्त। ततो विषण्णमनाः पण्डिताग्रगणनीयो घनश्यामशुक्लस्तुलसीदासमपृच्छत्—"मया कस्यां भाषायां, सुरभाषायां हिन्दीभाषायां वा कविता लेखनीया?" ततस्तुलसीदासस्तमुवाच—

का भाषा का संस्कृत, प्रेम चाहिये साँच,
काम जो आवे कामरी का लैकरै कमाँच" ( हिन्दी )

रामचरितमानसनामके हिन्दीरामायणे महात्मना तुलसीदासेन प्रायः श्रुतिस्मृतिपुराणादिधर्मग्रन्थानामनुवाद एव कृतः। तेन हिन्दी रामायणस्य प्रारम्भ एवेदं प्रतिश्रुतमास्ते—

"नानापुराणनिगमागमसम्मतं यत्
रामायणे निगदितं क्वचिदन्यतोऽपि ।
स्वान्तःसुखाय तुलसी रघुनाथगाथां —
भाषानिबन्धमतिमञ्जुलमातनोति" ॥

एतस्य कतिचिदुदाहरणानि अधो निर्दिश्यन्ते—

वर्षावर्णनम् , भागवते यथा—

मूलम्—मेघागमोत्सवा हृष्टाः प्रत्यनन्दन् शिखण्डिनः ।
गृहेषु तप्ता निर्विण्णा यथाऽच्युतजनागमे ॥

अनु०—लछिमन देखहु मोरगन, नाचत वारिद पेखि ।
गृही विरत रत हरष जस, विष्णु भगत कहं देखि ॥

मूलम्—श्रुत्वा पर्जन्यनिनदं मण्डूका व्यसृजन् गिरः ।
तूष्णीं शयानाः प्राग् यद्वद् ब्राह्मणा नियमात्यये ॥

अनु०—दादुर धुनि चहुँ ओर सुहाई । वेद पढ़त जनु बटु समुदाई ।

मूलम्—क्षेत्राणि शस्यसम्पद्भिः कर्षकाणां मुदं ददुः ।
धनिनामुपतापं च दवाधीनमजानताम् ॥

अनु०—ससससम्पन्न सोह महि कैसी । उपकारीकै सम्पति जैसी ।

मूलम्—जलौघैर्निरभिद्यन्त सेतवो वर्षतीश्वरे ।
पाखण्डिनामसद्वादै र्वेदमार्गाः कलौ यथा ॥

अनु०—हरित भूमि तृण संकुल, समुझि परहिं नहिं पंथ ।
जिमि पाखण्ड विवादतें, लुप्त होहिं सद् ग्रन्थ ॥

शरद्वर्णनम् , भागवते यथा—

मूलम्—शरदा नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः ।
भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया ॥

अनु०—सरिता सर निर्मल जल सोहा । संत हृदय जस गत मद मोहा ।

मूलम्—खमशोभत निर्मेघं शरद्विमलतारकम् ।
सत्वयुक्तं यथा चित्तं शब्दब्रह्मार्थदर्शनम् ॥

अनु०—विनु घन निर्मल सोह अकासा । हरिजन इव परिहरि सब आसा ।

ईश्वरसम्बन्धे, उपनिषदि यथा—

मूलम्—अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः ।

स वेत्ति वेद्यं न च तस्यास्ति वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम् ॥
अनु०—पद बिनु चलै सुनै बिनु काना ।
कर बिनु कर्म करै विधिनाना ॥
आनन रहित सकल रस भोगी ।
बिनु वाणी वक्ता बड़ योगी ॥ इत्यादि

भगवद्गीतायां यथा—

मूलम्—यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥
अनु०—जब जब होंहि धर्मकी हानि ।
बाढ़ैं असुर महा अभिमानी ॥
तब तब धरि प्रभु विविध शरीरा ।
हरहिं दयानिधि सज्जन पीरा ॥ इत्यादि ।

महात्मनस्तुलसीदासस्य मानसरामायणं हिन्दीपुस्तकमद्भुतं रत्नम् । श्रीमता भारतधर्ममहामण्डलेन त्रिविधविज्ञानसंवलितया टिप्पण्या सनाथीकृत्य इदं पुस्तकरत्नं स्वयमेव प्रकाशितम् । जिज्ञासुभिर्नूनमिदमानाय्य द्रष्टव्यम् ।

---

श्रीबदरीनाथमन्दिरव्यवस्था ।

बहोः कालात् पूर्वत एव श्रीबदरीनाथतीर्थस्य अव्यवस्थाविषये बहुविधास्त्रुटयः श्रूयन्ते । त्रुटिवारणार्थं समये समये सनातनधर्मावलम्बिनी जनताऽपि अनेकान् प्रस्तावान् समुपास्थापयत् । सम्प्रति भारतीयराज्यसंचालका उपर्युक्तं तीर्थं श्रीटेहरीराजाधीनं विधाय तत्रत्यत्रुटिसमूहमपाकर्त्तुमिच्छति ।

यू. पी. गवर्न्मेण्टनियुक्तया निरीक्षकसमित्या ( जाँचकमेटी ) स्वीये वक्तव्ये श्रीबदरीनाथतीर्थपुरोहितस्य श्रीरावलमहाशयस्य अश्राव्यदोषाः प्रकटीकृताः । पूजासम्बन्धिनीभिः संख्यातीताभिस्त्रुटिभिः सार्द्धं रावलमहाशयस्य दुश्चरित्रतापि तया प्रकाशिता ! तत्रत्यतीर्थधनस्य रावलेन नितरां दुरुपयोगः क्रियते इत्यपि तया प्रदर्शितम् ! ज्ञात्वैतत् सर्वं कः सनातनधर्मा सहृदयो वा मानवो न चेखिद्येत ?

अखिलभारतीयसनातनधर्मसभायाः श्रीभारतधर्ममहामण्डलस्य मन्त्रिसभया नवम्बरमासस्यैकादश्यां तिथौ ( सन् १९३२ ) विषयेऽत्र यू० पी० गवर्न्मेन्टसमीपे टेहरीनरेशस्यैवानुकूला स्वीया सम्मतिः प्रहिता । तदानीं समये श्रीभारतधर्ममहामण्डलसंबद्धा असंख्या धर्मसभाः प्रान्तीया मण्डलपरिषदश्चैकवाक्यतामाश्रित्य टेहरीनरेशस्यैव पक्षं समर्थितवत्यः ।

सम्प्रति श्रीभारतधर्ममहामण्डलप्रधानकार्यालये भारतस्य तत्तत्प्रान्तेभ्यो बहूनां जिज्ञासापत्राणि समायातानि । तद्गतशङ्कासमाधानार्थं श्रीमहा-

मण्डलेन कृतानां प्रश्नानां समाधानाय श्रीटेहरीनरेशपक्षत एकं विस्तृतपत्रं महामण्डले समागतम् । तत्पत्रमानुरूप्येणैवात्युपयोगितया महामण्डलेन स्वीये घोषणापत्रेऽविकलं प्रकाशितम् । तदवलोक्य सर्वविधा अपि शङ्का निवर्तन्ते ।

हंहो को वा सनातनधर्मप्राणः सनातनधर्मावलम्बिनो नरेशस्य सुप्रबन्धे सन्दिहानोऽन्यधर्मावलम्बिनो राज्यप्रबन्धस्याधिकारे सनातनधर्मसर्वस्वभूतदेवमन्दिरादीनां व्यवस्थाभारमर्पयेत् ? तदर्थं वाऽनुमतिं दद्यात् ? श्रीटेहरीनरेशस्तु सर्वथा सनातनधर्मावलम्बी स्वाधीनो नरपतिः । एतस्य सुप्रबन्धेन शतशो देवमन्दिराणां सनातनधर्ममर्यादानुसारं तदीयराज्ये सर्वविधकार्यजातं सुचारुरूपेण प्रचलति । अतो वयं वाराणसेयाः पण्डिता अपि अखिलभारतवर्षीयसंस्कृतविश्वविद्यालयमुखपत्रं सूर्योदयं द्वारीकृत्य, नैजं मतमुद्घोषयामो यत् श्रीबदरीनाथमन्दिरस्य सर्वोऽपि प्रबन्धभारः श्रीटेहरीनरेशस्यैवाधिकारे तिष्ठत्विति ।

---

## खेदजनकोऽसवर्णविवाहः ।

जानन्त्येव समाचारपत्रपठनपरायणाः पाठकमहानुभावा यत् श्रीमतो गान्धिमहोदयस्य पुत्रेण श्रीमता देवीदासगान्धिना सह श्रीयुक्तराजगोपालाचारिणस्तनूजायाः परिणयसम्बन्धो जात इति । इत्यपि सर्वेषां विदितचरमास्ते यत् श्रीमान् गान्धिमहोदयः वैश्यकुले, श्रीमान् राजगोपालाचारी च ब्राह्मणकुले समुत्पन्न इति । यद्यपि वरकन्ययोरवस्थायां दृष्टिपातेन पाणिपीडनसम्बन्धि सर्वमप्युत्तरदायित्वमुभयोरेवोपरि प्राधान्येन वर्त्तते किन्तु तयोः पितरौ वैश्यब्राह्मणौ अपि नो स्तः सर्वथा निर्दोषावित्यपि सर्ववादिसम्मतम् । केचन कथयन्ति यत् वरकन्ययोः प्रगाढप्रेमपरिणाम एवात्र निदानम्, पाणिपीडनतः प्रागेव उभाभ्यां स्वीयं सम्बन्धकृत्यं कृतमासीदत्र तत्पित्रोः को दोष इत्यादि । किन्तु तत्पित्रोर्यदि वर्णसंकरताप्रचारके कृत्येऽत्र नासीत् सम्मतिस्तर्हि उभयोरौदासीन्यमेव समुचितम् । परन्तु न तथा दृश्यते । वधूवरयोराशीर्वाददानादिकं कार्यं तत्पितृभ्यामपि कृतमेव । इतः पूर्वमपि साबरमतीस्थाने एकस्य मदरासप्रान्तीयब्राह्मणकुमारस्योद्वाहः, अस्पृश्यजातीयया कन्यया सहाभूत् ! कन्येयं श्रीमतो गान्धिमहोदयस्य पालिता पुत्रीति श्रूयते । किं गान्धिमहोदयस्यानुमतिमन्तरेण कथमपि तस्याः परिणयो भवितुमर्हति ? अतो नास्त्यत्र सन्देहो यत् गान्धिमहोदयस्य वर्णाश्रमधर्मे नास्त्येव विश्वास इति । वयन्तु विवाहदिवसादारभ्य गान्धिमहोदयस्य नाम्नः प्राग् 'महात्मा' इति पदं दातुमपि नोचितं मन्यामहे । हन्त ! खिद्यते चेतो यत् श्रीमान् गान्धिमहोदयः स्पृश्यान्दोलनम्, अस्पृश्यानां देवमन्दिरप्रवेशविषयकविधाननिर्माणम्, असवर्णविवाहश्चेत्यादिधर्मघातकान् कार्यकलापान् प्रचार्य भारतीयां राष्ट्रमहासभां स्वयमेव छिन्नां भिन्नां च कृतवान् । वयं राष्ट्रस्य शुभचिन्तकाः स्मः । परमात्मा भारतीयराजनीतिकार्यकर्तृणां धियस्तथा प्रचोदयात्, यथा भारतवर्षस्य सर्वतोऽभ्युदयो भवेदिति ।

---

# गीर्वाणवाण्या अभ्युदयोपायाः।*

ले०—डाक्टर विद्यारत्न श्रीमङ्गलदेवशास्त्री एम्० ए०, डी० फिल०,
(आक्सफोर्ड)।

किञ्च— (क्रमागताः)

विप्रोऽपि यो भवेन्मूर्खः स पुराद् बहिरस्तु मे।
कुम्भकारोऽपि यो विद्वान् स तिष्ठतु पुरे मम॥ (भोजप्रबन्धे)
काव्यं करोमि नहि चारुतरं करोमि,
यत्नात् करोमि यदि चारुतरं करोमि।
भूपालमौलिमणिमण्डितपादपीठ!
हे साहसाङ्क! कवयामि वयामि यामि॥

भोजप्रबन्धे भोजं प्रति कुविन्दस्यैकस्य वचनम्। इत्यादिसाक्ष्यानुसारं न केवलं मनुस्मृत्यादिधर्मशास्त्राणामादेशमनुसृत्य द्विजेष्वेव तस्याः प्रचार आसीत्, किन्तु द्विजातिव्यतिरिक्तैः सूतकुविन्दकुम्भकारादिभिरपि साधीयते स्म। 'प्रत्यभिवादेऽशूद्रे' इति पाणिनिसूत्रेऽशूद्रग्रहणेन निरुक्तेऽष्टाध्याय्यां च तस्या भाषात्वव्यवहारेण च तस्याः प्राचीनकाले सार्वजनीनः प्रचार एव द्योत्यते। किञ्च—

मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्।
अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः॥

इत्यनेन कुलपतिलक्षणेन इतिहासप्रसिद्धानां नालन्दातक्षशिलादिविश्वविद्यालयानामद्यतनीयानामपि विदुषां विस्मयोत्पादकेन वृत्तान्तेन च देववाण्याः पुरा प्रचारातिशय एवानुमीयते। भारतवर्षेऽप्यनुपलब्धानामनेकेषां संस्कृतग्रन्थानां चीनतिब्बतप्रभृतिदेशीयभाषासूपलब्धैरनुवादग्रन्थैरपि देववाण्याः सैव गुणगाथा गीयते।

एवं सति अद्यत्वे विस्तरदृष्ट्याऽन्यथा वा सर्वथा संकुचितगात्रा हीना दीना च दृश्यमाना सा कथं न कदर्थयेदस्माकं चेतांसि। न केवलं द्विजातिव्यतिरिक्तैः कुविन्दादिभिः ब्राह्मणव्यतिरिक्तैः क्षत्रियादिभिरेव वा तस्या अध्ययनाध्यापनं परित्यक्तम्, किन्तु ब्राह्मणेष्वपि अत्यल्पा संख्यैव तस्या अध्ययनाध्यापनपरा दृश्यते। तत्रैतस्याः प्रत्यक्षाया अवनतेः कानि कारणानि,

* २८-११-१९१३ इस्वीतिथ्यां काशीसंस्कृत समितौ पठितः, लेखकस्य 'प्रबन्धप्रकाश' नामकग्रन्थात् समुद्धृतश्चायं प्रबन्धः।

कथं च तस्याः पुनरपि प्रचारबाहुल्यं सम्भवतीति विचारणीयम्। प्रथमं तावदवनतिकारणानि संगृह्यन्ते।

अवनतिकारणनिर्देशप्रसङ्ग एतत्तावदवधारणीयं यदुक्तावनतेः कारणानां द्वैविध्यं वर्तते। प्रथमं खलु तानि कारणानि सन्ति, येषां विषये संस्कृतभाषाभ्युन्नतिं चिकीर्षवो वयं चिरकालादेव निरुपाया विवशाश्च संवृत्ताः स्मः। तद् यथा विदेशीयराजशासनम्, विदेशीयसभ्यताप्रचारः, आधुनिकभारतवर्षे विभिन्नानां नूतनधर्माणामुदयो विभिन्नधर्मावलम्बिनां सङ्घर्षश्च। नियतमेव सत्स्वेतेषु सर्वथा नूतनकारणेषु संस्कृतभाषायाः पुनरपि प्राक्कालीना समुन्नतिरसाध्या। परमुक्तकारणभिन्नानि यानि तदवनतिकारणानि, तेषां प्रतीकारविषये सर्वथैव स्वाधीनाः परमुखानपेक्षिणश्च वयम्। अत एवात्र प्रसङ्गे तेषामेव निर्देशः समुचितः। तादृशकारणानि चैतानि—

(१) लेखशैल्याः काठिन्यम्। प्राचीनग्रन्थानां विषये सर्वविदितमेवैतद्वृत्तं यत्तेषां लेखशैली स्वाभाविकी अत एव सरला प्रसादवृत्तिबहुला च विद्यते। नूतनग्रन्थानां पुनरन्यथैव गाथा। मूलग्रन्थानामपेक्षया टीकाग्रन्थानां अधिकतरं काठिन्यं कस्याविदितम्। न चैतादृशी वार्ताऽन्यासामुन्नतानामाधुनिकीनां भाषाणां विषये।

(२) अर्थगौरवमन्तरेण शब्दाडम्बरेऽत्यादरः। गद्यपद्यात्मकेषु काव्यग्रन्थेषु प्रसिद्धैव वार्तैषा। प्राचीनानां कवीनामर्थालङ्कारेषु यादृशः समादरो न तादृशः शब्दालङ्कारेषु। उत्तरकालवर्तिनां कवीनां तु विषय एतद्विपरीतमेव। एतादृश्येव दशाऽन्यविषयकग्रन्थेष्वपि विद्यते।

(३) विचाराणामनुदारता सङ्कीर्णता च। प्राचीनदर्शनादिग्रन्थानामनुशीलनेन स्पष्टमेतत्प्रतीयते यत्तेषां कर्त्तारः स्वविरुद्धमतानामपि सम्यगेवाध्ययनं मननं च कृत्वैव तेषां खण्डनाय प्रवृत्ता आसन्। ज्योतिषादिविषयेषु यवनाद्याचार्याणामपि सिद्धान्तान् सम्यगधीत्य तद्विषये स्वभाषायां निबन्धान् निबध्य तेषां प्रचारं कृतवन्तः। जैनादिनिर्मितानामप्यमरकोशादिग्रन्थरत्नानां सादरमध्ययनाध्यापनं प्राचीनकाले क्रियते स्म। या च परिपाटी अद्यापि दिष्ट्या न सर्वथा समुच्छिन्ना। समुचितमेव चैतदाचरणमासीत्। विरुद्धविचाराणां सङ्घर्षत एव, द्वयोर्मल्लयोः परस्परमल्लयुद्धेन तयोर्बलस्येव, ज्ञानस्योन्नतिरुत्कर्षश्च जायते। अन्यथा कूपमण्डूकवदाचरन्तोऽनुदारविचाराः सङ्कीर्णहृदयाश्च मानवा अवनतेर्मुखमवश्यं पश्यन्ति। अद्यत्वे चिरकालादेव सर्वथानुदारा एतस्मिन् विषये संस्कृतभाषाध्ययनाध्यापनकर्तारः सञ्जाताः।

न केवलं नूतनपाश्चात्यविचाराणामेव विषये तेषामेतादृशी सङ्कीर्णा मतिः, किन्तु स्वदेशीयविरुद्धमतानामपि विषये ।

(४) तस्याः शिक्षणेऽनुदारता, उपरिनिर्दिष्टमेव यत्पुराकाले भारते सर्वसाधारणजनतायां देववाण्याः प्रचार आसीत् । परमद्यत्वे संस्कृताध्यापकानामतीवानुदारा मतिरस्मिन् विषये । आस्तां तावद् द्विजातिव्यतिरिक्तानां शूद्राणामध्ययनस्य वार्ता । द्विजानामपि सर्वेषामध्यापने महान्तं सङ्कोचमनुभवन्त्यद्यतनीया विद्वांसः । हिन्दूजात्यन्तर्गतानामपि जैनादीनां त्वध्यापनवार्त्तैव प्रायस्तेषां शिरःसु पीडां समुत्पादयति ।

(५) असहिष्णुता—प्रायः संदृश्यते यत् संस्कृतविद्वांसोऽतीवासहिष्णवो नहि तथा परस्परं सौहार्देन सौमनस्येन च वर्त्तितुं समर्था भवन्ति यथाङ्गलभाषाभाषाणामध्येतारः । एकस्मिन्नेव विद्यालयेऽध्यापनकार्यमाचरत्सु तेषु परस्परमीर्ष्यादिबाहुल्यमालोक्यते ।

अथैतस्यां हृदयविदारिकायामवस्थायां समुपस्थितायां कथं पुनरपि तस्याः प्रचारबाहुल्यं सम्भाव्यते, किं च तामुन्निनीषुभिस्तदर्थं कर्तव्यमित्यधस्तात् संक्षेपेणैव द्योत्यते । यद्यप्यवनतिकारणविचारणयैव सामान्यतोऽर्थादापद्यते के क उपायास्तस्या उन्नतेरिति तथापि विस्पष्टार्थमन्येऽपि केचिदुपाया निर्दिश्यन्ते । एतेषामुपायानां विचारेण केषाञ्चित् पूर्वमनुक्तानामवनतिकारणानामपि भानमर्थापत्त्या भविष्यति । उन्नतेरुपायाश्चैते—

(१) पठनशैल्याः संस्कारः । अद्यत्वे छात्राणां तत्तद्विषयेषु तत्तद्ग्रन्थेषु चाधिकारित्वानधिकारित्वनिर्णयं योग्यत्वायोग्यत्वविचारं चान्तरेणैव तत्तद्ग्रन्थानध्यापयितुं प्रवर्त्तन्ते प्रायशः संस्कृताध्यापकाः । उदाहरणार्थमनेके छात्राः संस्कृतवाक्यरचनामप्यजानन्तो लघुकौमुदीं वैयाकरणसिद्धान्तकौमुदीं वा रघुवंशादिकाव्यानि च पठितुं प्रवृत्ता जायन्ते । एवं च तेषां परिश्रमस्य समयस्य च व्यर्थमेव नाशो भवति ।

(२) उपयोगिग्रन्थसञ्चारः । उक्तहेतोः संस्कृतभाषायां तत्तद्विषयेषु च प्रविविक्षूणां हितदृष्ट्योपयोगिबालपाठावल्यादीनां तत्तद्विषयेषु च बालोचितपाठ्यपुस्तकानां निर्माणमावश्यकम् ।

(३) प्राचीनग्रन्थानां विशेषत आकरग्रन्थानामुद्धाराय तेषां पठनपाठनप्रचारोऽस्यावश्यकः । नवीनग्रन्थानां वस्तुतोऽर्थावगमाय तत्तच्छास्त्राणामितिहासस्य ज्ञानार्थं चाप्युक्तार्थस्यावश्यकता । अन्यथा 'मूले शुष्के नैव पत्रं न पुष्पम्' इति न्यायेन नवीनग्रन्थानामपि ह्रासोऽनिवार्यः ।

( ४ ) शिक्षणविधौ दक्षाणामध्यापकानामावश्यकता । अध्यापनकार्ये विशेषतश्च बालानामध्यापने दक्षाणामध्यापकानामतीवोपयोगिता । एवमेव सुलभोपायेनाल्पसमयेनाऽनायासेन च बालानां तत्तच्छास्त्रेषु प्रवेशः कर्त्तुं शक्यते । ततश्च यथावश्यकमध्ययनाध्यापनविधौ परिनिष्ठिता अध्यापकाः यथा सम्पद्येरंस्तथा विधेयम् ।

( ५ ) संस्कृतज्ञेषु सौहार्ददार्ढ्याय तत्तद्विद्यालयेषु पाठशालासु च विद्यापरिषदामावश्यकता, यत्र विभिन्नविषयानुद्दिश्य प्रेमपुरःसरं लेखद्वाराऽन्यथा वा वादविवादव्यवस्था भवेत् । एवमेव च सभासंञ्चालनकुशला वक्तृताशक्तिसम्पन्नाश्च संस्कृतभाषाध्येतारो भवितुं प्रभवन्ति ।

( ६ ) संस्कृतभाषया सहोपयोगिनामन्येषां विषयाणामप्यध्ययनं विधेयम् । तद् यथा गणितस्येतिहासस्य भूगोलविद्यायाश्च । अनेनैवोपायेन संस्कृताध्येतृषु सामान्यव्यवहारबुद्धेः समुत्पत्तिः सम्पादयितुं शक्यते ।
अन्यथा—

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः ।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः ॥

इत्युक्त्यनुसारं साम्प्रतमिव सदा संस्कृताध्येतारः प्रायेणोपहास्यतामेव यास्यन्ति ।

( ७ ) नूतनपाश्चात्यविद्यानां स्वदेशीयप्राचीनविद्यानां च समन्वयार्थं याथार्थ्येन तासां गुणदोषविवेचनार्थं च समालोचनाबुद्धेः प्रादुर्भावः परिमार्जनं च संस्कृतज्ञेष्वतीवावश्यके । एवमेव ते प्राचीनाचार्या इव तत्तद्विद्यासु नूतनविचाराणां सृष्टौ समर्था भवितुमर्हन्ति नान्यथा ।

त एते समासत एव गीर्वाणवाण्या अभ्युदयोपाया निर्दिष्टाः । आशासे गुणदोषविवेचका माननीयास्तत्रभवन्तः सामाजिकास्तदेतत्सर्वं विचार्य यदत्रानुपयोगि सदोषं वा तदपहाय यदुपयोगि गुणयुक्तं च तदङ्गीकरिष्यन्ति । यतो हि "गुणगृह्या वचने विपश्चितः" तत श्चान्ते सविनयं ममैषाभ्यर्थना—

सारं ततो ग्राह्यमपास्य फल्गु हंसैर्यथा क्षीरमिवाम्बुमध्यात् ।

—:०:—

# एकश्चन्द्रस्तमो हन्ति नहि तारासहस्रकम् ।

अथवा—

# क्षणं प्रज्वलितं श्रेयो नहि धूमायितञ्चिरम् ।

प्रणेता—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री शुजाबादाऽभिजनः ।

( 'मुलतान' स्थ-श्रीसनातनधर्म्मसंस्कृतकालेजाऽध्यापकः )

प्राच्यधर्म्मभानुस्वर्भानुर्मोहकवाग्भाग् एकस्सुधारकमहाशयो हिन्दुजातेर्नृशंसतामाचक्षाण इत्थं तामधिक्षिपति स्म; यद्—"एकाऽप्रतिमा रूपप्रतिमा काचिद् विधवा पञ्चशर-शरशरव्यतया अन्तर्व्वत्नी जाता। सा प्रसवमियेष। कोऽपि हिन्दुस्तस्यै तदर्थं स्थानप्रदानं नाऽन्वमंस्त। अचकथदथ सा—कोऽपि मह्यं स्थानन्नाऽर्पयति; तर्ह्यहं यवनमन्दिरे ( मस्जिद ) एव प्रसवङ्करोमि, यवनी च भवामि—" इति कीदृशं हिन्दूनामनौदार्य्यम्। "एका हिन्दु-वेश्याऽभ्यधाद्-अहं यवनी भवामि। यतो मयि मृतायां मदीयं शवं कोऽपि हिन्दुर्नोत्थापयिष्यति" इति कीदृक्षा हिन्दूनां निर्दयता। "हिन्दुधर्म्मस्य नियमाः कठिना अत एवाऽत्याचाररूपास्सन्ति, इमे लघयितव्या(१)अधुना; येन हिन्दूनामस्तित्वं न नश्येत्(२)तदीया सङ्ख्या च ह्रसिमानं नाऽऽपद्येत(३) अमीषामेव नियमानाङ्कारणाद् हैन्दवी सङ्ख्या दैनन्दिनं क्षीयते इति।"

अस्मिन्नाक्षेपे वयं मीमांसिषामहे(४)किञ्चित्; अनुयुयुक्षामहे(५)च सुधारकान् यद्-अयि भोः! दयोदयोद्रेकवन्तो भवन्तो हिन्दूनां सङ्ख्यां विवर्द्धयिषन्ति? आहोस्विद् हिन्दुधर्म्ममुन्निनमयिषन्ति? यदि हिन्दुधर्म्ममुन्निनमयिषन्ति; तर्हि तु भवन्तो धर्म्मविरुद्धं प्रवृत्तायै विधवायै हिन्दुभिः स्थानं प्रदाप्य तदीय-व्यभिचारमनुमुमोदयिषन्ति, अथवाऽदसीयधर्म्मविरुद्धोत्साहमेदिधयिषन्ति। अथ

( १ ) लघयितव्याः। लघवः कर्त्तव्याः। तत्करोतीति णिचि इष्ठवद्भावाट्टेर्लोपः।

( २ ) नश्येत्—कर्त्तरि परस्मैपदमिदम्; अनुदात्तेदादिभ्यः शिष्टत्वात्।

( ३ ) आपद्येत। कर्त्तरि तङ्; अनुदात्तेत्त्वात्।

( ४ ) मीमांसिषामहे। 'सन्नन्तान्न सनिष्यते' इति स्विह न; इच्छासन्नन्तादेव तन्निषेधात्। ( ५ ) अनुयुयुक्षामहे। 'स्वरितञितः—' इति तङ्। 'पूर्ववत् सनः' ॥

च वेश्यामपि यवनत्वाद् दूरीकृत्य वेश्यानां वृद्धिं तत्कर्म्मसमर्थनं वा विधित्सन्ति । तत् किमयमेव हिन्दुधर्म्माभिमानो नाम ?

यदि भवन्तो हिन्दुसङ्ख्यामुद्वेलयितुमभिलषन्ति; तर्हि नामधारकाणामेव हिन्दूनां गणनां मेदुरयितुमीहन्ते भवन्तः ? अथवा हिन्दुधर्मधारकाणां तेषाम् ? आद्ये को लाभश्चिन्तितो भवद्भिः । अन्त्यपक्षाऽभ्युपगमो यदि; तर्हि धर्म्माऽनुयायिन⁀पुंस⁀कामयन्ते भवन्तः ? पुरुषाऽनुयायिनं धर्म्मं वा ? आद्ये—तादृशविधवावेश्यादिकानां पूर्व्वदिशा पापकर्म्माऽसमर्थका⁀पुरुषा(१)अनुदारा⁀कथं कथ्येरन् ? अन्त्ये—भवन्तः स्वकीयधर्म्मं नियमानपास्य यवनेशवीयानां नियमानुरीकुर्व्वन्तस्सन्ति; तर्हि भवतां हिन्दुत्वव्यपदेशस्य काऽऽवश्यकता ? अथवा भवन्तो यवनेशवीयान् कथं विरुन्धन्ति ? यद्वा-भवन्तस्तेभ्य⁀कथमतिरिच्यन्ते भिद्यन्ते वा ? किं यवनेशवीयानां कर्म्माचरणं हिन्दुधर्म्मविद्रोहश्च इत्येव हिन्दुलक्षणम् ? तर्हि यवना ईशवीयाश्च के स्थास्यन्ति ? एवन्तु समस्ता संसृतिरेव हिन्दुत्वव्यपदेशभाग् भवितुमर्हति; श्रेयानयमुपायो हैन्दवसङ्ख्यावृद्धौ । हन्त ! हिन्दुधर्म्मनियमैस्सह विरोधादेव तु माहम्मदानामीशवीयानाञ्च सृष्टिः सृष्टा जाता । भवन्तोऽपि यदि स्वैरं नियमान् निर्म्मित्सवो(२)माहम्मदादींश्चाऽनुचिकीर्षवः; तर्हि तेभ्य⁀कथं क्रुध्यन्ति ? कथञ्च स्वसङ्ख्यावृद्धि-रक्षणास्सन्ति ? अथ भवन्तस्तेषामिमा वार्त्ता-श्रमंसत, श्वोऽन्या मन्तारः, तर्हि हिन्दुधर्म्मस्य धर्म्माभासान्तरेभ्य⁀को व्यतिरेकः स्थास्यति ?

हिन्दव एतदर्थं तादृशविधवाभ्यो वेश्याभ्यो वा स्थाननिषेधं न कुर्व्वन्ति, यत्-ते निर्दयाः, अथवा तेषां हिन्दुषु (३) ममता न, अथवा ते स्वसङ्ख्यां ह्रसयितुं वाञ्छन्तीति । हिन्दवो निर्दयाश्च-इत्यत्र तु वैयधिकरण्यमेव । ये हिन्दवो नागपञ्चम्यां स्वशत्रोरपि नागस्य पूजनं रक्षणं वा कुर्व्वन्ति; ते निर्दया

( १ ) पुरुषा अनुदाराः । 'पुरुषाः' इत्यस्याऽवसाने विसर्गः, तस्य 'अनुदाराः' इत्यनेन समभिव्याहारे सस्याऽभावाद्रुत्वादिप्राप्तिर्न जायते । अत एवाऽत्र 'स्वौजसमौट्' इति जस । स एव च मूलभूत इति रुत्वादिकं स्यादेव । विसर्गस्त्विह खरवसानाभावान्न भवति । भाविन्यवसानभङ्ग 'अकृतव्यूह' परिभाषया अनुदारपदसमभिव्याहारात् पूर्वमपि न भवति ।

( २ ) निर्म्मित्सवः । 'सनि मीमा' इतीस् । 'अत्र लोपोऽभ्यासस्य' 'स स्यार्धधातुके' इति तः ।

( ३ ) ममता । अत्र 'ममे' ति विभक्तिप्रतिरूपकमव्ययम् ; तस्मात् तल् ।

नैं व्यपदेष्टुं शक्यन्ते । तेषां स्वजातीयैर्ममताऽपि मता । ते स्वसङ्ख्यामून्नयितुमपि नेच्छन्ति । परं ते तु—

'अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति'

इत्येतत्सिद्धान्तप्रणयिनः । ते जानन्ति—सकृदेवं विधानेन सर्व्वाण्यपि धर्म्मविरुद्धानि पापान्यस्मदङ्गानि भविष्यन्ति; अत एव ते स्वधर्म्मविरुद्धकार्य्ये सदा पृष्ठदर्शिन एव भवन्ति । तदर्थन्तु स्मृतिषु ईदृशदुराचाराणां कृते दण्डो व्यवस्थापितः—

जारेण जनयेद् गर्भं मृते त्यक्ते गते पतौ ।
तां त्यजेदपरे राष्ट्रे पतितां पापकारिणीम् ॥'

—पराशरः ।

ईदृशस्वधर्म्मनियमपालनं चेद् हिन्दूनां निर्द्दयता, हिन्दूनामनुदारता, हिन्दूनां देशद्रोहिता वा मन्येत; तर्हि—नेऽसंशयं निर्द्दयाः, असन्देहमनुदाराः, नूनं ते देशद्रोहिणः । ईदृशपदवीग्रहणाऽर्थं ते लालायितास्सन्ति । धर्म्मविरोधात् सदयता उदारता सहृदयता च यदि प्राप्यते; ते तां घृणास्पृशा दृशा पश्यन्ति । तादृशोपाधयो विधर्म्मपक्षदक्षेभ्य एवोपह्रियन्ते । वस्तुतस्तु स्वैराचाराणां हिन्दूनां नाशः प्रवर्त्तमान एव स्थास्यति । ईदृशानाञ्च नाशेन भवितव्यमेव ।—

'एकश्चन्द्रस्तमो हन्ति नहि तारासहस्रकम्'

परश्शतानामपि मूषिकाणां चर्म्मणा मृदङ्गो न निर्म्मातुं शक्यते । ईदृशा हिन्दवो भूशायिता अपि हिन्दुधर्म्मस्य कामुन्नतिं कर्त्तुमीशते ? हिन्दुधर्म्मं द्राघयितुं सत्य एव स्त्रियश्शक्ताः नाऽसत्यः, व्यभिचारिण्यो विधवा वा । कुलीना एव समर्था उन्नमयितुम् ; न वाराङ्गनाः । सदाचार एव प्रभवति तं प्रसारयितुं न कदाचारः स्वैराचारो वा । हिन्दुजातिं त्रातुं हिन्दुधर्म्मं एवेष्टे, नहि हिन्दुनामधारिणी सङ्ख्या-इति निर्गलितोऽर्थः । यत् पातिव्रत्यं सनातनधर्मस्य प्राणायितम् ; व्यभिचारिणीभ्यो विधवाभ्यः सौविध्याऽर्प्पणेन तत् किं स्थास्यति ? पतिव्रता अपि पुनर्व्यभिचारिणीभ्योऽवलम्बमर्प्यमाणं दृष्ट्वा स्वकठिनधर्म्ममपि विस्रष्टुमेषिष्यन्ति स्ववैशिष्ट्याऽदर्शनात् ।

एवं विषयान् (१)अभिलाषुकाणां पुंसां जातिवर्ज्जनादिविभीषिकया धार्म्मिकनियमाञ्छिथिलीकृत्य यदा तेभ्यस्सर्व्वविधं सौविध्यं दातुमुद्यता भविष्यन्ति सुधारकाः; तदा कश्चिदभिधास्यति—"अहमिमां यवनसुन्दरीं

(१) विषयान् अभिलाषुकाणाम् । 'न लोके' ति षष्ठी निषेधाद् द्वितीया ।

परिणेतुमिच्छामि; यदि हिन्दवोऽत्र विघ्नन्ति, अहं यवनो भवामि । कश्चित् वैश्य॒कथयिष्यति अहं ब्राह्मणकुमारीं विवोढुमीहे, एतदनुमोदनं हिन्दुभिर्विधेयम्; अन्यथाऽहमीशवीयो भवामि । कोऽप्यस्पृश्यो वदति—मम क्षत्रियबालया सह पाणिपीडनं कार्य्यम्; इतरथाऽहं माहम्मदमतं प्रविशामि । अपरो जल्पिष्यति—मया माहम्मदसद्मनि ईशवीयालये च भुक्तम्, हिन्दुभिरेतत्समर्थनीयम्—अपरथाऽहं हिन्दुधर्म्मं मुञ्चामि । अन्यो वदिष्यति अहं वेदादीनामाज्ञाया आचरणे बाध्यो नाऽस्मि; यद्यहं भवद्भिर्बाध्य॒क्रियेय तर्ह्यहं विधर्म्मा भवेयम्" इत्यादि ।

अयि सुधारकाः! किम्भवन्तोऽधस्तादुक्तानामधर्म्माचारिणां वार्त्तां मत्वा धर्म्मस्य नियमांस्तथैव क्रमशो विपरिणतान् करिष्यन्ति ? यद्येवम् तर्हि तु समस्तमस्तं भविष्यति भवद्धिन्दुत्वम्; प्राचीनधर्म्मश्च प्रनङ्क्ष्यति (१)भावत्कः । प्राचीनधर्म्मस्तु पुनरपि भवत्सत्तामद्याऽवधि स्थिराङ्कृतवान्; परम्भवतामयं नवीनधर्म्मस्तु न स्वयमन्तपर्य्यन्तं स्थास्यति; न च युष्मान् स्थापयिष्यति(२) अनुदिनं कृकलासवद् विपरिणमद्-वर्णो भवन्नास्ते, भविष्यति च । अयं सर्वो युक्तिषु धर्मस्थापनस्य परीणामः (३)इदं सर्वं धर्म्मशास्त्राणामपेक्षया युक्तीनामुत्कर्षप्रकर्षस्य दुर्विलसितम् । अयं सर्वो बाल्यादेव युक्तीस्समादृत्य धर्म्मविषयकविश्वासश्लथश्लथताया दुर्विपाकः । युक्तयः स्थिरा न तिष्ठन्ति । युक्तयस्तु वाक्कीलताया॒प्राणास्सन्ति; न तु धर्म्मस्य । वाक्कीलस्सत्यमनृतम् अनृतञ्च सत्यं कर्त्तुमीष्टे युक्तिद्वारा । एको वाक्कीलो न्यायाऽधीशसमक्षं स्ववादिनोऽभियोगं पुष्णन् पीतपूर्व्वमद्यप्रभाववशाद् वाद्यभियोगविरुद्धं सर्व्वा युक्तीराचक्षाण आसीत् । प्रतिवादिवाक्कीलश्च तदीयाः स्वमतखण्डिका॒पराऽभियोगलाभजनिकाश्च अद्भुता युक्तीः श्रुत्वा प्रसन्न एवाऽविद्यत । इत॒प्रथमो वाक्कीलः स्वलेखकेन (Clerk) कर्णेऽभिहितः; यच्छ्रीमतेदं किङ्क्रियते? स्वपक्षीयस्य प्रत्यादेश॒कथं विधीयते? इति प्रबोधितः स वाक्कील-

(१) प्रनङ्क्ष्यति । 'नशेः षान्तस्य' इति णत्वनिषेधः । अन्तग्रहणं भूतपूर्वस्याऽपि प्रतिपत्त्यर्थम् ।

(२) स्थापयिष्यति । स्थिरान् करिष्यति । 'तत्करोती' ति णिचि तस्येष्ठवत्त्वाऽतिदेशात् 'प्रियस्थिरे' ति स्थादेशे, तस्य 'प्रकृत्यैकाच्' इति प्रकृतिभावाट्टिलोपाऽभावे 'अचो ञ्णिती' ति वृद्धौ, 'अर्त्ति ह्री' ति पुकि, धातुत्वे लृटि तत् ।

(३) परीणामः । 'उपसर्गस्य घञि—' इति दीर्घः । बहुलग्रहणात्क्वचिन्नाऽपि भवति ।

स्सावधानो भूत्वेदमाचचक्षे प्रतिवादिप्राड्विवाकम्; यद्-भवदीयपुरुष-( मवक्किल ) पक्षसमर्थिका इयत्य एव भवितुमर्हन्ति युक्तयः; या मया प्रत्यपाद्यिषत। किं भवानेता अत्यतिशय्य किञ्चिद् वक्तुमीष्टे ? इतर आचष्ट-इमा एव पर्य्याप्ता भवत्पक्षपर्य्युदासे; अधुनाऽत्र किमुत्तरति भवान् ? तदा प्रथमो वाक्कीलमहाशयः स्वयमुक्तानामेव तासां युक्तीनां क्रमश इत्थङ्खण्डनमकार्षीद्; यच्छ्रुत्वा सर्व्वेऽपि न्यायालयस्था विसिष्मियिरे। कश्चनस्येदमाकूतम्-प्रबलाभ्योऽपि प्रबलानां युक्तीनाङ्खण्डयित्र्यो युक्तयोऽपि न्यूनतां न बिभ्रति। यदि धर्म्मो युक्तिष्ववस्थाप्येत; तर्हि प्रबलतरयुक्तयस्तमप्यन्यथयितुमलमेव स्युः। युक्तयो धर्म्मस्य साधयित्र्यः स्युरिति तु श्रद्धेयम्; परन्तु धर्म्मस्य अवलम्बा यदि ता मन्येरन्-एतत्तु अनास्थेयमेव; एवन्तु धर्म्मो रसातलमेतुं शक्नोति। तत एव तु धर्म्मे युक्तीनां निषेधोऽभिहितः। मनुमुनिः स्पष्टमाचष्ट—

"योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः।
स साधुभिर्बहिष्कार्य्यो नास्तिको वेदनिन्दकः"

ते मूले—श्रुतिस्मृती इत्यर्थः। हेतुशास्त्रं युक्तय इत्यनर्थान्तरम्। एतदेव 'गीता'ऽपि पुष्णाति—

"यश्शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न पराङ्गतिम्।
तस्माच्छास्त्रं प्रमाणं ते कार्य्याऽकार्य्यव्यवस्थितौ
तस्माच्छास्त्रविधानोक्तं कर्म्म कर्त्तुमिहाऽर्हसि॥"

मनुमुनिः—

"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्व्विधं प्राहुः साक्षाद्धर्म्मस्य लक्षणम्"

इति धर्म्मलक्षणे युक्तेर्नामाऽपि न गृह्णाति। 'स्वस्य च प्रियमात्मनः' इत्यत्राऽपि न स्वातन्त्र्यमभिप्रेतम्; प्रत्युत श्रुतिस्मृतिषु सदाचारबाहुल्याद् यस्सदाचारो देशकालाऽनुकूलतामापद्येत; तदवलम्बनमात्राऽभिसंहितम्। तथा च याज्ञवल्क्यस्मृतेर्मिताक्षरायामुक्तम्—आत्मनः प्रियं विकल्पविषये यथा-'गर्भाऽष्टमेऽष्टमे वाऽब्दे' अनयोरेकतरं ग्राह्यम्। फलतः श्रद्धयैव धर्म्मः सम्पाद्यते न तु युक्तिभिः; अन्यथा-श्रुतिस्स्मृतिरिति द्वयोर्ग्रहणन्न स्यात्; युक्तिभिस्तयोरपि प्रत्यादेष्टुं शक्यत्वात्। दार्शनिकसिद्धान्तो युक्तिनिर्भरः, वैदिकस्मार्त्तपौराणिकसिद्धान्ताश्च युक्तयां न, किन्तु श्रद्धायां निर्भराः। ईदृशा नास्तिका विद्यमानाः, ये युक्तिभिर्व्वेदस्य तथा परमात्मनोऽपि निराकरणे पेशलाः। अत एव

युक्तौ श्रद्धायाश्च महदन्तरम् । श्रद्धायै आप्तवचनमपेक्ष्यते; युक्तिस्तत्पुष्ट्यै भवति; मतान्तरमन्तरेणामग्रतः स्वमतं साधयितुम्प्रभवति; न तु तदेकाऽवलम्बनम् । तत एव त्वभिधीयते—"……………………वेदशास्त्राऽविरोधिना । यस्तर्क्केणाऽनुसन्धत्ते स धर्म्मं वेद नेतरः" 'वेदशास्त्राऽविरोधिना' इति पदमुपोद्बलयति, यद्-विरोधी तर्क्कस्तु वेदशास्त्रादिकमपि विलोप्तुं क्षमः । कश्चिद्-भिदध्याद्-अहं वेदं न मन्ये । अपर आचक्षीत—वेदाः परमात्मना न निरमायि—किन्तु अस्मन्निर्विशेषैः पुरुषैरेव । कश्चन ब्रूयात् पुराणवद् वेदा अपि व्यासेन निरमायिषत; यथैव पुराणेषु क्षेपकं मन्महे; तथैव वेदेष्वपि । अन्यो व्याहरेत्–परमात्मानं स्वार्थसक्ता एव मन्वते । आभिरद्यत्वे प्रचलिताभिर्युक्तिभिः (!) संहिता ( वेद ) संहितानां(१)सर्व्वेषामेव धर्म्मग्रन्थानां खण्डनं सुशकम् । तदा हिन्दूनां किमवशिष्यते । तत एव तु युक्तिभृंशं निन्दास्पदं मन्यते; तस्याः प्रतिभामात्राऽऽयत्तत्वात् । अत एव तु वेदानां धर्म्मस्य वा युक्तिभ्यो रक्षायै ( न्यायशास्त्रे गर्हितं ) छलमप्याहृतम्मतम् ।

किञ्च—सर्वेषामेव धर्म्माणां काऽपि सीमा, केऽपि वा नियमा अवश्यनियम्या(२)भवन्ति । तैरेव तद्धर्म्मस्योन्नामो भवति । यदि तन्नियमपालने औदार्य्यमेव स्थाप्येत; अथवा तन्नियमानां पालनं न कार्य्येत, अपि वा तन्नियमानां भङ्गेऽप्युपेक्ष्येत; तत् पुनरमीषां नियमानां सम्भालने कस्याऽपि योग्यतमस्याऽपि क्षमता न भवितुं शक्या । एवमवसेयम् —कस्याऽपि विद्यालयस्याऽयं नियमः स्याद्; यद्विद्यार्थिनश्शीतकाले दशनदनसमये, उष्णकाले च सप्तनादसमये उपतिष्ठन्ताम्; एवमेवाऽन्येऽपि नियमाः स्युः; यदि ते विद्यार्थिभिर्न पाल्येरन्, तैश्च ते युक्तिभिः खण्ड्येरन्, अथवा तत्कर्त्तृकनियमभङ्गेऽपि वारं वारमुपेक्ष्येत, अथवा—उच्छृङ्खला दण्डभाजो न क्रियेरन्, अथवा ते न निर्भर्त्स्येरन्, न वा तिरस्क्रियेरन्, अपि वा विद्यालयाऽधिकारिणोऽलसानां धूर्त्तानां दुष्टानाञ्च्छात्राणामेव सर्व्वान् अभिलापान्(३)मन्वानास्तदनुकूलं स्वनियमान् विपरिणमयन्तः स्युः; किं तद्विद्यालयस्य कल्याणम्, अथवा नियमबद्धता, अपि वा सञ्चालनम्, यद्वा परिणामः साधु भवितुं शक्यते ? पुनर्विद्यार्थिनोऽमून्नियमान्निर्म्मापयेयुः, यद्-विद्यार्थिन आसन्दीरधितिष्ठेयुः, अध्यापकाश्च अध उपविशन्तु, उत्थाय वा पाठयन्तु, यद्वाऽध्यापकाः प्राक् छात्रान्नमस्कुर्व्वन्तु—इत्यादिः तत किमु विद्यालयसुव्यवस्था स्थातुं शक्यते ? अत्रोत्तरम्भविष्यति—कदापि नहि, कदाचनाऽपि नहि, जात्वपि नहि । (क्रमशः)

---

(१) संहितानाम् । 'समो वा हितततयो' रिति विकल्पान्मलोपाऽभावः । अन्यत्र संहितानाम् इति ।

(२) अवश्यनियम्याः । 'लुम्पेदवश्यमः कृत्ये' इति मलोपः ।

(३) अभिलापान् । घञ्प्रत्ययोऽत्र । 'घञबन्तः' इत्यनुशासनेन पुंसि; न तु स्त्रियाम् । एवमवन्तोऽपि ज्ञेयः ।

# विवाहविवेचनम्।

ले०—वाङ्मुखरत्नकोशः विद्वान् अभिनवसरस्वती
बहादूर स्वामी कृष्णमाचार्यः।
लक्ष्मीमन्दिरं, नाच्चियार्कोयिल्।

आयुर्दीर्घमरोगतां प्रियवधूमैश्वर्यमव्याहतं
पुत्रान् भद्रगुणान् ददातु सततं सुत्राममान्यं पदम्।
पारावारसुतापयोधरतटीपाटीरपङ्काङ्कितः
श्यामः कामपिता पितामहपिता लक्ष्मीनृसिंहो हरिः॥

आर्याः! विदितमेवैतत्पण्डितपामराणां समेषामपि भारतभाग्यभूतानां यल्लोकोयं कुटिलतामावहतीति। इदानीं हि लोको महावात्यया पर्याकुलीक्रियमाणा समुद्रमध्यगता महानौरिव चञ्चलो दृश्यते।

मान्याः! असंख्येयेष्वन्याय्याकृत्यजातेष्वन्यतममिदं यत् "ऋतुमतीविवाहपूर्वकविवाहवयोनिष्कर्षरूपमशास्त्रीयं कर्मेति सर्वजनसंवेद्यमेव। इमं च विषयमधिकृत्य सर्वेपि मठाधिपतयः, सिंहासनाधिपतयश्श्रीमदाचार्यपुरुषाः, महामहोपाध्यायबिरुदभूषिताः विद्वच्छिरोमणयश्च स्वं स्वमाशयमुपन्यासरूपेण वाचनपत्रिकाभिश्च प्रकटीचक्रुः। औदीच्याः दाक्षिणात्याश्च विद्वांसः प्रकृतविषयमधिकृत्य खण्डनपूर्वकं सोपपत्तिकमुपन्यासादिकं तत्र तत्र विरचय्य स्वेषां महाजनानां चाशयादिकं महाशयाय राजप्रतिनिधये प्रेषितवन्त इति विदितचरमास्तिकसार्वभौमानाम्।

अयि आस्तिकशिरोमणयः!

अमेरिका ( America ) देशीया मेयो Mayo नाम्नी काचन अस्मद्भारतभुवं बहुधा दूषितवती अन्यदेशीयाश्च केचन एवमेवापरामृश्य वस्तुतत्त्वं बहुधा प्रलपन्ति मुद्रयन्ति च पुस्तकानि। अन्यदेशीयभाषावेषस्पृहयालवोऽस्मद्देशीयाः केचन अन्यदेशीयैर्लिखितानप्यंशाननालोचयन्तः तांश्च तथ्यतया मन्वानाः अन्याय्यमशास्त्रीयं च कर्तुमनुमेनिरे, परमिदं खेदावहं सर्वेषामपि भारतीयानाम्।

सर्वलोकनियन्तारस्त्रिमूर्तयोऽपि स्वस्वपत्न्याः प्राशस्त्येनैव हि महान्तमुत्कर्षमवापुः लोको हि पुरन्ध्रीणां महिम्नैव महनीयो भवतीत्यत्र निदर्शनञ्च सर्वजगत्कारणभूतस्सर्वेश्वरोपि श्रियःपतित्वेनैव हि प्राशस्त्यमविन्दत, एवं गिरिशोपि करुणामृतवर्षिण्या गिरिजयाहि अर्धनारीश्वर इति गीयते। तथा जगत्सृष्टिकर्ता

चतुराननोपि सरस्वतीजानित्वेन खलु महामहिमशाली संपन्नः। अपरिमितेभ्यः "गोभूतिलहिरण्याज्यवासोधान्यगुडानि च। रौप्यंलवणमित्यादि दानं दशविधं स्मृतम्" इति प्रकीर्तितेभ्यः दानेभ्यः कन्यादानमेव गरिष्ठं वरिष्ठञ्च भवतीति सर्वशास्त्रानुभवसंवेद्यमेव। वरः माङ्गल्यग्रन्थनावसरे—

"माङ्गल्यतन्तुनाऽनेन मम जीवनहेतुना।
कण्ठे बध्नामि सुभगे(सं) त्वं जीव शरदश्शतम्॥

इतिवदन् ग्रथ्नाति। एवं सर्वजनसंवेद्यतया क्रियमाणे वैवाहिक मङ्गलविधौ जायापत्योः परस्परं प्रेमाङ्कुरितं भवति। ततश्च चान्द्रमसी कलेव नवनवोन्मेषशाली भवति। एतादृशकन्यादानाख्येन विधिना वधूवरयोरुभयोरपि कुलं नितरां पवित्रितं भवति। एवं हि शिष्टाचारफक्किका। यथाशास्त्रं विवाहसंस्कृतयोर्दम्पत्योश्शुभमुहूर्ते संजातः पुत्रः द्वयोरपि वंशयोर्निवापाञ्जलिदानेन परमां तृप्तिं जनयति वंशाभिवर्धकश्च भवति। एतादृशः खलु कन्यकादानमहिमा सुदंपतिमूलमेव हि। गृहस्थधर्माभिवृद्धिः तत्तादृशगृहमेधिभ्य एव ब्रह्मचारिणस्सन्यासिनः अतिथयश्च अन्नादीनि लब्ध्वा जीवेयुरिति धर्मशास्त्रकारा आमनन्ति।

किञ्च कन्यादानकाले मातापितृभ्यामेवं संकल्प्यते—"दशानां पूर्वेषां दशानां परेषां चात्मनश्च एकविंशतिकुलोत्तारणद्वारा नित्यानन्दनिरतिशयशाश्वतब्रह्मलोकावाप्त्यर्थं भगवत्प्रीत्यर्थं कन्यादानाख्यमहादानं करिष्ये।

कन्यां कनकसंपन्नां सर्वाभरणभूषिताम्।
दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया॥
विश्वंभरास्सर्वभूतास्साक्षिण्यस्सर्वदेवताः।
इमां कन्यां प्रदास्यामि पितॄणां तारणाय च॥
कन्ये ममाग्रतो भूयाः कन्ये मे भव [ देवि ] पार्श्वयोः।
कन्ये मे सर्वतो भूयाः त्वद्दानान्मोक्षमाप्नुयाम्॥

तुभ्यमिमां कन्यां प्रजासहत्वकर्मभ्यः प्रतिपादयामीति वरंप्रति उच्यते देवस्य त्वा प्रतिगृह्णामि इति दानप्रतिग्रहदोषनिवारणार्थं वरस्य प्रतिवचनम्। इतिवाक्येचास्मिन्परामृश्यमाने कन्यकादानस्य फलविचारे धर्मतत्त्वविद एवं शक्ता भवेयुः। भगवान् रघुनाथापि स्वयं जानकीपरिणयावसरे इमामेव परिपाटीमनुससार। किञ्च जनकेनोक्तम्। इयं सीता मम सुतेत्यादिवाक्यजातं परामृशन्तु सन्तः "राघवत्वे भवत्सीता" इति सुभाषितानुसारेण भगवान् श्रीराघवावस्थायां सीतया सह लोके सनातनधर्मान् विधिवत्प्रतिष्ठापयामास—

"अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ॥
दशवर्षा भवेत्कन्या तत ऊर्ध्वं रजस्वला ॥

विना कन्याविवाहं रजस्वलाविवाह [ प्रौढाविवाह ] करणे निन्दारूपं वेदोपबृंहितस्मृतिवचनं च—

पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥
वृषलीपतिभुक्तानि श्राद्धानि च हवींषि च ।
पितरो न [ नच ] गृह्णन्ति दाता स्वर्गं न गच्छति ॥इति॥

अत्र च वृषलीशब्दस्य एवं निर्वचनं कृतम् । वृषं-धर्मं लुनातीति वृषलः ( लूञ्-छेदने ) धर्मविध्वंसक इत्यर्थः । तस्य स्त्रियामित्यर्थे ङीषि—वृषली इति । एवमेव जोघुष्यन्ते श्रुतिस्मृत्यादयः, विस्तरभयान्नेह विलिख्यन्ते । एतादृशरजस्वलादानेनच मातापित्रोर्नभवति स्वर्गलोकानन्दानुभवः । तस्मात् कन्यादानाख्यमेव कर्म मुख्यतो द्विजातीनामावश्यकं भवतीति नच नविदितमास्तिकमहाशयानाम् ।"गर्भाष्टमेषु ब्राह्मणमुपनयीत" इति धर्मसूत्रेण द्विजातिबालकानाम् उपनयनं विहितम् । तथैव कन्यकानाञ्च वैदिकसत्कर्मरूपः उपनयनसोदरः विवाहाख्यो विधिः कन्यकावस्थायामेव तथाचाष्टमे वयस्येवोद्वाहः करणीय इति सुप्रसिद्धमेव । वैदिकमतावलम्बिनः सनातनधर्मबद्धश्रद्धाः सर्वेऽपि कथञ्चिदपि कदाचिदपि वा नैनं शिष्टानुशिष्टं मार्गं परित्यक्तुं शक्ता भवेयुः । इदानीमस्माकमनुष्ठानपदवीमारूढो विवाहविधिः पुराकालेपि स्थितविवाहसरणिमनुसन्धान एव वर्तते-इति सम्यगवगमयितुं श्रीवैष्णवीय-( ४००० ) चतुस्सहस्रदिव्यप्रबन्धनामके द्राविडपद्यरत्नैर्भगवती भूम्यंशभूता गोदा स्वप्नदृष्टोदन्तव्याजेन स्वीयविवाहपद्धतिं कस्यैचित्सख्यै कथयामास । तादृशपद्यरत्नावलोकनेन इदानीन्तन विवाहसम्प्रदायवदेव पुरापि सप्तपदीकरणं, पाणिग्रहणं, कङ्कणबन्धनं, लाजहोमः, अग्निप्रदक्षिणं, ग्रामप्रवेशः, मालापरिवर्तनं, डोलाखेलनं, यावकलेपनं इत्याद्योंऽशाः आसन्निति सम्यग्ज्ञायते, देवी च गोदा लोकानुष्ठानायोपदिदेशेति च स्पष्टमवगम्यते । तादृशपद्यरत्नान्यद्यापि तत्संप्रदायिनो ब्राह्मणोत्तमाः वधूवरयोस्समक्षं तुरीये च विवाहदिने अनुसन्दधत इति विदितमिदं रसिकानाम् । एवमेव महाकविसार्वभौमः कालिदासोपि शिवयोर्विवाहप्रकरणे प्रागुक्तलाजमोक्षादींश्चोक्त्वा अरुन्धती ध्रुवदर्शनादीनिच वर्णयित्वा प्राक्तनीं विवाहरीतिं कुमारसंभवे सप्तमसर्गे सम्यङ्न्यरूपयदितिच सुस्पष्टं सहृदयधुरीणानाम् । सर्वानप्यंशान्पर्यालोचयतामस्माकं शिष्टानुशिष्टकन्याविवाह एव श्रेयानिति ज्ञायते ।

एवमेव द्विजातिव्यतिरिक्ताः क्षत्रिया अपि केरलीया अन्ये च राजवंशानुयायिनः स्वीयकन्यकानां कन्यकादशायामेवोद्वाहं कुर्वन्ति । एवं वैश्या अपि स्वीयकन्यकानां वयसा न्यूनतमानामपि विवाहमनुतिष्ठन्ति ।

आनुभाविकोऽयमंशः, हिन्दु Hindu व्यतिरिक्ता मुस्लिम् Muslim जातिप्रमुखा अपि कन्यकावस्थायां विवाहादि कुर्वन्तीति च ज्ञायते, मुस्लिमजातिप्रवर्तकः तदाचार्यभूतश्च नबीनायकनामा अष्टवर्षवयःपरिमिताम् आयिषा Aiysha नाम्नीमुपयेमे इति कथयन्ति मुस्लीम्प्रमुखाः । किञ्च इतः पूर्वमस्मद्देशे प्रवृत्ता विवाहाः प्रायशः अष्टवर्षपरिमितकन्यकानामेव सञ्जाताः उद्वाहिताश्च कन्यकास्ता अरोगदृढगात्राः पुत्रपौत्रवत्यः सतीपदनिर्देश्याश्च विराजन्त इति को वा न वेद । भारतभाग्यभूतास्ता नारीमणय उत्तरेषु दक्षिणेषु चाऽसेतुहिमाचलं प्रकाशन्त इति च सर्वानुभूतांश एव । एतादृशरहस्यजातान्यनालोचयन्तः वर्णाश्रमसनातनधर्मानविगणयन्तः सत्संप्रदायविध्वंसिनः ब्राह्मणसमुदायविद्वेषिणः वैदिकमताचारप्रतिपन्थिनः नास्तिकमतावलम्बिनः वैदिकसमयसमूलखनने बद्धश्रद्धाः राजकीयमहासभाद्वारा ऋतुमतीविवाहवयोनिष्कर्षाख्यं कुकर्म नियमितवन्तश्च । तेन च सज्जनानां मनःखेदमुदपादयन् । ते च अवश्यकर्तव्येष्वन्यतमोयं विषय इति निर्णीतवन्तः तथा पुनरपि प्रयतन्ते यथा प्राचीनविवाहविधिर्निर्मूलो भवेत् । अहो कलेर्माहात्म्यम् यदस्मिन्नेव भारतवर्षे दमयन्त्यनसूयानलायमीजानकीसावित्र्यरुन्धतीसुकन्या प्रभृतयो भगवत्यः पतिव्रता आसन्निति विद्मः तादृशेऽस्मिन्नेव भारते इदानीं महापातकादिपापाचरणे प्रवृत्ता विलसन्ति विलासिन्य इति चिन्तयतामस्माकं नैव मनः प्रसीदति । आचारविहीनाश्च ताः द्व्यक्षरपञ्चाक्षरादि Coffee—Tea पानेषु सदाऽऽसक्तचित्ताः सत्कर्मविद्वेषिण्यो भूत्वा पश्चादतीव कष्टान्दशामनुभवन्तीति च सम्यग्जानीमः । यदीमाः प्राचीनपथमनुरुन्ध्युस्तदा एतादृशदुराचारप्रवर्तिका भवेयुर्वा ?

प्रकृतमनुसरामः, यदि रजस्वलास्त्रीणां बहुकालानन्तरं विवाहः क्रियेत तदा अचिरात्ताः वन्ध्या भवेयुरिति आयुर्वेदप्रवीणाः कथयन्ति, स्त्रीणां पठनोपरोधो भवति बाल्यविवाहादिना इति ममाशयमवलम्ब्य विवाहवयोनिष्कर्षमकुर्मेति यद्यस्मत्प्रतिपन्थिनः कथयेयुस्तदा महाननर्थः महांश्च दोषोऽकृत्यकरणेन संभवत्येवेति मुक्तकण्ठं निवेदयामः विना स्त्रीत्वं विना पुंस्त्वञ्च सर्वमपि व्यवस्थारहितं भवेदित्यत्र न कापि संप्रीतिः—न पामरोपि जनः अन्येन क्रियमाणं स्वीयधर्मपत्नीहस्तसंस्पर्शनं Shake Hand सहेत । स्त्रियश्चाऽधुनिक्यः अन्य-

देशीयभाषावेषलोलुपाः परस्परहस्तस्पर्शनादीनि अन्याय्यानि कर्मजातानि कुर्वन्ति । नहि सर्वा नार्य एवं विद्यन्ते अपितु याः काश्चन वराक्य एव, गतेष्वेव कतिपयदिवसेषु स्त्रिय एव स्त्रियमुद्वाहयेयुरिति च प्रतिभात्यस्माकम्—

"अङ्गारसदृशी नारी घृतकुम्भसमः पुमान्"

इति वचनमसकृत् पर्यालोचयन्तु सन्तः । यदि परस्परं स्त्रीपुंसयोर्हस्तस्पर्शनादिकमनिशं भवेत्तदा चित्तवृत्तिरप्यन्यथा भवेत् किञ्च इदानीं नियमितप्रौढाविवाहविधेरुल्लङ्घने महान्दण्डो विधीयेतेति च तैर्निरणायि, सुसदृशमेवेदमुत्पश्यामः । यद्वरान्वेषणाय बहु परिश्रम्य कृच्छ्रेण सुखितस्य चरणयुगलस्य निगडबन्धनं कन्यादानं कृतवतो हस्तस्य निगलबन्धनादिकञ्च । सुष्ठु खलु परामृश्य विहितोयं दण्ड इति विशदमतीनां शेमुषीवैभवञ्च पर्यालोच्य प्रमोदं खेदञ्चानुभवामो न वयं शक्नुमः तत्प्रतिकर्तुम् । अपितु स एव सकललोकसाक्षिभूतो जगदीश्वरः प्रतिविधास्यतीति प्रार्थयामहे तमेव भगवन्तम् । चिरकालादारभ्य महर्षिभिः प्रवर्तितोऽयं सम्प्रदायः न केनाप्यन्यथाकर्तुमुचितः नियन्त्रितो विवाहवयोनिष्कर्षशिष्टाचारबहिर्भूत एवेति मुक्तकण्ठं वदामः । प्रौढाविवाहेन महाननर्थ एव संपद्येत न सुखलेशोऽपि श्रीमत्या महाराज्ञ्या विक्टोरिया Victoria नाम्न्या यत्प्रतिश्रुतं हिन्दुसनातनधर्मेषु राजकीया न प्रविशेयुरिति, न वा विघ्नमाचरेयुरिति च तादृशाज्ञोल्लङ्घनमनुचितमेव ।

अन्ततः मदीयेयमभ्यर्थनाना यथा वा एष नियमः अनुष्ठानपदवीं नारोहेत् वर्णाश्रमसनातनधर्मपरम्परा यथा च न भग्ना भवेत्तथा सर्वैरपि महानुभावैरास्तिकाग्रेसरैर्यतितव्यमिति । सनातनधर्मपरिरक्षणे सर्वेषामपि जनानां यथाचोत्साहस्संजायेत तथा तत्र तत्र विद्यमानैः पण्डितैरुपन्यासादिकं च करणीयमिति पुनरपि सप्रश्रयं निवेद्यते ।

नडादूरकृष्णमाचार्यः प्रार्थयत्ययमादरात् ।
श्रीमल्लक्ष्मीनरहरेस्सत्कटाक्षादहर्निशम् ॥

---

## श्री १०८ महाराजकाशीराजमहोदयानाम् सिंहासनारोहणमहोत्सवे प्रशस्तिपत्रम् ।

:※:

ले०—पं० हरिदत्तपाठक व्याकरणाचार्यः, सरस्वतीभवनम्, काशी ।

वस्वष्टाङ्कहिमांशुसम्मितशुभे, संवत्सरे वैक्रमे ।
माघे शुक्लदले बुधे च विधुभे, श्रेष्ठे दशम्यां तिथौ ॥
नानाचित्रविचित्रमण्डनवरैः, सम्भूषिते विस्तृते ।
सुस्तम्भे रुचिरैर्ध्वजैर्जवनिकाजालैश्च विद्योतिते ॥ १ ॥
श्रीप्रान्तीयगवर्नर प्रभृतिभिर्मान्यैः प्रधानैर्बुधैः ।
अत्यालङ्कृतपार्थिवैश्च सहिते, कान्ते सभामण्डपे ॥
श्रीमान् धर्मधुरन्धरः प्रभुवरः, सौजन्यवारान्निधिः ।

वात्सल्येऽनुपमो निजप्रकृतिषु, प्राज्ञैः सदासेवितः ॥ २ ॥
विख्यातो निजतातपादसमये, यो यौवराज्येऽप्यभूत् ।
दीनानां परिपालने च विजितो, येन स्वयं श्रीपतिः ॥
वन्द्यो योऽस्ति यथा शिवःसगुणवानादित्यनारायणः ।
दिष्ट्याऽरोहति मञ्जुलं सुरचितं, हृद्यं स्वभद्रासनम् ॥ ३ ॥
दिष्ट्याऽपूर्वमिदं सुदृश्यमधुना, ह्यानन्दसन्दोहदम् ।
दिष्ट्या योग्यतमं प्रियं प्रमुदिता, रम्या पुरी काशिका ॥
आदित्यं निजमद्य वल्लभवरं, लब्ध्वा समुद्भासते ।
वक्तुं नाद्य हि शारदाऽपि महिता, काश्याः प्रहर्षं क्षमा ॥ ४ ॥
विश्वेशं महताऽऽदरेण हि वयं सम्मिल्य याचामहे ।
श्रीलश्रीयुतकाशिकापतिमहाराजाधिराजोहि नः ॥
भूयाल्लब्धसुतस्त्रिलोकविदितः, सर्वप्रियः सर्वदा ।
आयुष्मान् कमलाऽऽलयः सुविजयी, धर्मेच ताताधिकः॥ ५ ॥

---

## उपालम्भः ।

( ले०—श्रीगङ्गाविष्णुः पाण्डेयो विद्याभूषणो "विष्णुः" )

अयि, मातस्तव बालः,
मध्येमार्गं कर्षति वत्सम्,
वारं वारं पश्यति वक्त्रम्,
क्षिपति घटस्थं सर्वं तक्रम्,
धृतगलनववनमालः ।
अयि, मातस्तव बालः ॥ १ ॥

अस्याकृष्य सदा नवनीतम्,
पिबति मदीयं दुग्धं स्फीतम्,
मधुरं मधुरं गायति गीतम्,
चन्दनचर्चितभालः,
अयि, मातस्तव बालः ॥ २ ॥

लज्जां त्यक्त्वा प्रलपति गालिम्,
गणयति नायं कामप्यालिम्,
नृत्यति धृष्टो दत्वा तालिम्,
बालैः सह गोपालः,
अयि, मातस्तव बालः ॥ ३ ॥

कार्यमिदं कृष्णस्य वराङ्गो,
त्वं तं वारयसीति कथङ्गो,
सुष्टु भणिष्यति कोऽपि इदङ्गो,
नैरियधुना कलिकालः,
अयि, मातस्तव बालः ॥ ४ ॥

दृष्ट्वा तां तु तया सार्द्धं रासेशो रासमण्डले।
रासोल्लासेषु रसिको रासक्रीडां चकार ह॥
नानाप्रकारशृङ्गारं शृङ्गारो मूर्तिमानिव।
चकार सुखसम्भोगं यावद्वै ब्रह्मणो दिनम्॥
ततः स च परिश्रान्तस्तस्या योनौ जगत्पिता।
चकार वीर्याधानञ्च नित्यानन्दे शुभक्षणे॥
गात्रतो योषितस्तस्य सुरतान्ते च सुव्रत!।
निःससार श्रमजलं श्रान्तायास्तेजसा हरेः॥
महाक्रमणक्लिष्टाया निःश्वासश्च बभूव ह।
तदा वव्रे श्रमजलं तत्सर्वं विश्वगोलकम्॥
स च निःश्वासवायुश्च सर्वाधारो बभूव ह।
निःश्वासवायुः सर्वेषां जीवानाञ्च भवेषु च॥
घर्मतोयाधिदेवश्च बभूव वरुणो महान्।
तद्वामाङ्गाच्च तत्पत्नी वरुणानी बभूव सा॥
अथ सा कृष्णचिच्छक्तिः कृष्णगर्भं दधार ह।
शतमन्वन्तरं यावज्ज्वलन्ती ब्रह्मतेजसा॥
शतं मन्वन्तरान्ते च कालेऽतीतेऽपि सुन्दरी।
सुषाव डिम्बं स्वर्णाभं विश्वाधारालयं परम्।

भक्तेश्चतुर्दशापि रसा—अस्या एव सृष्टेरास्पदीभूतस्य शृङ्गाररसस्यैव परिणतिमात्रस्वरूपा विज्ञेयाः। किन्तु सर्वेषामेव जगतां मूलकारणरूपयोस्तयोरेव प्रकृति-पुरुषयोः संयोगात्मकः शृङ्गाररसो हि केवलो निमित्तभेदमासाद्य बहुभेदत्वमेत्य समस्तानामपि ब्रह्माण्डजीवानां हृदयराज्यं स्वाधिकार-विस्तारेण सर्वतः समधितिष्ठति।

तत्र एतेषु चतुर्दशस्वपि रसेषु सप्त रसा मलिनशृङ्गारस्य, सप्त च शुद्ध-शृङ्गारस्याङ्गीभूता विभाव्यन्ते। तथाहि—हास्य-वीर-करुणाद्भुत-भयानक-बीभत्स-रौद्रा इमे सप्त रसा गौणाः। शृङ्गारस्य मलिनानि अङ्गानि, इति भावः।

एतेषां रसानां विषये कुत्रचित् स्थलविषये यद्यपि भक्तिरसाचार्य्याणामीदृशी सम्मतिर्दृश्यते, यत् सर्वेषामेव रसानामानन्दपरिणामरूपत्वात् तेभ्योऽपि तद्रसास्वादयितॄणां मानवानामुन्नतिरवश्यं भाविनीति। तथापि तेषां रसानामाश्रयस्य मालिन्यात् तेषां गौणत्वं सुस्थिरम्।

हास्यादि-गौणरसेभ्यः कथमुन्नतिर्भवतीति स्मृतिशास्त्रेषूपलभ्यते।

तथा हि—

उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः ।
द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ।
कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च ।
नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥
रुक्मिणीराधादिरूपेषु शृङ्गारः परमोज्ज्वलः ।
भीष्मो वीरे दशरथः करुणे स्थितिमाप्तवान् ॥
वल्ल्यर्जुनयशोदानां विश्वरूपस्य दर्शने ।
अत्यद्भुतरसास्वादः कृष्णानुग्रहतोऽभवत् ॥
गोपालबाला हास्यस्य श्रीदामोद्वहनादिषु ।
एवमन्यत्र भीत्यादित्रितयेऽपि विचिन्त्यताम् ॥
गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ।
सम्बन्धाद्वृष्णयः स्नेहात्पार्था भक्त्या मुनीश्वराः ॥
शृङ्गारी राधिकायां सखिषु सकरुणः क्ष्वेडदग्धेष्वघाहे-
र्बीभत्सी तस्य गर्भे व्रजकुलतनयाचैलचौर्ये प्रहासी ।
वीरी दैत्येषु रौद्री कुपितवति तुरासाहि हैय्यङ्गवीन-
स्तेये भीमान्विचित्री निजमहसि शमी दामबन्धे स जीयात् ॥

परन्तु सप्तानां मुख्यरसानान्तु नायं नियमः । यतो हि—दास्यादिमुख्यासक्तौ मलिनताया लेशमात्रतोऽप्यभावात्तेभ्यः साक्षाद्रूपेणैव भक्तानां श्रेयः सम्पद्यते । तत्र चानुरागोद्रेकेण भक्तचेतोऽहोरात्रमानन्दाम्बुधावेव मज्जोन्मज्जनमातन्वत्तिष्ठति । प्रकृतिवैचित्र्याच्च कल्पद्रुमात्मनः श्रीमद्भगवतोऽन्तिके कश्चिद्भक्तो दासभावमाश्रित्य, कश्चन वात्सल्यभावमुपेत्य, कोऽपि तु कान्ताभावमधिकृत्य,अपरो हि आत्मनिवेदनात्मकभावमेवाग्रेकृत्य, अन्यश्च श्रीमद्भगवद्गुणकीर्तनभावं प्रधानीकृत्य, इतरस्तु भक्तः तन्मयतासक्तिमेव द्वारीकृत्य श्रीमद्भगवद्राज्ये पुरःसरायमाणोऽवसाने तदेव परमानन्दपदमासादयति । भगवांश्च भक्तपरवशत्वात्स्वासक्तान् [सर्वानेव भक्तान् स्वाऽनन्तानुग्रहप्रदानेन सदैव सर्वतः संरक्षन् चरमतः परमानन्दास्पदं मुक्तिपदमधिष्ठापयति, इति तेन स्वास्याम्बुजेनैव गीतं विद्यते—

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विजः ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्त-जनप्रियः ॥
नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ।

श्रियश्चात्यन्तिकीं ब्रह्मन्! येषां गतिरहं परा॥
ये दारागारपुत्राप्तप्राणान् वित्तमिमं परम्।
हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे॥
मयि निर्बद्धहृदयाः साधवः समदर्शनाः।
वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा॥
साधवो हृदयं मह्यं साधूनां हृदयन्त्वहम्।
मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि॥

श्रीमद्भगवतः प्रियतराणामेषां सर्वेषामेव भक्तानां दास्यसख्यादि-भावेन भगवद्विषयकासक्तिचर्चायां भक्तिशास्त्रेषु बहुशः प्रमाणानि समुप-लभ्यन्ते।

भगवद्भक्तस्य मरुत्तनयस्य हनूमतः श्रीमति मर्य्यादापुरुषोत्तमे राम-चन्द्रेऽनन्या दास्यभावात्मिकासक्तिः प्रसिद्धैव। अस्या एव दास्यभावा-त्मिकाया आसक्तेरुदये सति भक्तः स्वात्मानं सेवकतया भगवति भगवद्भक्तेषु च समर्पयति। उक्तञ्च श्रीमता भगवता—

मद्भक्तानां च ये भक्तास्ते मे भक्ततमाः स्मृताः।
समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
ये भजन्ति च मां भक्त्या मयि ते तेषु चाप्यहम्।

सख्यभावात्मिकायामासक्तौ अर्जुनः प्रथमो भक्तो गण्यते। स हि सख्य-भावासक्तोऽणुमपि श्रीमति भगवति कृष्णे भेदबुद्धिं न चकार। किन्तु विश्वरूप-दर्शने श्रीमद्भगवतः श्रीकृष्णस्य यथार्थ-स्वरूपावगतौ सत्यां तत्रैव सगद्गदेन भीतभीतेन तेन कृताञ्जलिना जल्पितम्—तथाहि—

सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण! हे यादव! हे सखेति।
अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वापि॥
यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु।
एकोऽथवाऽप्यच्युत! तत्समक्षं तत्क्षामये त्वामहमप्रमेयम्॥

वात्सल्यासक्ति-प्राबल्य-दृष्टान्ते तु नन्दयशोदादयो गोपाः प्राधान्य-माश्रिता विद्यन्ते। ते हि श्रीमद्भगवतः श्रीकृष्णस्य विश्वरूपधारणे गोवर्द्धनो-द्धारणे कालीयनागदमने एवमन्येष्वप्यद्भुतेष्वसम्भवेषु कार्य्यजातेषु श्रद्धा-मावहन्तोऽपि तस्मिन् भगवति पुत्रभावस्यैव प्राधान्यं जुषमाणा आसन्। अनेनैव वात्सल्यभावेन भावितः कश्चन भक्तोऽतिस्फुटं जगाद—

एह्येहि वत्स ! नवनीरदकोमलाङ्ग !
चुम्बामि मूर्धनि चिराय परिष्वजे त्वाम् ।
आरोप्य वा हृदि दिवानिशमुद्वहामि,
वन्देऽथवा चरणपुष्करकद्वयन्ते ॥

कान्तासक्तेश्चाद्भुतदृष्टान्तास्पदीभूता व्रजगोपिकाप्रभृतयः समुपलभ्यन्ते। याश्च समस्ता लोकलज्जाः कुलमर्य्यादा गार्हस्थ्यधर्म्मांश्च परित्यज्य भगवन्तं श्रीकृष्णञ्च पूर्णावतारं साक्षाद्ब्रह्मस्वरूपं विदन्त्यो वृन्दावनविलासिनो मोहन-मुरलीधारिणो हृदयसम्राज आनन्दकन्दस्य सच्चिदानन्दरूपिणस्तस्य भगवतः पवित्रप्रेमाम्बुधेरगाधगम्भीरनीरे स्वस्वजीवनतरी निरातङ्काः सन्त्यो वाहितवत्य इति भक्तिशास्त्राभिज्ञानां नास्ति अविदितम् । यासां कृते भगवतापि स्वमुखादु-दीरितमेव ।

न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषाऽपि वः ।
या माऽभजन्दुर्ज्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुना ॥

उद्धवञ्च श्रीवृन्दावने प्रहिण्वता भगवताऽभिहितमेव गोपीनां स्वात्मानं प्रति प्रेमोद्रेकाधिक्यम्—

ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः ।
मामेव दयितं प्रेष्ठमात्मानं मनसा गताः ॥
ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहम् ।
मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ॥
स्मरन्त्योऽङ्ग विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः ।
धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथंचन ॥
प्रत्यागमनसन्देशैर्वल्लव्यो मे मदात्मिकाः ।

आत्मनिवेदनासक्तिभावोद्रेके तु नारदादयो देवर्षयः प्राधान्येन दृष्टान्तीभूताः यैर्हि भगवति श्रीहरौ निजदेहप्राणमनांसि समस्तात्मना समर्प्य आत्मविनिवेद-नासक्तेरभूतपूर्वः परिचयो ब्रह्माण्डे समुपस्थापितः । आत्मविनिवेदनभावोदयेन भक्तानां चेतसि अहम्भावो नितान्तं विलयं गच्छति । तेषां जीवनं सर्वाश्चेष्टाश्च श्रीमतो भगवतः प्रीतय एव भवन्ति । उक्तञ्च स्मृतिशास्त्रेषु बहुधा–तथाहि—

सा वाग्यया तस्य गुणान् गृणीते
करौ च तत्कर्म्मकरौ मनश्च ।
स्मरेद्वसन्तं स्थिरजङ्गमेषु
शृणोति तत्पुण्यकथाः स कर्णः ॥

शिरस्तु तस्योभयलिङ्गमानमे-
त्तदेव यत्पश्यति तद्धि चक्षुः ।
अङ्गानि विष्णोरथ तज्जनानां
पादोदकं यानि भजन्ति नित्यम् ॥
वाणी गुणाऽनुकथने श्रवणौ कथायां
हस्तौ च कर्मसु मनस्तव पादयोर्नः
स्मृत्यां शिरस्तव निवासजगत्प्रणामे
दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥

सर्वोऽप्ययमासक्तिभाव आत्मनिवेदनासक्तेरेवोपोद्बलकः । गुणकीर्तनासक्तौ तु महर्षि वेदव्यास एव सर्वप्रथमकक्षामध्यारोहति । यो हि निखिलशास्त्रपुराणोपपुराणानि विरचय्यापि निजचेतसि परमां शान्तिमलभमानः श्रीमतो भगवतो गुणानुवादेनैवाचलां शान्तिमुपलभ्य परमां मुदं बभार । उक्तञ्च स्मृतिषु—

निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामात् ।
क उत्तमश्लोकगुणानुवादात् पुमान् विरज्येत विना पशुघ्नात् ।
तस्मिन्महन्मुखरिता मधुभिश्चरित्र-
पीयूष-शेषसरितः परितः स्रवन्ति ।
ता ये पिबन्त्यवितृषो नृप ! गाढकर्णै-
स्तान्न स्पृशन्त्यशनतृड्भयशोकमोहाः ।

रागात्मिकाया भक्तेश्चरमावस्था हि तन्मयासक्तिरुपगीयते । यस्या लाभे भक्तः स्वात्मानं भगवद्रूपमेव मत्वा भगवन्तं प्रति रात्रिन्दिवं प्रीतिप्रवाहप्रवाहितः प्रवहति । इमामेव तन्मयासक्तिमुपाश्रित्याभिहितं स्मृतिग्रन्थे—

नमस्तुभ्यं परेशाय नमो मह्यं शिवाय च ।
प्रत्यक् चैतन्यरूपाय मह्यमेव नमोनमः ॥
मह्यन्तुभ्यमनन्ताय मह्यन्तुभ्यं शिवात्मने ।
नमो देवाऽधिदेवाय पराय परमात्मने ॥

अस्य हि तन्मयासक्तिरूपस्य भावस्योद्गमे भक्तस्तन्मयो भूत्वा कदाचित्परमेश्वरं निजस्वामिनं प्रणमति । कदाचिच्च स्वात्मानमेव तद्रूपं मन्यमानः प्रणमति । हरिहरयोरपि पारस्परिकी या आसक्तिः पुराणादिषु श्रूयते, सा हि तयोः तन्मयासक्तिरेव स्फुटतामेत्य विराजते । उक्तञ्च स्वयमेव श्रीहरिणा श्रीलक्ष्मीमुद्दिश्य—

शृणु कान्ते प्रवक्ष्यामि यं ध्यायामि सुरोत्तमम् ।
आशुतोषं महेशानं गिरिजावल्लभं हृदि ॥
कदाचिद्देवदेवो मां ध्यायत्यमितविक्रमः ।
ध्यायाम्यहं च देवेशं शङ्करं त्रिपुरान्तकम् ॥
शिवस्याहं प्रियः प्राणः शङ्करस्तु तथा मम ।
उभयोरन्तरन्नास्ति मिथः संसक्तचेतसोः ॥

इमामेव हरिहरयोः पारस्परिकीं तन्मयासक्तिमुद्दिश्य केनचन भक्तशिरोमणिनाऽप्युक्तम्—

उभयोरेका प्रकृतिः प्रत्यय-भेदाद्विभिन्नवद्भाति ।
कलयति भेदन्त्वनयोः केवल-मूढो विनाशाक्रमम् ॥

अस्यास्तन्मयासक्तेरेव विकाशो भगवति श्रीकृष्णे तद्गतप्राणानां गोपीनां प्रादुरासीत् । येन च क्रीडादुर्ललिताद्भुत-व्यसनिना शार्ङ्गपाणिना ताश्चाभिमानिनीरभिमन्यमानेन तासामभिमानञ्च तं दूरीकुर्वता रासलीलामध्यत एवान्तर्दधे यद्विषये च साधु प्रपञ्चितं स्मृतिपुराणादिषु— तथाहि—

इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः ।
लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ॥
कस्याश्चित्पूतनायन्त्याः कृष्णायन्त्यपिवत्स्तनम् ।
तोकायित्वा रुदन्त्यन्या पदाहन् शकटायतीम् ॥
दैत्यायित्वा जहारान्यामेका कृष्णार्भभावनाम् ।
रिङ्गयामास काप्यङ्घ्री कर्षती घोषनिस्वनैः ॥
मा भैष्ट वर्षवाताभ्यां तत्त्राणं विहितं मया ।
इत्युक्त्वैकेन हस्तेन यतन्त्युन्निदधेऽम्बरम् ॥
आरुह्यैका पदाक्रम्य शिरस्याहाऽपरां नृप ।
दुष्टाहे ! गच्छ जातोऽहं खलानां ननु दण्डधृक् ॥

'इत्यादि'

रसा आनन्दमया एवोच्यन्ते। यतश्च आनन्दात्मके भगवच्चरणारविन्दे चेतः समादधत् ध्यातृध्यानध्येयात्मिकां त्रिपुटीमवलम्बमानो भगवच्चरणकमलं ध्यायमानो यथा यथा परमानन्दनिमग्नो भवति तथा तथा त्रिपुटीविलयमादधद्भगवता सह भेदबुद्धिमपाकरोति। तात्पर्यतः रागात्मिकाया भक्तेरवस्थायां रसात्मिकानामासक्तीनां मध्ये कस्याश्चनापि आसक्तेराश्रयेण भक्तो यदा रससागरे निमग्नो भवति, तदा तस्या आसक्ते र्भावे लीनलीनः स तदासक्तिस्वरूपतामेवाश्रयति। यतश्च स साधको भक्तः स्वोन्नतदशायां सविकल्पकसमाधेरुदये ध्याताऽपि सन् ध्येयात्मन आनन्दस्वरूपस्य भगवत एव सारूप्यमाश्रयति। यथा चोक्तम् श्रुतौ—

"तव वयं स्म" "तं यथा यथोपासते तदेव भवति।

स्मृतावप्युपलभ्यते—

सति सक्तो नरो याति सद्भावं ह्येकनिष्ठया।
कीटको भ्रमरं ध्यायन् भ्रमरत्वाय कल्पते।
क्रियान्तरासक्तिमपास्य कीटको
ध्यायन् यथाऽलिं ह्यलिभावमृच्छति।
तथैव योगी परमात्मतत्त्वं
ध्यात्वा समायाति तदेकनिष्ठया।

अस्मिन् सूत्रे "एव"—शब्दप्रयोगो बहुविज्ञान-विजृम्भितो विद्यते।

तथाहि भगवद्भक्तौ एकदा निमग्नो भगवद्भक्तः स्वीयां स्वतन्त्रां जीवसत्तामेव विस्मरति। अत एव स रसरूपतामेवाश्रयतीति समुदीरितम्॥१८॥

सम्प्रति मुख्यरसानां वैशिष्ट्यमभिधत्ते—

**परा मुख्यरससन्निकर्षादुन्नतिस्तु सर्वरसाश्रया॥ १९॥**

मुख्यानां दास्यादीनामेव रसानां सन्निकर्षात्=सम्बन्धात् परा भक्तिरधिगम्यते। तु=परन्तु उन्नतिः=ऊर्ध्वगतिः, सर्वे हास्यादयो गौणरसा अपि आश्रयो यस्याः सा तथोक्ताऽपि भवत्येव। फलतः सर्वेषामेव हास्यादिगौणरसानां दास्यादिमुख्यरसानामित्थमुभयेषामेव रसानामाश्रयेणोन्नतिस्तु प्राप्यत एव इति सूत्रार्थः।

गौणरसानामाश्रयेण कथमुन्नतिरासाद्यत इति प्रश्नस्योत्तरे महामुनिः शुकदेवो राजानं परीक्षितं प्रत्याह स्म। तथाहि श्रीमद्भागवतस्थानि इमानि पद्यानि। श्रीशुक उवाच,—

उक्तं पुरस्तादेतत् ते चैद्यः सिद्धिं यथा गतः ।
द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥
नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ।
अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥
कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च ।
नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥
न चैवं विस्मयः कार्य्यो भवता भगवत्यजे ।
योगेश्वरेश्वरे कृष्णे यत एतद्विमुच्यते ॥

गौणरसानां साधनेन सालोक्य-सारूप्यादिमुक्ति-पर्य्यन्तमप्यासादयितुम्पार्य्यते । केवलं निर्वाणमुक्तिरेव परया भक्त्या आसाद्यते । गौणरसैस्तन्मयताप्राप्तिः, तया च परस्या भक्तेरुद्गमः । अतश्च परां भक्तिं प्रति गौणा रसाः परम्परया कारणतां प्राप्नुवन्ति । मुख्यास्तु साक्षात्सम्बन्धेनेति विवेकः ।

भगवतः परमपदस्य सम्बन्ध आनन्दस्वरूपेणास्ति । तस्य चानन्दस्वरूपस्य सत्ता स्वतन्त्रतया सर्वेष्वेव रसेषूपलभ्यते । इत्यतोऽपि मुख्यगौणोभयरसैरेवावश्यं साधकः उन्नतिमधिगच्छति ।

यद्यपि रौद्रबीभत्सादिषु सर्वेष्वेव गौणरसेषु आनन्दविरोधिनो दुःखात्मकस्यापि भावस्य सम्बन्धो दृश्यते । परन्तु तत्रापि गौणरसजन्यक्रियापरिसमाप्तौ भगवत्सम्बन्धो न व्यपगच्छतीति भगवत्पात्रता तत्र रूपान्तरेणायात्येवेति गौणा अपि रसा उन्नतिप्रदा भवन्तीति निर्बाधं सिध्यति । तत्र गौणमुख्ययोरयमेव महान् भेदो दरीदृश्यते । यत् गौणै रसैः सार्धं बहिरङ्गस्यापि विषयस्य सम्बन्धसत्त्वात् ते सर्वथा निर्दोषा नैव भवन्तीति तद्द्वारा उन्नतौ सत्यामपि परा भक्तिर्नैवासाद्यत इति ।

# सूर्योदयः ।

नवमे वर्षे } भाद्रपदस्य पूर्णिमा सं० १९९० । { तृतीय-संख्या

## मङ्गलाचरणम् ।

शूलिन्प्रिये ! जनतया नतयाऽर्चिताङ्घ्रे !
हे देव ! तत्रभवता भव-ताप-तप्तम् !
मन्मानसं नु भवता भव ! तामसाढ्यम्,
संसिच्यतामिह सुधार-सुधा-रसेन ॥

( १ )

करालकालानललोललोचनम्,
गले ललद्व्यालविशालमालकम् ।
हालाहलालेहननीलकण्ठकम्,
लयेश्वरं तं कलयेऽन्तशम्बलम् ॥ ॥

( २ )

लोकं लोकं त्वामिहालोकलोकम्,
लोके लोके सँल्लसन्तं ललामम् ।
आलोकं ते श्रील ! लान्ती लसन्ती,
लोलल्लीला लालसा लालसीति ॥

( ३ )

"आत्मारामः"

# सम्पादकीया अभिप्रायाः ।

## पुराणमहत्त्वम् ।

—:o:—

अनादिरनन्तोऽपौरुषेयो ज्ञानमयो हि भगवान् वेदः ११८० शाखासु संविभक्तः। पूर्वस्मिन् समये सर्वोऽप्ययं समुपलब्धोऽभवत्। किन्तु करालकलिकालस्य दुष्प्रभावत्वात् अधिकांश एतस्य विलुप्तप्रायोऽभूत्। परिवर्त्तनपरे कलिकाले पुनरसौ समग्रोऽपि प्रादुर्भविष्यतीति निस्सन्देहम्। साम्प्रतं तु तस्य कतिचनैव शाखाः समुपलभ्यन्ते! भगवतो वेदस्य तिरोहितत्वे सन्ति बहवो हेतवः।

वैदिकं दर्शनविज्ञानमनुसृत्य पुस्तकानि पञ्चविधानि भवन्ति। तथा हि—नादपुस्तकं, बिन्दुपुस्तकं, ब्रह्माण्डपुस्तक, पिण्डपुस्तकं, वर्णपुस्तकं चेति। एतेषु वर्णात्मकं पुस्तकमेव केवलं नाशशीलम्। अवशिष्टानि चतुर्विधान्यपि पुस्तकानि नित्यान्यवनान्तव्यानि। एतेषु नादस्वरूपो भगवान् वेदः सर्गादौ याथातथ्यतो महर्षिभिः स्वकीयान्तःकरणेषु सुस्पष्टं संश्रूयते। अन्येषु त्रिविधपुस्तकेषु स्मृतयः पुराणानि चान्तर्भवन्ति। स्मृतिपुराणादीनि च भावरूपेण ऋषीणामधिमानसमाविर्भवन्ति। तान्येतान्यपि कालप्रभावात् क्रमशो ह्रसिमानमासादयन्ति। वैदिको हि दर्शनसमूहो वेदार्थसम्यक्परिज्ञानार्थं सनातनधर्मरहस्यावगमनार्थं च प्रकाशितः। सम्प्रति दर्शनानि तु सर्वाण्यपि समुपलब्धानि। दार्शनिकं विज्ञानं च सुनिगूढतत्त्वस्वरूपमिति केवलं सुधियामेव सचेतसां चेतांसि रञ्जयन्ति, न खलु सर्वेषां साधारणमानवानाम्। भगवता वेदव्यासेन पुराणानि विरचय्य सर्वसाधारणानामपि कृते ज्ञानगङ्गावगाहनं सुलभीकृतम्।

पुराणे वेदानां ज्ञानं ब्राह्मणारण्यकोपनिषदां सारं च संगृह्य यत्र तत्र दार्शनिकस्यापि विज्ञानस्य सविस्तरं विवेचनमनुष्ठितमास्ते। पुराणैर्हि अभ्युदयस्य निःश्रेयसस्य च पन्थानं परिष्कृत्य संसारस्य सुमहान् उपकारः संसाधितः।

मानवानां प्रवृत्तिरस्ति साधारणतो निम्नगामिनी। गार्हस्थ्यसुलभमोहममतादिजाले दिवानिशं निपतितो मानवः स्वकीयोर्ध्वगतेः परिचिन्तनं नाधिक्येनानुतिष्ठति। सहसा संस्मारितमपि तदूर्ध्वगमनपरिचिन्तनं न तस्य रुचिकरं

सम्पद्यते। सिद्धान्तमिमं स्वमनसि निश्चित्य पुराणकर्त्तृभिर्महानुभावैः परमर्षिभि र्जड़प्रपञ्चगाथां रोचकतासंवलितां विधाय सर्वसाधारणा अपि मानवा आध्यात्म्यलक्ष्याभिमुखीकृताः। कारणेनैतेन श्रोतणां वक्तणां वा मानसानि नोद्विजन्ते, तत्त्वज्ञानाभिमुखं प्रवर्त्तन्ते च। पुराणेषु व्यवहारनीतयः, राजनीतयः, सामान्यनीतयः, दार्शनिकविज्ञानानि, आचारनिरूपणं, सदाचारपरिपालनम्, स्त्री-पुरुषधर्मः, आर्यानार्यधर्मः, वर्णाश्रमविभागः, इतिहासः, खगोलभूगोलविद्या, पदार्थविद्याप्रभृतिविषया अध्यात्मलक्ष्यमनुसृत्य सविस्तरं सुविवेचिताः। जीवनमरणचक्रविमुक्तये अध्यात्मभावपरिचिन्तनपरायणैः सर्वसाधारणैरपि मनुष्यव्यपदेश्यैर्जीवैः पुराणान्येवैकमात्रमवलम्बनीयानि। पुराणसम्बन्धे—"यदिहास्ति तदन्यत्र, यन्नेहास्ति न तत् क्वचित्"इति वक्तुं शक्यते। पुराणानां पठन-श्रवण-मनन-निदिध्यासनैर्वृत्तयः समुल्लसन्ति, मनांसि संतुष्यन्ति, कर्त्तव्यानि परिस्फुरन्ति, मनुतनुजनुषामधिमानसमुदीयमानाः सत्त्वगुणमया भावा मानवजीवनं सफलयन्ति। पुराणेषु समाधिभाषा, लौकिकभाषा, परकीयभाषेति त्रिविधा भाषाः, आध्यात्मिकाः, आधिदैविकाः, आधिभौतिकाश्चेति त्रिविधा भावाः सर्वत्रैव वर्त्तन्त इति पुराणपाठकैर्न विस्मर्त्तव्यम्।

उपर्युक्त-त्रिविधभाषा-त्रिविधभाव संवलित-टिप्पणीसमलङ्कृतं 'पुराणरहस्यम्' इति शिरस्कं निबन्धनं सूर्योदयस्य गताङ्केषु समुदितमिति विदन्त्येव पाठकमहाभागाः।

यद्यपि पुराणरहस्येऽत्र मार्कण्डेयपुराणसम्बन्धिनीनां शङ्कानामेव समाहितयः सन्तिः, किन्तु मनोयोगतस्तदध्ययनेन निखिलपुराणानामपि शङ्कानामनायासेनैव समाधानं स्यात्।

पुराणरहस्यमिदं पृथक् पुस्तकाकारेण प्रकाशितं वर्त्तते। 'सूर्योदय'-कार्यालयः, महामण्डलभवनं, काशी" इति संकेतेन पत्रं प्रेष्य तत् आदातुं शक्यते।

---

## सर्वधर्मपरिषद्।

—:*:—

अमेरिकायां नातिचिरायैव सर्वधर्मपरिषदो विशालमेकमधिवेशनं भावीति श्रूयते। तत्र संसारस्य शतशो महामहिमशालिनो धार्मिकनेतारः संमिलिष्यन्ति। श्रीभारतधर्ममहामण्डलस्य प्रधानव्यवस्थापकाः श्री१०८ मन्तः

स्वामिचरणा महानुभावा विशेषरूपेण नैकवारं निमन्त्रिताः; किन्तु समुद्रयात्रा-विचार-वृद्धावस्थादिकारणकलापेन ते स्वयमुपस्थातुमशक्नुवन्तो विदेशस्थान् महामहिमशालिनः सुधीधौरेयान् श्रीभारतधर्ममहामण्डलप्रतिनिधिभूतान् विद्याभूषण-डाक्टर-पण्डितश्रीयुक्तश्यामशङ्करशर्मणः एम्० ए० महाशयान् श्रीयुतविद्यारत्नकेदारनाथदासगुप्तमहोदयांश्च प्रहितवन्तः सन्ति। शर्माणो गुप्ताश्च तत्रत्यपरिषदो विशिष्टा उच्चाधिकारिणश्चापि नियुक्ता इति परमं प्रमोद-स्थानमस्माकम्। स्वामिचरणैस्तु "इण्डियाज़ इटरनल रिलिजन" अर्थात् 'भारतीयः सनातनधर्मः' इति शीर्षकः एको निबन्धो निबध्य पुस्तकाकारेण प्रकाशितः तत्र परिषदि पठनार्थं प्रहितश्च। पुस्तकेऽत्र सनातनधर्मस्य मौलिक-सिद्धान्तास्तथा निरूपिताः, यथा ते पाश्चात्यविदुषामपि अनायासेनैव हृदय-ङ्गमाः स्युः।

भारतवर्षवासिनां विदुषामपि कृते पुस्तकमिदं महोपकारसाधकम्। पुस्तकमिदं "सेक्रेटरी भारतधर्ममहामण्डल, प्रधानकार्यालय, जगतगंज, बनारस" इति संकेतेन प्राप्यते।

महामण्डलीय—"सर्वधर्मसदन-" योजनाऽपि अमेरिकाया योरपस्य च तत्तद्देशेषु वितरणार्थं प्रहिता। यदीयं योजना भारतीयानां यूरोपीयाणाम् आमेरिकाणां च सुधीधौरेयाणामभिमानसं निविशमाना कार्यरूपेण परिणता भवेत् तर्हि सम्पूर्णस्यापि भूमण्डलस्य महोपकारः सिध्येदित्यत्र नास्ति अणीया-नपि सन्देहलेशः। वयं हि अमेरिकायाः सर्वधर्मपरिषदः पूर्णरूपेण साफल्यं भवे-दिति श्रीविश्वनाथचरणसरसीरुहेषु सविनयं प्रार्थयामहे।

---

## अधिगन्तुं शक्यते।

—:o:—

जीवमात्रस्यान्तिममुद्देश्यं मोक्षं निःश्रेयसापरनामानं सुखात्मरूपेण संसाध-यितुं महर्षिभिस्त्रयो मार्गा निर्धारिताः; कर्म, भक्तिः, ज्ञानं चेति। आह च भगवान् श्रीकृष्णचन्द्रो भागवतोपनिषदि—

> योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया।
> ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कश्चन॥

यद्यपि कर्मयोगपरायणाः कर्मयोगं, भक्तिपरायणा भक्ता भक्तियोगं, ज्ञानमार्गमाश्रिताश्च ज्ञानयोगं विशिष्य प्रशंसन्ति; किन्तु त्रयोऽप्येते मार्गा

निःश्रेयससाधका इति निर्विवादः पन्थाः। गीतायां च भगवता श्रीकृष्णेन षड्भिरध्यायैः कर्मयोगः, तावद्भिरेव भक्तियोगः, अन्ते च षड्भिर्ज्ञानयोगः प्रतिपादितः। कर्मयोगज्ञानयोगयोर्मध्ये भक्तियोगस्य संनिवेशनात् भक्तिर्हि उभयोरेव सहायिकेति सिध्यति।

कर्मयोगमाश्रिताः निष्कामकर्मणा परिक्षीणसंस्काराः स्वस्वरूपं परिज्ञाय ब्रह्मीभावं सम्पद्यन्ते; ज्ञानयोगपरायणाश्च "सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन" "ब्रह्मविद् ब्रह्मैव भवति" "तत्त्वमसि अहं ब्रह्मास्मि" इति शतशः श्रुति-वाक्यान्यनुसृत्य आत्मनो ब्रह्मस्वरूपतामनुभवन्ति भक्तियोगमनुसरन्तोऽपि केवलं भगवच्चरणचिन्तनपरायणा आत्मानं विस्मरन्तस्तद्रूपं प्रतिपद्यन्ते। तथा चैकेन भक्तशिरोमणिना साधु समुट्टङ्कितम्—

"दासोऽहम्" इति या बुद्धिः पूर्वमासीज्जनार्दने।
'दा' कारोऽपहृतस्तेन गोपीवस्त्रापहारिणा॥

केचन पण्डितप्रकाण्डा ज्ञानयोगम् अपरे च कर्मयोगं विशिष्य प्रतिपादयन्तस्तत्तत्प्राधान्यमाकलयन्ति। गीतायां यद्यपि—

"सांख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिताः।
एकमेवास्थितः सम्यगुभयो विन्दते फलम्॥
यत् सांख्यैः प्राप्यते स्थानं तद् योगैरपि गम्यते।
एकं सांख्यं च योगं च यः पश्यति स पश्यति"॥

इत्थं प्रतिपादितम्; किन्तु कर्मयोगापेक्षया सांख्ययोगस्य दुःसाध्यत्वात् कर्मयोगस्यैव माहात्म्यं सर्वत्रैवाङ्गीकृतं निभाल्यते। तद् यथा गीतायामेव—

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते॥

एकान्ततः कर्मसंन्यासः साधकानां कृते यथा दुःसाध्यो न तथा फलाकाङ्क्षाराहित्यनिष्कामकर्मयोग इति।

भगवता श्रीवेदव्यासेन स्वकीयं प्रियपुत्रं श्रीशुकदेवमुद्दिश्य विषयोऽयं देवीभागवते साधुसमुपदिष्टः। उपदेशोऽयं सर्वसाधारणस्त्रीपुरुषमात्रस्यापि कृते सुमहान् हितकारीति महामण्डलेन पृथक् पुस्तकाकारेण हिन्दीभाषायां प्रकाशितः। तत्र श्रीमहामण्डल-प्रधानसञ्चालकानां श्री १०८ मताम् स्वामिचरणानां कर्मयोगसांख्ययोगतारतम्य-विषये विवेचनरूपं परिशिष्टमपि प्रदत्तमास्ते।

पुस्तकमिदं 'वाणीपुस्तकमाला' पुष्परूपेण प्रकाशितम् । सूर्योदय-संकेतेन पत्र-व्यवहारतस्तदधिगन्तुं शक्यते ।

## आर्यमहिला-विद्यापीठम् ।

——:०:——

निखिलभारतवर्षीया श्रीमती आर्यमहिलाहितकारिणी महापरिषद् स्वीयं विभागत्रयं निर्धारितवती वर्त्तते । तथा हि—

( १ ) प्रथमः—प्रचारविभागः । विभागेनैतेन सचित्राम् "आर्यमहिला" नामधेयाम् अत्युच्चकोटिकमासिकपत्रिकाम्, पुस्तकमालारूपेण बहून् उपादेयान् ग्रन्थान च प्रकाश्य सर्वविधजनानां स्त्रीपुरुषाणां महीयान् उपकारः संसाध्यते ।

( २ ) द्वितीयः—अन्नसत्रविभागः । काश्यामत्र विद्यार्थिनाम् संन्यासिनाम् अन्येषां च पुरुषाणां कृते अगणितानि अन्नसत्राणि समुद्घाटितानि सन्ति; किन्तु विविधविपद्ग्रस्तानाम् अनाथानां नारीणां कृते एकमप्यन्नसत्रं नास्ति । परिषदो विभागेनैतेन अभावोऽयं दूरीकृतः ।

( ३ ) तृतीयः—महिला-विद्यापीठ-विभागः । तादृशशुभकार्यसमनुष्ठानाय पिशाचमोचनतीर्थस्य पूर्वस्यां दिशि सुविस्तृतवाटिकायामेकस्यां सुविशालं महिलाविद्यापीठमन्दिरं परिषदा निर्मापितम् । विद्यापीठस्यैतस्योद्घाटनकृत्यं यू. पी. गवर्न्मेंन्टशिक्षामन्त्रिभिः श्रीमद्भिः आनरेबुल श्रीजगदीशप्रसाद-श्रीवास्तवमहोदयैः स्वयमुपस्थाय अगस्तमासस्य ६ तिथौ ( सन १९३३ ) सम्पादितम् । उत्सवेऽत्र कमिश्नर-कलक्टर-प्रभृतयोऽनेके राजकर्मचारिणः, तमकुहीनरेशादयो बहिःस्था राजानः, संख्यातीताः काशीनिवासिनो गण्यमान्याः सज्जनशिरोमणयश्च समुपस्थिता आसन् । महिलाविद्यापीठेऽत्र प्रारम्भिकीमारभ्य सर्वोच्चां शिक्षां महिलाभ्यः प्रदातुं सुप्रबन्धो विहितो वर्त्तते । अन्य-प्रान्त-नगरेभ्योऽध्ययनार्थं समागतानां शिक्षार्थिनीनां कृते छात्रीनिवासोऽपि निर्मित आस्ते । अत्रत्यानि सर्वविधान्यपि कार्याणि सुयोग्यमहिलाभिरेव संचाल्यन्ते ।

———

## याच्ञा ।

( गीतिः )

याचे केशवपदयुगले
शोणमहोजितकमलदले ( ध्रुवम् )

( १ )

भारतदेशं, विगतक्लेशं,
विधेहि माधव ! भुवनतले ( याचे० )

( २ )

कृतरिपुघाता, भारतमाता,
विहसतु काले किल सकले ॥ याचे० ॥

( ३ )

धर्मधरित्री, तवप्रसवित्री,
मज्जति दुःखसमुद्रजले ॥ याचे० ॥

( ४ )

गणः शलभतां, द्विषतां लभतां,
समिद्धधर्माग्रहानले ॥ याचे० ॥

—"आत्मारामः"

---

## उदुम्बर-प्रशस्तिः ।

—:o:—

श्रीमन्माध्वसम्प्रदायाचार्य-दार्शनिकसार्वभौम–साहित्यदर्शनाद्याचार्य-तर्करत्न-न्यायरत्न-गोस्वामिवर्य श्रीदामोदरलालगोस्वामिना सुक्ति।—

"चम्पारण्यप्रान्तस्थरत्नमालावास्तव्यं चिकित्सकचूडामणिं वैद्यरत्न-मायुर्वेदाचार्यं विद्यालङ्कारं कवीन्द्रं सरयूपारीणपङ्क्तिपावनभूसुरवंशमौक्तिकं

पण्डिततल्लजं मिश्रोपाख्यं श्रीचन्द्रशेखरधरशर्ममहोदयं प्रायेणादभ्रसंख्याजनाः साक्षात् परम्परासाधारण्येन जानन्तीत्यत्र नाणिष्ठोऽपि संशयावकाशः।

स्वनामख्यातोऽयं पुरुषकुञ्जरः कुञ्जरयत्यध्यासीनां नररत्नराहित्यकिंव-दन्तीं, वदन्तीश्चागदयतितमां निजामामयाविता जनतां, नताश्चापरौषधिसमष्टिं विदधानो दधानो हृदि यशं यशै र्यजमानश्चैनं यशाङ्कानेकगुणगरिमगूरणेन, यद्यपीदमीयफले जन्तुसार्थगर्भत्वेनानर्थतातः फलेग्रहितायां सङ्कुचतां वहिरङ्ग-दृशां विवेकिधौरेया जन्तूनां फलान्यस्मादिति श्लाघ्यतमान्वयमनुभवन्तः शिर-सैनमाद्रियन्ते। यश्चासौ—

हृद्रोगाक्षिघ्राणकर्णाननत्वक्-
शेषाङ्गोद्यद्व्याधिमात्रप्रशान्तौ।
शास्त्रस्तुत्योऽध्यक्षसिद्धप्रभावः।
पीयूषेणोदुम्बरः स्पर्धतेऽत्र॥
साधौ विभक्तिषु तथाङ्गविकारिणीषु।
सामर्थ्यभाजनतयाऽखिलतद्धितेषु।
शब्दानुशासनविधेव परोपकारै-
रौदुम्बरी गुणनतिर्भुवि लालसीति॥

अन्यच्च—एतद्गुणनिरूपणात्मकं हिन्दीभाषाकृतं "गूलरगुणविकाश" इतिनामकं तथा "यशाङ्कप्रकाश" इतिनाम्ना संस्कृतनिबद्धं च पुस्तकं जगदुप-कृतये प्रकाशितम्।

प्रभावोऽप्यन्येषु न पतति। हिन्दुजात्यै इतरेषां नियमा मधुरा अपि, सुगमा अपि, अन्ततो हानिप्रदा एव सेत्स्यन्ति; स्वकीयानां कटूनामपि नियमानां पालन एव तस्या अस्तित्वं स्थिरीभवितुमर्हति। श्रोतव्यं 'गीतया' गीतं गीतम्-

"श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात्।
स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः॥
सहजं कर्म्म कौन्तेय! सदोषमपि न त्यजेत्।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥"

गीता

मनुरप्येतदेवाऽऽचष्टे—

"वरं स्वधर्म्मो विगुणो न पारक्यः स्वनुष्ठितः"

कदाचन कश्चन माहम्मदमपि भवन्तः पञ्चनदे शाटिकापृष्ठस्थग्रन्थिं बध्नन्तमद्राक्षुः? वायुशकला-(बाईसाईकल) रोहणसमये, अश्वारोहणसमये वा तैर्नग्नता काममनुभूयेत; पुनरपि ते स्वनियमकारणात् पृष्ठस्थग्रन्थिबन्धनं न कुर्वन्ति; अग्रतः कदाचिद् बध्नीयुरपि। इदमुदाहरणं दिङ्मात्रम्। तदैव तु सङ्ख्यायामल्पास्सन्तोऽपि ते स्वधर्म्मप्रणयिनो बलिष्ठाश्च भवन्ति। धर्म्म-रक्षण कृते(१) ते मरणमारणायाऽप्युद्यच्छन्ते। परन्तु हिन्दुषु तु शाटिकापृष्ठस्थ-ग्रन्थिमोचनस्य पञ्चनदे सभ्यतैव समजनि। शिखाया यज्ञोपवीतस्य च सम्बन्धे 'गान्धि' महाशयस्यैव (यो हिन्दुजातिनेता कथ्यते,—स्वञ्च हिन्दु धर्म्माणं शतकृत्वः कथितवानस्ति) विचाराः श्रूयन्ताम्—

'आत्मकथा' द्वितीयखण्डः। अनुवादको हरिभाउ उपाध्यायः, पृष्ठम् ३०२ तत्र द्रश्यतां किं लिखितम्?

गान्धिमहोदयं 'हृषीकेश'स्थः कश्चन संन्यासी अपृच्छत्—भवान् 'शिखां' यज्ञोपवीतं वा कथं न धारयति? तदुत्तरे गान्धिमहाशयस्य शब्दा अमी।—

"शिखा तो घरके बड़े बूढ़े हम भाईयोंके सिर पर रखाते थे; परन्तु विलायतमें सिर खुला रखना पड़ता था, गोरे लोग देखकर हसेंगे-और हमें जंगली समझेंगे, इस शर्मसे शिखा कटा डाली थी। मेरे भतीजे छगनलाल गान्धी जो दक्षिण अफ्रीकामें मेरे साथ रहते थे, बड़े भावसे शिखा रख रहे थे-परन्तु इस वहमसे कि-उनकी शिखा सार्वजनिक कामोंमें बाधा डालेगी (?) मैंने उनके दिलको दुखाकर भी छुड़ा दी थी। इस तरह शिखासे मुझे उस

(१) 'पूरण गुणे' ति सूत्रे पूर्व्वोत्तर साहचर्य्यात् कृदव्ययस्यैव षष्ठीसमासनिषेधः। अन्यस्य तु समासः स्यादेव; तथा च भट्टिः—'यत्कृतेऽरीन्निगृह्णीमः'। 'आदेयाः किंकृते भोगाः कुम्भकर्ण! त्वया विना' इति।

समय शर्म लगती थी।...............शिखा तो मैं रखता था, परन्तु शर्म और डरसे उसे कटा डाला। मैं समझता हूँ कि—वह तो मुझे फिर धारण करलेनी चाहिये। अपने साथियोंके साथ इस बातका विचार कर लूंगा।

जनेऊ तो मैं धारण नहीं करूंगा; क्यों कि-असंख्य हिन्दु जनेऊ नहीं पहनते हैं—फिर भी वे हिन्दु समझे जाते हैं (?) तो फिर मैं अपने लिये उसकी ज़रूरत नहीं देखता। फिर जनेऊ धारणके मानी हैं दूसरा जन्म लेना अर्थात् हम विचारपूर्वक शुद्ध हों (?) आज तो हिन्दुसमाज और हिन्दुस्तान दोनों गिरी दशामें हैं—इसलिये हमें जनेऊ पहिननेका अधिकार ही कहां है। जब हिन्दुसमाज अस्पृश्यताका दोष धो डालेगा—ऊंच नीचका भेद भूल जायगा—दूसरी गहरी बुराइयोंको मिटा देगा—चारों तरफ फैले अधर्म्म और पाखण्डको दूर कर देगा—तब उसे भले ही जनेऊ पहननेका अधिकार हो।

पुनः ३०३ पृष्ठे लिखितम्—

जनेऊके सम्बन्धमें उस समय हृषीकेशमें जो विचार मैंने प्रदर्शित किया था—वह आज भी प्रायः वैसा ही कायम है।.........परन्तु जब वह बाह्य-सञ्ज्ञा आडम्बरका रूप धारण कर लेती है—अथवा अपने धर्म्मको दूसरे धर्म्मसे पृथक् दिखलानेका साधन हो जाय, तब वह त्याज्य हो जाती है। आजकल मुझे जनेऊ हिन्दुधर्मको ऊंचा उठानेका साधन नहीं दिखाई पड़ता, इसलिये मैं उसके सम्बन्धमें उदासीन रहता हूँ"।—

हन्त! प्राचीनसमये यत्र—

'शिखा ते वर्द्धते वत्स! गुडूचीं श्रद्धया पिव'

इति शिखावर्द्धनलोभं दत्त्वा·· गुडूचीसदृश—कषायवस्तु लघुबालान् पाययन्ति स्म; अद्य सैव शिखा गान्धिमहोदयेन सार्व्वजनिककार्य्येषु बाधा-भियाऽन्यस्य चित्तं दुःखयित्वाऽपि कर्त्यते। दृष्टा एव पाठकैर्गान्धिमहोदयस्य कपोलकल्पिता युक्त्याभासाः। अद्य इमे उच्चहिन्दुव्यपदेश्यानामादर्शा इष्यन्ते तर्हि कथं ते सङ्ख्यायां न्यूना न स्युः। अस्यैव गान्धिमहाशयस्य अन्यद् दुस्साहसिक्यं दृश्यताम्, यदस्य क्व तावत् कार्य्यपर्य्यवसितिस्सम्पन्ना—गता तावदस्य वर्त्तमानराज्यकवलितायाः राष्ट्रिय(१) समुन्नतेर्वार्त्ता; समाप्ता राज्ञा सहाऽसहयोगनीतेश्चर्चा, पलायिता तावत् तर्कु-(चर्खा) चक्र-चालन प्रचार-कथा; विनष्टा कारावासदासता-विचारणा; आविष्कृतो नवीनो धर्म्म-

(१) राष्ट्रियेति। 'राष्ट्रावारपाराद् घखौ' इति घः। तस्य 'आयनेयी'त्ति इय्।

लाभोपायः (?) यद्-वर्त्तमानशासकाऽपेक्षितः स्वजाति-धर्म्म-विद्रोह एवाऽस्य सम्प्रति परमोद्देशो जातः। अस्पृश्योद्धारे तु तेन बलं दत्तमेव; अधुनाऽग्रेऽपि पादःप्रसारितः। अयं जात्या वैश्योऽपि सन् स्वतनुजनुषो देवीदासस्य विवाहं ब्राह्मणकुमार्या कारितवान्। आः! इयं नेतॄणां दशा। योऽयमद्यत्वे 'भङ्गी' पदवाच्यान् 'हरिजन' व्यपदेश्यान् कृत्वा ब्राह्मणेभ्योऽप्येषां मानं प्रवर्द्धयति; तस्योचितन्त्वेतदासीद् यत् स स्वकुमारस्य विवाहमपि कयाचिद् 'भङ्गी' कुमार्य्याऽकरिष्यत्। परं तत्तु न कृतम्। स्वयं वैश्योऽपि वैश्यकन्यया सह न, क्षत्रियकन्यया वा न; युगपद् ब्राह्मणकन्यया सह विवाहमचीकरत्। हा हन्त! ये ब्राह्मणान् घृणास्पृशा दृशा; वीक्षन्ते, तान् पाखण्डिनो देशोन्नतौ प्रतिबन्धकान् अत एव मध्येसमुद्रं प्रक्षेप्तव्यान् मन्यन्ते; ते स्वयं ब्राह्मणा बुभूषन्ति, ब्राह्मणकुमार्य्यस्तेषां दृष्टौ मधुरा भान्ति; तासां करा हर्षकरास्तत्कृते। बत!!! एकदा ब्राह्मणानां चिरसपत्नेन स्वर्गतेन श्रद्धानन्दस्वामिव्यपदेश्येन ला० मुन्शीरामेणाऽपि स्वपुत्रस्येन्द्रचन्द्रनाम्नो विवाहो ब्राह्मणकुमार्य्या कारितः। हन्त! ते ब्राह्मणा अपि कीदृङ्-मूर्खाः; य एभ्यः स्वकन्या अर्प्पयन्ति। सर्व्वोऽयं धार्मिकविश्वासशैथिल्यस्य परिणामः, मिथ्याप्रशंसायाश्च दुर्विपाको यदस्माभिर्महता नेत्रा सार्द्धं सम्बन्धःकृत इति।

पाठकाः! इत्यादिवार्त्तां दृष्ट्वा भवन्तो बोद्धुं शक्ताः; यद्—हिन्दुजातिः स्वकीयं धर्म्मं परित्यज्य धर्म्माभासान्तरं प्रति पश्चिमं प्रति वा परापतन्ती लक्ष्यते; पुनरियं पूर्व्वपदं प्राप्तुमसमर्था भविष्यति। एषां नेतॄणां पुरुषार्थस्त्वयमभविष्यद्; यत्तेऽन्यान् युक्तमार्गमानेष्यन्; परन्तु स्वयमेव ते भ्रष्टा भवन्ति। एषामुचितमेतदासीद्; यत् ते पततःपतनात् त्रायन्ताम्; परन्त्विमे तु पतद्भ्य एव सुविधा दत्त्वा अपतितानपि पातयितुमीहन्ते। तेनाऽन्येऽपि मृदुमनसःपतन्त्येव। तदुक्तम्—

> "मृदुना सलिलेन खन्यमाना-
> न्यवघृष्यन्ति गिरेरपि स्थलानि।
> उपजापविदाञ्च कर्णजापैः
> किमु चेतांसि मृदूनि मानवानाम्॥"

किं वयमप्येषां महात्मनाम् (!) इच्छां पूरयितुं धार्म्मिकनियमानेतदनुसारिणःकुर्य्याम? अस्मन्मतौ त्विदमायाति—यदि हिन्दुसङ्ख्याऽल्पाऽपि तिष्ठेत्। परं स्वधर्म्मेऽवतिष्ठेत(१) कामं सा कियत्क्षणान् यावदपि जीवेत्; तद्वरम्—

(१) अवतिष्ठेत। 'समवप्रविभ्यः स्थः' इति तङ्।

"क्षणं प्रज्वलितं श्रेयो नहि धूमायितश्चिरम्"

यदि सा सङ्ख्यायां महिष्ठाऽपि भूत्वा स्वप्राच्यधर्म्मं विसृज्य कतिपयाः सहस्राब्दीर्यावदपि जीवेत्; तर्हि तद् व्यर्थम्। कोटिव्यभिचारि विधवानां प्रतियोगितायामेकस्यामपि सत्यां सत्यां लाभः; लक्षवेश्या एकैव कुलवती स्त्री अतिशेते। यद्ययं विचारः स्याद्, यद्—वयमल्पसङ्ख्याका जातास्तन्तोऽधिक-सङ्ख्येभ्यो विधर्म्मिभ्यः सदा प्रहारान् प्राप्स्यामः; तर्हि तदप्यसद्—अद्या-ऽपि हिन्दूनां, भारते माहम्मदेभ्यो भूयस्सङ्ख्याऽस्ति सङ्ख्या; पुनरपि–तेऽल्प-सङ्ख्यकैर्माहम्मदैः प्रह्रियन्ते। तर्हि सङ्ख्याऽकारणमेव श्राणानौ। शत-शृगालानां कृते एकोऽपि सिंहः पर्य्याप्तो भवति। शतकापुरुषेभ्य एकः साहसी अलम्। भूयिष्ठसङ्ख्या अपि यद्वयं प्रह्रियामहे सङ्ख्यायां वा ह्रसिमानमेमः; तत्र कारणं स्वधार्मिकविश्वासशैथिल्यमेव। तेनाऽस्माभिर्धर्म्ममवलम्ब्य स्वप्रा-चीनसंयमादिनियमैर्बलवृद्धिर्विधेया। पुनरल्पसङ्ख्यायामपि सतोऽस्मानन्ये-प्रहर्त्तुं नाऽलम्भूष्णवः स्युः। अल्पसङ्ख्याका अपि आङ्गला बहुसङ्ख्यकेष्व-स्मासु राज्यं न कुर्व्वन्ति किमु? मुष्टिमेया अपि 'जापान'वास्तव्या अपरिमिता-नामपि 'चीन' वासिनां नासिकायां प्राणाञ्चाऽकार्षुः किमु? तेन साहसिकरहितं सङ्ख्याबाहुल्यं व्यर्थमेव। साहसञ्चाऽस्मदीयधर्म्म एव शिक्षयति नः।

"अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।
नित्यस्सर्व्वगतः स्थाणुरचलोऽयं सनातनः॥"
"मृतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय! युद्धाय कृतनिश्चयः॥"

अयि हिन्दुनेतारः! किञ्चिच्चेतन्तु भवन्तः। ऐतिहासिकीं कथाचित्की-र्घटना दृष्ट्वा स्वसामान्यधर्म्मस्य त्यागं मा कार्षुः, आपत्कालिकनियमानामैकदे-शिकनियमानां वा सार्व्वकालिककरणस्य सार्व्वदेशिकविधानस्य च स्वप्नं मुञ्चन्तु, हिन्दुजातौ संयमशक्तिं प्राचीननियमपालनशक्तिञ्च एधयन्तु। यद्येत-दनभीष्टं भवताम्, यदि ऋषीणामाज्ञा भवतां दुष्टावत्याचारास्सन्ति; धर्म्म-शास्त्राणि भवद्दृशि कारागाराणि विद्यन्ते यदि, प्राच्यनियमा भवत्कृते निगडा वर्त्तन्ते, शिखा भवतां कृते आरण्यकता–यज्ञोपवीतञ्च बन्धनं भवतां कृते, प्रतिलोमविवाहा भवतामीप्सिता यदि; तर्हि प्रियवराः! कुर्व्वन्तु स्वैराचारम्। पुनरार्य्यजातिसञ्ज्ञाबन्धनमपि तु विसृजन्तु। कश्चित् पृथक् सम्प्रदायं निर्म्मा-न्तु–भवतां सङ्ख्याऽपि प्रवृद्धा भविष्यति। परन्तु, सनातनधर्म्मनदीं कलुषितां माकार्षुः; सनातनधर्म्ममर्म्म स्वदूषकर्म्मभिर्न कृन्तन्तु (भवद्भिर्यथा हिन्दुधर्म्म-

स्य नाशऽकृतस्तथा यवनादिभिरपि न कृतः । तैस्त्वस्माकं बाह्यक्षतिऽकृता; परन्तु भवद्भिस्त्वस्माकमन्तरपि जीर्णता क्रियते ) । 'स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावह' इति हिन्दुजनताविश्वासं माऽपास्यन्तु । 'एकश्चन्द्रस्तमो हन्ति न च तारासहस्रकम्' इत्याद्युक्तीर्न विपरिणमयन्तु । अथ च स्वस्य सनातनधर्म्मित्वमुद्घोष्य तद्धर्म्मवैपरीत्यं हिन्दुजनतां मा शिक्षयन्तु । धर्म्म-धनानां हिन्दुजनानाञ्च धार्म्मिकनियमेषूपहासं कृत्वा तेषां श्रद्धां विश्वासं वा न शिथिलयन्तु । स्वकीयकथनमात्रेणैव ऋषीन् प्राच्यविपश्चिदपश्चिमांश्च रीढाऽवलीढान् मा कार्षुः । भारतं वर्षञ्च ज्ञात्वैव विधर्म्मिणां हस्ते मा ददतु । अस्मदीयधर्म्मकर्म्मसु विधर्म्मणो नियामकान् मा कारयन्तु । आस्माकीन-धार्म्मिकस्वातन्त्र्यं दवयितुम् एतावादच्छुकानां वर्त्तमानशासकानां दक्षिण-हस्तायिता भवन्तो भवन्तो मन्तुमन्तो मा भवन्तु । सङ्ख्यावृद्धिविचारं हित्वा च अल्पसङ्ख्याकानपि जनान् धर्म्मकर्म्मठान् कारयितुमुत्साहयन्तु । स्मरन्तु चेदं सदा—

"क्षणं प्रज्वलितं श्रेयो नहि धूमायितश्चिरम्"

"एकश्चन्द्रस्तमो हन्ति न च तारासहस्रकम्"

इत्येवाऽस्माकं भवतां पुरः सप्रश्रयं प्रार्थना । किमनल्पजल्पनेन ।

---

# नियम-विमर्शे विमर्शः

## ( विहारोत्कलसंस्कृतसमितेः )

### ले०—श्रीरमानाथपाण्डेयः व्याकरणाचार्य्यः

( रामनिरञ्जनदासमुरारकीयसंस्कृतकालिजस्थः, पटना । )

हन्त ! नितरां विषीदति चेतो यत् साहित्याचार्य्यपदमलङ्कुर्वाणेषु प्रकाण्ड-पाण्डित्य-मण्डितेष्वनेकशःपण्डितरूपेषु अन्यतमस्यैव मतिर्नियम-विमर्श-पराकाष्ठामासादयति नेतरेषामिति । नैकदा निर्धारितानि परीक्षा-पाठ्य-पुस्तकानि कुत्रचिदपि कस्मिँश्चिदपि विषये दृष्टिपथमारोहन्ति वसु-वर्षतोऽधिककालम् । यथा पञ्चनदीयपरीक्षासु वर्षत्रयमेव ग्रन्थपरिवर्त्तन-कालः । अन्यत्रापि सर्वत्रैव परिवर्त्तनं किञ्चिदेवकालानन्तरञ्नयन-विषयता-समलङ्करोतीति न नोऽविदितमेतद्विदुषाम् । वाराणसीयपरीक्षास्वपि ग्रन्थानां परिवर्त्तनता प्रमोदमेवाऽऽवहति सरस्वतीरस-पूर-प्लावितान्तःकरणानां विप-

श्रितामन्तेवसताञ्च । वाराणसेयमहाविद्यालयेऽपि निखिलागम-घन-विहरणपरा-यणकण्ठीरवैरचलेशचयचुम्बिनामलचारुचरणैः कविकुलकुमुदकलाधरैः निर्धारितनिर्वाचकैः परिपूर्णगाम्भीर्य्यगुम्फितानि नवनीतस्वान्तसंवेद्यानि छात्राशुबोधकराणि, अनेकशो महामहोपाध्यायप्रवरैरनुमोदितानि पुस्तकानि परीक्षाकोटौ प्रवेश्यन्ते छात्राणां हितायैव । विहारोत्कलसंस्कृतपरीक्षास्वपि शाश्वतीमेकपदीमवलम्ब्यैव व्यतीते करिपरिमितेऽब्दे पाठ्य-पुस्तकानां परिवर्त्तनता नान्यथा । "विशेषतः साहित्यग्रन्थानामेव" इत्यनवधानता-जनित-प्रमत्तवाद-स्तत्रभवतां भवताम् । समेषामेव ग्रन्थानां यथोपयोगमन्तेवसतां परिवर्त्तनम्, नैकविषय एव । एतद्धि अकृतबुद्धीनामध्यापकपदमलङ्कुर्वतां निस्त्रपाणामन्तेवसदवहेलनानिदानम्, न तु सारविदां तदध्यापकानाञ्छात्राणाञ्चाप्रौढत्वकारणम् । 'काव्यप्रकाशकाव्यप्रदीपयो' र्विषयस्याङ्गाङ्गिभावत्वेऽपि कठोरतर-ग्रन्थनिर्माणसरण्यवगाहनपाण्डित्यरूपे फलसत्वे समुदीयमाना निष्फल-सूचिका कुयुग्ममीमांसा जर्ज्जरयति नितरां सहृदयहृदयानि । "नैषधस्य" नवमसर्गात्परेषां सर्गाणां "ध्वन्यालोकस्य" च तृतीयोद्योतस्य परीक्षातोऽपसारणं तेषां गौरवेऽनवधानतां प्रमाणयति चेत्तर्हि नव्याह्निक "महाभाष्यस्य" अव्ययीभावान्त "शेखरस्य" अव्ययीभावान्तस्य "शब्दरत्नस्य" च परीक्षायां स्थानदानन्ततः परेषां गौरवेऽनवधानतां प्रमाणयेदिति । ग्रन्थनिर्वाचनावसरे सुसम्पादितशेमुषीणां दिगन्तविश्रान्तयशसां पण्डितरूपाणां सम्मतिरपेक्षिता भवति न तु पण्डितम्मन्यमानानां पराक्षेपसंसक्तचेतसाम् । एतद्विषये तदीयाऽऽक्रन्दनं निर्नारीकाऽऽक्रन्दनमेव सुतराम् । हंहो ! "वैयाकरणाः" इति पदं तद्विषये प्रयुञ्जानो अपि "श्रुतबोधाध्यापने वेपमानाः" इति कथयन्तो न मनागपि त्रपा-कूपारेनिमज्जन्ति ते सन्तः । न चाप्यञ्जलिजले स्वजीवनन्तर्पयन्ति न च तदीयोपकारता लवमपि स्वस्वान्त-पथिकयन्ति ते । अयमेव महान् खेदावसरो रसज्ञानां मानसमन्दिरे प्रकाशतामासादयतितराम् । व्याकरणोदाहरणीभूतकाव्यसाहित्याचार्य्यपरीक्षोत्तीर्णोऽध्यापकपदमलङ्कुर्वाणः "संयुक्त साहित्यग्रन्थे"ति प्रयुञ्जानः किन्न कलङ्कयत्येव साहित्यगाम्भीर्य्यम् ? इति नाविदितमेतन्निःशेषविदुषाम् । "यो यस्मिन्विषये आचार्य्यः स तस्मिन्नेव विषये आचार्य्यैऽन्तेवसतः प्रेषयितुं शक्नोति" इति तेषां गार्हिको नियमः B. & O. संस्कृतसमितेः, असिस्टेण्टसुपरिण्टेडेण्टमहोदयानां श्री पं० हरिशङ्कर-शर्म्मणामादेशेन विपर्य्यस्तो न तु समितेरिति सावधानतामाकलयन्तु ते महर्षयः ।

आर्य भगवन्! अन्तर्यामिन्! कस्यचिद् व्रजभूषणाभिधस्य सरयूपारीण-ब्राह्मणस्य विद्यालयरूपां कीर्तिलतां सङ्कुचीभूय जिघत्सतश्छात्रजीवनञ्च विफलयतः प्रगाढपण्डितान् त्वरितफलभोगान् किन्न सम्पादयसे? इति करुणरसार्द्राणि भवन्ति सहृदयानां मनांसि। प्रतिनिमिषन्तेभ्यो यथोचिता गतिर्देयेति विश्वनाथं वारम्वारं समभ्यर्थयते। इत्युपरमतीदानीं पुनरपि यथावसरं वक्तुमर्हामि—

## आयुर्वेद-महत्त्वम्

( युक्तप्रान्तीय वैद्य-सम्मेलने सीतापुरे पठितम्। )

——:o:——

( १ )

पूषा प्राप नवान् रदाननुपमान्यस्य प्रसादात्पुरा
यक्ष्माग्रस्तकलेवरो हिमकरः स्वास्थ्यञ्च लेभे पुनः।
वृद्धोऽपि च्यवनो युवा समभवद् वेदस्य यस्यायुषो
योगैस्तेन महत्त्वमस्य विपुलं व्याप्तं स्वयं भूतले ॥

( २ )

वेदानामुपवेद एव कथितो नित्यत्वमप्यस्य च
प्रोक्तं सादरमक्षि[1]पादमुनिना न्यायाख्यशास्त्रे निजे।
सर्वेष्वेव युगेषु यस्य फलदैर्योगैः प्रजा लेभिरे
स्वास्थ्यं तेन महत्त्वमस्य विपुलं व्याप्तं स्वयं भूतले ॥
वेधोदक्षपरम्पराप्रकरणाद्द[2]स्रावधीत्याथ तौ
देवेन्द्रं सुधियं महामतिमतामध्यापयामासतुः।
आनीतस्तत एष पुण्यमतिना मध्ये मुनीनां भर-
द्वाजाख्येन महत्त्वमस्य च पुनः प्रोक्तं स्वयं भूतले ॥

( ४ )

अष्टाङ्गोऽयमतीवयुक्तिसहितो लेभे महद्गौरवं
शल्येऽद्यापि यदीयगूढरचना जागर्ति धन्व[3]न्तरेः।
विख्यातश्चरकश्चिकित्सितविधौ सूत्रस्थले वाग्भटो
नैदानेऽस्य महत्त्वमत्र विततं श्रीमाधवाद्भूतले ॥

---

१ गौतममुनिना। २ अश्विनीकुमारौ। ३ धन्वन्तरेरुपदेशस्वरूपा सुश्रुतसंहिता।

( ५ )

दुर्दैवाभसमावृते रविनिभे ज्ञानेऽस्य लुप्ते तथा
ह्रासोऽकारि भिषग्भिरस्य च निजे त्यक्ते शुभे कर्मणि ।
पाश्चात्यं मतमाश्रयत्पुनरथो शारीरशास्त्रे हितं
विज्ञानेन महत्त्वमस्य सुधियः प्रख्याप्यतां भूतले ॥

**सोमदेवशर्म्मा साहित्य-शास्त्री आयुर्वेदाचार्यः ( फ़ाइनल )**
आयुर्वेद मेडिकल कालिज, हिन्दूयूनिवर्सिटी, काशी ।

---

## श्रीवेदान्तगुरुपञ्चकम् ।

सच्चिन्मात्रं ब्रह्म यथार्थं, सर्वं चाऽन्यन्मिथ्यैव,
ब्रह्मात्मैक्यं मुक्तिः, सा च ब्रह्मज्ञानेनैवाप्या ।
अद्वैतं वै यस्य मतं स्यात्, आद्यं तं श्रीलोकगुरुं,
श्रीमच्छङ्करभगवत्पादं श्रितचिन्तामणिमाश्रय भो ॥ १ ॥

सत्यज्ञानसुखादिविशिष्टः सर्वान्तर्याम्यखिलेड्यः,
जीवोऽस्यांशः, प्रकृति देहः, शिवसायुज्यं मुक्तिः स्यात् ।
श्रीमच्छैवविशिष्टाद्वैतं श्रेष्ठं यस्य मतं स्यात्, तं
श्रीकण्ठाख्यं लोकाचार्यं श्रितचिन्तामणिमाश्रय भो ॥ २ ॥

सत्यज्ञानाद्यखिलगुणाढ्यः सर्वात्मा हरिरेवैकः,
तस्य शरीरं चिदचिद्रूपं, तत्सारूप्यं मुक्तिः स्यात् ।
श्रीमद्विष्णुविशिष्टाद्वैतं श्रेष्ठं यस्य मतं प्रोक्तं,
श्रीरामानुजलोकगुरुं तं श्रितचिन्तामणिमाश्रय भो ॥ ३ ॥

सृष्टिस्थितिसंहारविनोदः शिव एवैकः पतिरीड्यः,
पशुपाशौ तत्सृष्टौ नित्यौ, पशुपतिसामीप्यं मुक्तिः ।
शैवद्वैतं यस्य मतं स्यात्, श्रीलं श्रीपतिलोकगुरुं
श्रीकरभाष्याचार्यवरं तं श्रितचिन्तामणिमाश्रय भो ॥ ४ ॥

सर्वनियन्ता विष्णुः परमः सत्यं जगदपि जीवाश्च,
नारायणसालोक्यं मुक्तिः नवविधभक्त्या सा प्राप्या ।
विष्णुद्वैतं यस्य मतं स्याद्वेदपुराणाद्यधिगम्यं,
श्रीमध्वाख्यं लोकगुरुं तं श्रितचिन्तामणिमाश्रय भो ॥ ५ ॥

---

# सरस्वतीस्तवाष्टकम् ।

—:०ॐ०:—

ले०-शास्त्री पुरुषोत्तम शर्मा (राजकीय संस्कृत व्याकरण पाठशाला, पेटलाद)

स्वर्णावनद्धमणिकुण्डलमण्डितास्या तापत्रयापहरणत्तममन्दहास्या ॥
धाता समस्तजगतां जनकोऽस्ति यस्याः साम्ब ! त्वमेव सुखदा मम सर्वदा स्याः॥१॥
शुक्लाम्बरावृतसमस्तशरीरभागा रक्ताधरेण वितथीकृतबिम्बरागा ॥
यद्दानवार्धिविनिमग्नसमस्तनागा सा त्वं मदीयमनसस्तु कदापि मागाः ॥ २॥
केचित्प्रजापतिसुतेति समुद्गिरन्ति केचित्तु तस्य गृहिणीति समुच्चरन्ति ॥
केचिद्धरिप्रियकलत्रमिति स्मरन्ति सन्तः परात्परतया समुदाहरन्ति ॥ ३ ॥
ज्ञानाधिदैवततया विदितासि नित्यं तस्मात्परं तु सकलं कथनं न सत्यम् ॥
केलिगृहं सुकवितारमणीततीनां वा त्वं प्रसूतिभवनं श्रुतिसन्ततीनाम् ॥ ४ ॥
के वा भवद्भजनतस्तु नरा न सिद्धाः किं वा कवित्वपदमाप्य न कौ प्रसिद्धाः ॥
कैरेव सत्कृतिबलाद्विपथो न रुद्धाः कैर्नोऽनुकूलगणनां गमिता विरुद्धाः ॥ ५ ॥
हे शारदे ! त्वमसि वैभवसंघदात्री ज्ञानाम्भसां निवसने विपुलासि पात्री ॥
त्वं वै चतुर्विधपदार्थविशिष्टधात्री भक्तेभ्य एव परमस्वपदस्य दात्री ॥ ६ ॥
ये त्वां भजन्ति विपदो नहि ते व्रजन्ति ये त्वां त्यजन्ति विपदो विविधाः सृजन्ति ॥
नामावलिं जगति ये सततं स्मरन्ति निर्धूतपातकमला न तु संसरन्ति ॥ ७ ॥
वाञ्छन्ति देवनिकरा मुनयः सदा यं तस्मिन्नशङ्कगमने भव मे सहायम् ॥
याचे त्वदीयपदयोः प्रणिधाय कायं दावो जनेर्मृतिमयो लयमेति हायम् ॥ ८ ॥

---

# शोकाश्रुविन्दवः ।

ले०-शोकसन्तप्तस्वान्तः श्रीजटाशङ्करशास्त्री, वाराही संस्कृत विद्यालयस्थः ।

( मिथिलामण्डलान्तर्गत यजुआराभिधनगरनिवासि विमलकविकुल-
कमलरञ्जकदिनेशशर्मणां कृते )

चिरं गेहे गेहे मतिमति सदेहेऽनवरतं
यशस्ते सोत्कर्षं दिशि दिशि सहर्षं प्रचरितम् ।
दिनेशान्तं याते रचितहितजाते त्वयि सतां
शुचः पारावारः समभवदपारः खलु हृदि ॥ १ ॥

सखे ! शास्त्रे शङ्कामनुचितकलङ्कामपनयन्
भिदन्विद्युद्वेगस्तव सुमतिवेगः प्रविदितः ।
पुरा येन म्लानो विलपति धुनानोऽलिकमयं
*"पराचीने दैवे ननु किमपि नैवेह शरणम्" ॥ २ ॥
सहायश्चेद्वीरः सबलयतु धीरः परिकरं
दिनेशः शास्त्रार्थेऽलमसमुचितार्थेऽपि भयतः ॥
तदेतीदं चित्रं विमृशदिह मित्रं तव पुरा—
ऽधुनाऽऽलोच्योदासं दलयति जटाशङ्करमनः ॥ ३ ॥
उदभ्रन्मानानामपि वरबुधानामधिसदो
महाशब्दारण्ये विगलितशरण्येऽपि तव या ।
उदारा वाग्धारा गुरुविषयसारा समुदिता
त्वयि प्राप्ते हन्तामरपुरमहन्तान्नहि लभे ॥ ४ ॥
मिलद्विद्यागारा रुचिरयजुभागाभिधपुरी
समक्षामभ्रान्ती जनुरनुभवन्ती तव पुरा ॥
न चैकेयं देशावनिरपि दिनेशाऽऽहतियुता
ऽधुना सोदासीनाऽभवदहह ! दीनाऽक्षिविषयः ॥ ५ ॥
किमु ! ध्यायं ध्यायं तव सुपमकायं सुरपुरे
समुत्कण्ठाऽऽसक्ता सुचिरमनुरक्ता नु सबगः !
मुदा चोरं चोरं लघुतरवयोऽरं हृतवती
समेतुं स्वर्बाला विपुलसुखमालामनुपलम् ॥ ६ ॥
विधातुं वा वेधा विमलतरमेधाविनमहो
पदे स्वस्मिन्योगं कठिनमनुयोगं कमपि वा ॥
समाधातुं हन्ताऽऽनयदिति समन्तादवसिते
गताभ्रान्ताऽऽसारा नयनजलधारा प्रवहति ॥ ७ ॥

---

* परेत्यारभ्यशरणमित्यन्तमनितिपरमनुकरणम् तच्च कपतिव्यापारजन्यफलाश्रय इति-ध्येयम् ।

मनया प्रयुज्यते नेत्तत्र मालिन्यस्य गन्धाभावात्तेन च प्रयोक्तुराध्यात्मि-कोऽभ्युदय एव स्यात्।

इत्यनेन च प्रवन्धेनेदमेव सिध्यति यत् कदाचिद् गौणरसैरपि परा भक्तिः परम्परयाऽऽसाद्यते। तत्र तेषां परोक्ष एव सम्बन्धः। मुख्यरसानां तु सर्वथा निर्मलत्वात् भगवद्भावान्वितत्वाच्च तद्द्वारा भक्ताः साक्षादेव परां भक्ति-मासादयन्ति। यतो हि मुख्यानां रसानां पूर्णतयोदये साधकान्तःकरणेषु समाधिभावोदयस्यावश्यम्भावित्वात्॥ १६॥

कथं हि परा भक्तिरासाद्यते इति तत्प्रकारमाह—

**परालाभो ब्रह्मसद्भाविक-तन्मयासत्त्वुन्मज्जननिमज्जनात्॥ २०॥**

यदा हि भक्तो भगवति तन्मयो भूत्वा भावसमुद्रे निमग्नोन्मग्नो भवति, तदा अद्वैतमय(ब्रह्म)भावप्रदात्तद्भावात् परस्या भक्तेरुद्रेको भवति। शुद्धरसानां धारणायां दृढीभूतायां साधकः क्रमशः श्रेष्ठां चरमां समाधिभूमिमासादयति। ततश्च तस्यैव भावस्य महासमुद्रे तस्मिन् निमज्जन्नुन्मज्जन्भावुको भक्तो द्रुतमेव सविकल्पस्य समाधेः वितर्क-विचारानन्दास्मिताख्यानां चतसृणामपि दशानां क्रमशोऽतिक्रमणं विदधन्निर्विकल्पामपि समाधि-कोटिमुपाश्रयतीति भक्तिशास्त्रसिद्धान्तः।

इह हि ज्ञानं भक्तिश्चेत्युभे अपि एकामेव भूमिमेत्य नन्दतः। उभयो-रप्येकैव भूमिर्भवतीति भावः। इमां परां भक्तिमुपेत्य कृतकृत्यो योगी सर्वमपि जगद् ब्रह्ममयमेव पश्यति। इयमेवाद्वैतभावप्रदायिनी परमानन्ददायिनी पराभक्ति र्गीयते। अस्या एव परमानन्ददायिन्या विषये स्मृतिशास्त्रेष्व-भिहितम्—

तदा पुमान् मुक्तसमस्त-बन्धनस्तद्भावभावानुकृताशयाऽऽकृतिः।
निर्दग्धबीजानुशयो महीयसा भक्तिप्रयोगेण समेत्यधोक्षजम्।
अधोक्षजालम्बमिहाऽशुभात्मनः शरीरिणः संसृति-चक्रशातनम्।
तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम्।

त्वं प्रत्यगात्मनि तदा भगवत्यनन्त-
आनन्दमात्र उपपन्न-समस्तशक्तौ॥
भक्तिं विधाय परमां शनकैरविद्या—
ग्रन्थिं विभेत्स्यसि ममाऽहमिति प्ररूढम्॥
मुक्ताश्रयं यर्हि निर्विषयं विरक्तं
निर्वाणमृच्छति मनः सहसा यथाऽर्चिः॥

आत्मानमत्र पुरुषोऽव्यवधानमेक—
मन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥
सोऽप्येतया चरमया मनसो निवृत्त्या
तस्मिन् महिम्न्यवसितः सुखदुःखबाह्ये ॥
हेतुत्वमप्यसति कर्तरि दुःखयोर्यत्
स्वात्मन् विधत्त उपलब्धपरात्मकाष्ठः ॥
वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानं यद्ब्रह्मदर्शनम् ॥
यदाऽस्य चित्तमर्थेषु समेष्विन्द्रियवृत्तिभिः ।
न विगृह्णाति वैषम्यं प्रियमप्रियमित्युत ॥
स तदैवाऽऽत्मनाऽऽत्मानं निःसङ्गं समदर्शनम् ।
हेयोपादेयरहितमारूढं पदमीक्षते ॥
ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् ।
दृश्यादिभिः पृथग् भावैर्भगवन्नेक ईयते ॥
सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि ।
ईक्षते योगयुक्ताऽऽत्मा सर्वत्र समदर्शनः॥
परानुरक्त्या मामेव चिन्तयेद्यो ह्यतन्द्रितः ।
स्वाभेदेनैव मां नित्यं जानाति न विभेदतः ॥
मयि प्रेमाकुलमति रोमाञ्चिततनुः सदा ।
प्रेमाश्रुजलपूर्णाक्षः कण्ठगद्गदनिस्वनः ॥
उच्चैर्गायंश्च नामानि ममैव खलु नृत्यति ।
अहंकारादिरहितो देहतादात्म्यवर्जितः ॥
इति भक्तिस्तु या प्रोक्ता पराभक्तिस्तु सा स्मृता ।
यस्यां देव्याऽतिरिक्तन्तु न किञ्चिदपि भाव्यते ॥
इत्थं जाता पराभक्तिर्यस्य भूधर ! तत्त्वतः ।
तदैव तस्य चिन्मात्रे मद्रूपे विलयो भवेत् ॥
भक्तेस्तु या पराकाष्ठा सैव ज्ञानं प्रकीर्त्तितम् ।
वैराग्यस्य च सीमा सा ज्ञाने तदुभयं यतः ॥ २० ॥

रससमूहस्य प्रवाह-पराकाष्ठा केत्याह—

**सर्वेषामेकत्रैव पर्य्यवसानम् ॥ २१ ॥**

रससमूह-प्रवाहे निर्बाधे सति सर्वेऽपि रसास्तत्रैव परमपदे परिसमा-

प्यन्ते । यथाहि देश-काल-पात्रानुकूल्येनैकमपि वह्निविस्फुलिङ्गं सर्वमपि विश्वं भस्मसात्कर्तुं प्रभवति, तथैव सामान्यतरोऽपि तुच्छातितुच्छोऽपि कोऽपि रसः मध्येऽन्तरायमनासाद्य यथेच्छं विकाशमासादयन् भक्तचेतसि भगवद्विषयकमनुरागं वर्द्धयन् तञ्च भक्तं भक्तेश्चरमसीम्नि प्रापयन् अवसाने तदेव परमानन्दपदं प्रापयतीति परिष्कृतः पन्थाः ।

सर्वेषामेव रसानां परिसमाप्तिस्तस्मिन् रससागरे परमात्मनि भवति । तत एव सर्वे रसा जायन्ते । तत एव जाताः परिपोषमासादयन्ति । तस्मिन्नेव च परिसमाप्ता लयं गच्छन्ति । यथा च विषयभोगे संसक्तः पुमान् यदा विषयरसमास्वादयति तदा स विषयतस्तमानन्दं नाधिगच्छति । किन्तु विषयप्रयोगेण मनसः समाधिस्थतया स्वान्तःकरणस्य च स्वाभाविकशान्तिलाभेन यो हि ब्रह्मानन्दः स्वतस्तत्र प्रतिबिम्बितो भवति तमेवानन्दं स विषयानन्दत्वेनानुभवति । तथैव श्रीमद्भगवतो भक्तिभावे निमग्नचेतसो भाग्यवतो भक्तस्य शुद्धेऽन्तःकरणे यो हि शुद्धो ब्रह्मानन्द उदेति तस्यापि सैवावस्था विज्ञेया । यतो हि—भक्तस्य पवित्रहृदयं भक्तिरसेन परिपूर्णं सत् समाहितं भूत्वा ब्रह्मानन्दभोगभाग् भवति ।

उभयोरियानेव भेदो यद्विषयानन्दभोगी जीवो ज्ञानविरहितो भवन् भगवन्तं विस्मृत्य विषयानन्दनिमग्नो भूत्वा गमागमचक्रे निपतितो वाभ्रम्यमाणोऽध ऊर्ध्वं पर्य्यटति । ज्ञानी ब्रह्मानन्दानुभवी भाग्यशाली भक्तस्तु भगवद्भावभावितो गमागमचक्रान्निर्गतः साक्षाद्भगवच्चरणसरोजभृङ्गायमाणश्चिरं तिष्ठतीति ।

विषयानन्दनिमग्नो जीवो विषयसुखेऽपि गुप्तस्य परोक्ष-ब्रह्मानन्दस्यैव कृते यतमानोऽग्रेसरो भवेच्चेत्तदा स कालवेगात्कदापि सात्त्विकस्य ब्रह्मसुखस्याप्यधिकारी भवेदेवेति निर्विवादसिद्धम् । क्रमेण सत्त्वगुणराज्यमधिष्ठाय भक्तिसागरावगाहनक्षमोऽपि भवितुमर्हतीत्यपि तस्य स्वभावसिद्धम् । फलतो रस एव जीवान् क्रमोन्नतिमार्गे अभ्युदयाधिकारिणः करोतीति सिध्यति ।

विषयानन्दभोगी जीवो यावदात्मनोऽन्तःकरणं विषयाधीनं कृत्वा तत्तुल्यमेव विषयसुखमास्वादयितुं लालायितचेतास्तिष्ठति तावदेव तस्य तद्विषयसुखं स्वात्माधीनं तं विधाय गमागमचक्रे पातयित्वा भ्रामयति । यदा तु स एव जीवः साधनराज्यपथिको भूत्वा विषयासक्तोऽपि स्वचित्तं भगवच्चरणारविन्दभृङ्गं कर्तुं समर्थो भवति तदा तस्य सा विषयसुखासक्तिरेव भगवत्सान्निध्यप्राप्तिहेतुर्जायते ।

यथाहि मिष्टान्नेन केवलं स्वात्मोदरपोषी जीव आत्मविमुख एवास्तीत्यसन्दिग्धमेव । परन्तु यदि स एव मिष्टान्नभोजी जीवो भगवद्भक्तो भवंस्तन्मिष्टान्नं भगवत्समक्षे समर्प्य भगवत्प्रसादरूपेण गृहीत्वा भक्तिरसाप्लुतो द्रवता चेतसा रोमाञ्चितः सन्नानन्देनाश्नाति । तदा तस्य भाग्यशालिनो भक्तस्य चित्ततरङ्गाणां शान्तिः श्रीपरमगुरोर्भगवतो भक्तिरससागरे एव भवति ।

अन्यतश्च भक्तिरससागरावगाहनक्षमो भाग्यवान्भक्तो यदाहि पूर्वोक्तानां सप्तानामप्यासक्तीनां मध्ये कयाऽप्येकयाप्यासक्तया स्वात्मानं भगवच्चरणारविन्द-मकरन्द-लोलुपं करोति चेत्तदैव क्रमशो भक्तिरसे सम्वर्द्धमानोऽवसाने भगवच्चरणसामीप्यभाग् भूत्वा परिसमापितसकलस्वेन्द्रियव्यापारो मुग्धो भवतीति भक्तानुभवः ।

यथा हि तरलतरङ्गिणी जगत्तारिणी भगवती भागीरथी भिन्नभिन्नेषु जनपदेषु प्रवहन्ती स्वविश्वपावनेनामृतमयेन सलिलप्रवाहेण तांस्तान्देशान् पवित्रीकुर्वती महासागरे गत्वा विश्राम्यति, तथैव भगवद्भावमूलानां सर्वेषामेव रसानां प्रवाहा भक्तहृदयस्य भिन्नभिन्नेषु प्रदेशेषु सर्पन्तः स्वामृतमयेन परमपवित्रेण भावसंघेन तांस्तान् भक्तहृदयप्रदेशान् पुनाना उन्नमयन्तोऽवसाने ब्रह्मानन्दसमुद्रे सम्मिलिताः समुज्जृम्भन्ते इति ॥ २१ ॥

तस्य रसप्रवाहस्य भगवल्लक्ष्यत्वे किं फलं भवतीत्याह—

## भक्तिर्निःश्रेयसकरी ॥ २२ ॥

भगवतो हि भक्ति र्भक्तं मुक्तिपदं प्रापयतीति सूत्रार्थः ।

कर्मोपासना-ज्ञान तपोदानप्रभृति-धर्म्माङ्गसंघानामनुष्ठानेन साधक ऐहिकामुष्मिकोभयाभ्युदयमासादयति । भगवद्भक्तितस्तु भक्तः परमानन्दमयं कैवल्यपदमेवासादयतीति भगवद्भक्तेरयं श्रेष्ठतमोऽलौकिको महिमा ।

दैवं हि जगत् कियतीमपि वृद्धिमासादयतु परन्तु गुणत्रयस्य सत्त्वरजस्तमःस्वरूपस्य सीमानं नैवोल्लंघितुमर्हति । भगवांस्तु गुणत्रयातीत इति भक्तो यदा भक्तिद्वारा गुणत्रयातीते पदे समुपसर्पति तदा मुक्तिस्तस्य करगतैव ज्ञेया । इत्यतश्चेदं विज्ञानतः सिध्यति यद् श्रीमद्भगवद्भक्तिमन्तरा यदपि किञ्चित्साधनं विद्यते तन्न मुक्तिप्रदं, किन्तु श्रीमद्भगवद्भक्तिरेवैका मुक्तिप्रदायिनीति । यतो हि गुणत्रयाश्रयणेन गुणत्रयातीतपदं नैवासादयितुं पार्य्यते । केवलं गुणत्रयातीतं नित्यमेकमद्वैतपदमेव विद्यते । यदाश्रयेण निःश्रेयसात्मिका मुक्तिरपि सुलभैव भवतीति समुपदिष्टं स्मृतिषु—

विसृज्य सर्वानन्यांश्च मामेव विश्वतो मुखम् ।
भजन्त्यनन्यया भक्त्या तान्मृत्योरतिपारये ॥
समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशो मुरारेः ।
भवाम्बुधिर्वत्सपदं परं पदं पदं पदं यद्विपदां न येषाम् ॥
इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः ।
भवन्ति वै भागवतस्य राजन् ततः परां शान्तिमुपैति साक्षात् ॥
यस्मिन्मनो लब्धपदं यदेतच्छनैः शनैर्मुञ्चति कर्मरेणून् ।
सत्त्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम् ॥

इत्थं हि भगवद्भक्तितो मुक्तिरधिगम्यते ॥ २२ ॥

अन्यासां भगवच्छक्तीनां भक्तिमाश्रित्य रसप्रवाहे किं फलं भवतीत्याह—

**ऋषि-देव-पितृणां भक्तिरभ्युदयप्रदा ॥ २३ ॥**

श्रीमद्भगवतः साक्षाच्छक्तिस्वरूपाणां नित्यर्षिदेवपितृगणानां भक्त्या भक्तोऽभ्युदयमासादयतीति सूत्रार्थः ।

श्रीभगवद्भक्तिमन्तरा तदीयानामेव भिन्नानां शक्तीनामाश्रयेण या भक्तिरातन्यते सा नैव मुक्तिप्रदायिनी भवति, किन्तु साऽभ्युदयमवश्यं वितरति । यतो हि सच्चिदानन्दात्मनो रससागरस्य तस्याद्वैतपद य महिमानं विहाय द्वैतस्य जगतः सर्वमपि पदं गुणत्रयमयमेवास्ति । ततश्च गुणत्रयात्मकानां तेषां केषामपि पदानामाश्रयेण याऽपि भक्तिरवलम्बिता स्यात्सा सर्वापि गुणत्रयातीतपदं प्रापयितुं कथं क्षमा स्यात् । किन्तु सा हि भक्तिर्भक्ताय सर्वविधमपि अभ्युदयं समर्पयितुमवश्यं क्षमत इत्यसन्दिग्धम् ।

उन्नतिर्हि द्विधा गीयते । एका ऐहलौकिकी अपरा पारलौकिकी चेति । तत्रेह धन जनसुखसम्पत्तीनां लाभः प्रथमोन्नतिर्गीयते । स्वर्गाद्युन्नतलोकेषु समेत्य दिव्यसुखोपलब्धिर्हि पारलौकिक्युन्नतिर्निगद्यते । इमे उभे अपि उन्नती ऋषिदेवपितॄणां भक्त्या अधिगम्येते इति निगदार्थः । उक्तञ्च श्रीगीतायाम्—

"यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।"
"काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ॥
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ इति ॥"

श्रुतावप्येवमेव समुदीरितम्—

एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् ॥
तन्नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥

एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति ।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥ २३॥

इदानीं हीनविभूतीरुपलक्ष्य प्रवृत्तस्य प्रवाहस्य फलमभिधत्ते—

अन्येषामवरा ॥ २४ ॥

अन्येषां भूतप्रेतपिशाच-प्रभृतीनां तथा आसुरशक्तीनां या भक्तिर्भजनम्, सा हि अवरा हीनोच्यत इति सूत्रार्थः ।

दैवं हि राज्यमतिविस्तृतं विद्यते । प्रतिब्रह्माण्डं चतुर्दश भुवनानि, तेषां चतुर्दशभागानां चतुर्थो भागोऽयमस्माकं मृत्युलोको गीयते । इमं मृत्युलोकं विहायान्ये सर्वेऽपि लोका दैवलोका एवोच्यन्ते । अधोलोकगा असुरास्तथाऽस्माकं सर्वतो भागवासिनः प्रेतपिशाचादयश्चेमे सर्वेऽपि देवयोनि–विशेषा एवाभिधीयन्ते । तत्रैषां प्रेत-पिशाच-ब्रह्मराक्षस-वैतालप्रभृतीनामासुरभावाभिमानिनां हीनदेवयोनिविशेषाणामुपासना, या तामसिकैरुपासकैस्तामसिकश्रद्धासम्पन्नैरनुष्ठीयते सैव सर्वतोऽपि हीना भक्तिरुच्यते। तत्र रुचिवैचित्र्यमेव हेतुर्यदेवं विधेष्वपि तामसिकदेवेषु श्रद्धाऽतिरेको जनानां दृश्यते ।

उन्नताधिकारिणो मानवास्तु निष्कामनया प्रवृत्त्या केवलं भगवन्तमेव सर्वात्मनाऽनन्यभावेन भजन्ते, येन ते सर्वदुर्लभं निःश्रेयसपदमेवावलम्बन्ते । मध्यमाधिकारिणो जनास्तु सकामकर्मपरायणा अभ्युदयकामनया ऋषिदेवपितनुपासते, येन ते ऐहलौकिकं पारलौकिकञ्च सुखमनुभवन्ति । उत्तरौ द्वौ मध्यमोन्नतावुपासकौ तु शोभनाधिकारिणौ निगद्येते । केवलं मध्यमाधिकारी मानवः स्वार्थान्धो विषयलोलुपो निजमलिनवासनातर्पणपरायणो भूत्वा क्षुद्रान् भूतप्रेतपिशाचादीन् समर्चयति । ततश्च सोऽन्ते—

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवेति कौन्तेय सदा तद्भावभावितः ॥"

इति भगवद्वचनानुसारं गर्हितां वासनामुद्वहन् हीनं हीनतरं वा लोकं प्रतिपद्यते । इयं हि हीनभक्ति र्भाग्यशालिभिर्भगवद्भक्तैरतिगर्हितेत्युपेक्ष्यते ॥ २४ ॥

सम्प्रति भक्तिवैशिष्ट्यं वर्णयति—

भक्त्यामृतत्वं तदास्वादादनवपातः ॥ २५ ॥

भक्त्या हि अमृतमासाद्यते तस्य आस्वादनेन च नास्ति कापि पातशङ्केति सूत्रार्थः ।

भक्त्या हि भक्तोऽमरतां विन्दति । नास्ति च तस्य कदापि स्वोन्नतपदात् प्रपातः । साधारणसुधां पीत्वा यदि देवा अमरा गीयन्ते, तर्हि परमामृतस्थानीयां भगवद्भक्तिसुधामास्वादयन्तो भाग्यवन्तः साधका अमरा भवन्तीत्यत्र कः सन्देहावसरः । रसात्मनः श्रीपरमेश्वरस्य चरणकमले ऐकात्म्येनानुरक्तो भक्तो यदा सर्वविषयवासनाविरहितो भवति, तदा परमकारुणिको भगवान् तस्योपरि स्वीयाममोघामनुग्रहशक्तिमभिषिञ्चन् स्वीयं सच्चिदानन्दमयं परमरूपं निदर्शयति । यतश्च स जननमरणात्मकात् संसार-दुःखाद्विमुक्तः परमपदमासाद्य कृतकृत्यो नन्दति । एतदेव तादृशस्य भक्तस्य कृतेऽमरत्वमुच्यते । उक्तञ्च श्रीमद्भगवद्गीतायाम्—

भक्त्या मामभिजानाति यावान् यश्चाऽस्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥

समुद्रवक्षःस्थले विहरणशीलाः प्रोत्तुङ्ग-तरङ्गतरणक्षमान्महापोतान् चालयन्तो महानाविका यथा ध्रुवतारं निरीक्षमाणा दिग्भ्रान्तिविरहिताः स्वगन्तव्य-स्थलमेवासादयन्ति, तथैवेह संसारसागरे कोटिजन्मजन्मान्तरतो विविध-चतुरशीतिलक्षयोनि मार्गेण भ्रमन्तः स्वीयां जीवन-तरणीमभिवाहयन्तो भक्ताः स्वहृदयाकाशे प्रकाशमानं ध्रुवतारानुरूपं श्रीभगवद्भक्तिरूपमखण्डं रसमास्वादयन्तः कदापि इह संसाराम्बुधौ दिग्भ्रान्तिं नाधिगच्छन्ति, नापि तया दिग्भ्रान्त्या विमोहिताः कुपथगामिनो भूत्वा अवनतिगर्ते पतन्ति । प्रत्युत उत्तरोत्तरमुन्नता एव भवन्तोऽवसाने च सच्चिदानन्दमयस्य परमात्मनः परमपदमवरोहन्ति ।

जीवो हि इन्द्रियासक्तः पतति । भगवत्सम्बन्धेन चोन्नतो भवतीति सर्वसम्मतः पक्षः । अस्य दृश्यमयस्य प्रपञ्चस्यैकतः पार्श्वे इन्द्रियाणि, विषयाश्च सन्ति, अपरतश्च परमपदाधिष्ठाता परमेश्वर इति । एवञ्च सति साधको यदेन्द्रियविमुखो भवन् जगदात्मनः श्रीभगवतः सम्मुखीनो भवति तदा स कस्याप्यधिकारस्यान्तर्गतो भक्तो भवेत् पुनस्तत्पदान्नापसरति । नापि तस्य कदाचिदपि ततोऽधःपातो भवति । यतो हि यस्य दृष्टिरुन्नतोर्ध्वगामिनी देदीप्यते, तस्य पतनमसम्भावि । कस्याप्यधिकारस्यान्तःपाती भक्तो भगवद्भक्तिमाश्रित्य कीदृग्भवतीति स्मृतिषूपपादितम् । तथाहि—

संकीर्त्यमानो भगवाननन्तः श्रुताऽनुभावो व्यसनं हि पुंसाम् ।
प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः ॥
अविस्मृतिः कृष्णपदाऽरविन्दयोः क्षिणोत्यभद्राणि शमं तनोति च ।

देशसमाजगतान्दोलनादि देशे पुरुषे वा समेधते। यदा च श्रीभगवत्याः प्रसादात्सत्त्वगुणसमृद्धिर्भवति तदा सर्वत्रैव परस्परं सौहार्दवृद्धिः, देशे समाजे वा सज्ज्ञानसमृद्धिः सुखवृद्धिः शान्तिश्च जायते। इत्यादि विज्ञानरहस्यमधिकृत्यैव भगवत्या महामायाया महाकाली, महालक्ष्मी, महासरस्वतीति स्वरूपत्रयविवरणं मार्कण्डेयपुराणान्तर्गतसप्तशतीस्तवे विरचितं विद्यते।

तत्र हि प्रथमचरिते महाकाली देवता, अग्निस्तत्त्वम्, ऋग्वेदस्वरूपमित्युच्यते। मध्यमचरिते च महालक्ष्मी देवता, वायुस्तत्त्वं, यजुर्वेदस्वरूपमित्यभिधीयते। उत्तमचरिते च महासरस्वती देवता, सूर्य्यस्तत्त्वम्, सामवेदस्वरूपमित्याख्यायते।

पर्य्यालोचनयैवं हि ज्ञायतेऽनेनोपनिबन्धेन यद्भगवत्यास्तमोमयी अज्ञानबहुला मोहमयी संहारात्मिका शक्तिर्महाकालीति शब्द्यते। या च प्रथमचरिते वर्णिता भगवतो विष्णो र्निद्राव्याजेन। राज्ञश्च सुरथस्य ममत्वाकृष्टचेतसो निजकोशबलादिचिन्तया, समाधिनाम्नो वैश्यस्य च सशोकदुर्मनसः स्वदुष्टबन्धुजनकुशलाकुशलादिवृत्ताज्ञानाकुलतया। अन्ते च—

"एवं स्तुता तदा देवी तामसी तत्र वेधसा।
विष्णोः प्रबोधनार्थाय निहन्तुं मधुकैटभौ॥"

इति स्पष्टमेव "तामसी"-शब्दोपादानं विद्यते। तस्या एव तमोमय्याः श्रीनिद्रादेव्या व्यपगमे सति भगवता विष्णुना जगद्रक्षा कृता, तमोमययोरेव मधुकैटभयोः सृष्टिविघातकयोः संहरणं कृतमित्यादिना सूच्यते यदियं शक्तिः स्वयन्तु किञ्चिन्न करोति प्रत्युत तमोबाहुल्याद् आवरणकरी एव विद्यते। अस्याः कृपया अनया विमुक्त एव पुरुषः किञ्चित्कर्तुं प्रभवति। एवमग्नितत्त्वमपि पार्थिवपदार्थाश्रयेण भूस्वरूपत्वात्तमोबहुलमेव तेजः। ऋग्वेदश्च सांसारिक-प्रथमावस्थाप्रतिपादकतया सृष्टेरनुद्बुद्धावस्था-पदार्थसम्भृततया च भगवत्या आदिशक्तेः प्रथममेव स्वरूपम्। अन्यच्च महाव्याहृतिषु प्रथमा व्याहृतिः भूरूपैवास्ति या च ऋग्वेदस्यैव प्रतीकम्, अग्नितत्त्वमपि तथैव। "भूरग्नये स्वाहा इदमग्नये इदं न मम" इत्यत्र प्रथमव्याहृत्या सहाग्नेरेव सम्बन्धः सूच्यते।

द्वितीये मध्यमचरिते च भगवत्या रजोमय्या महालक्ष्मी-स्वरूपाया एव प्रतिपादनं विद्यते। स्वयं भगवत्या युद्धादिष्वतिप्रौढित्वप्रदर्शनेन, देवादीनां दीनां दशां दृष्ट्वा महतोद्योगेन तेषां तदापन्निवारणेन, संघशक्त्यादिसम्पादनेन, बहुशक्तिसंग्रहणादिना अमितपराक्रमप्रभावादिवर्णनया, रजोबहुलायाः कर्तृ-

त्वशक्तेः स्फुटमेवावबोधो भवति। अत्र च यजुर्वेदस्वरूपमाख्यायते। यतो हि यजुर्वेदे एव कर्मकाण्डबाहुल्यम्। तस्योपवेदोऽपि धनुर्वेद एव युद्धशिक्षासंभृत आम्नायते। अतश्च तस्य वेदस्य भगवत्या रजोगुण-प्रतिकृति-स्वरूपत्वं सिध्यत्येव। महाव्याहृतिषु द्वितीया व्याहृतिरपि यजुर्वेदस्यैव प्रतीकम्। तत्र तत्त्वमपि वायुरेव। यतो हि "भुवर्वायवे स्वाहा इदं वायवे इदं न मम" इति गीयते। एवं च द्वितीय-व्याहृते र्वायुस्वरूपत्वादस्य चरितस्यापि वायुतत्त्वाधिष्ठितत्वाद्द्वितीयव्याहृतिरूपत्वमपि सिध्यति। कर्तृत्वप्रधानो रजोबहुल एव वायुदेव आम्नायते।

उत्तमचरितेऽपि सरस्वतीदेवी सत्त्वप्रधाना, ज्ञानमयी, सत्त्वधर्मस्य सद्सद्विवेकात्मकनीरक्षीरभिदाज्ञानस्योर्ध्वगतेश्चाश्रये हंसवाहने उपवेशनकर्त्री, शुक्लवर्णा—

'या देवी सर्वभूतेषु बुद्धिरूपेण संस्तुता'

'विद्याः समस्तास्तव देवि भेदाः' इत्यादिरूपेण स्तुता दृश्यते। स्वयञ्चाविर्भूय—

एभिस्तवैश्च मां नित्यं स्तोष्यते यः समाहितः।
तस्याहं सकलां बाधां शमयिष्याम्यसंशयम्॥

इत्यादि स्वस्वरूपं प्रकटयन्ती देवेभ्य ऋषिभ्यश्च सम्यग्व्याख्यानरूपेण सत्त्वगुणकृत्यं वाग्वैदुष्यसूचकमुपदेशमेव ददाना दृश्यते। अवसाने च वैश्यवर्याय —

"वैश्यवर्य्य! त्वया यश्च वरोऽस्मत्तोऽभिवाञ्छितः।
तं प्रयच्छामि संसिध्यै तव ज्ञानं भविष्यति॥"

इति सत्त्वप्रधानया तया ज्ञानदानमपि कृतं दृश्यते। अत्र च सामवेदस्वरूपं गीयते। तस्मिन्नपि वेदे देवस्तवनात्मकः सत्त्वगुणद्योतक एव भाव उपलभ्यते। तस्योपवेदोऽपि गान्धर्ववेदो विद्यते। यश्च सरस्वतीदेव्या वीणावादिन्या अधिकः प्रिय एव। तत्त्वमपि सत्त्वबहुलो ज्योतिर्मयः सूर्य्यदेव एवास्मिन् चरिते गीयते। यश्च महाव्याहृतिषु चरमव्याहृति-'स्वः'-स्वरूप आम्नायते। 'स्वः सूर्य्याय स्वाहा इदं सूर्य्याय इदं न ममेति" इत्थं महाकाली-महालक्ष्मी-महासरस्वतीरूपायै, तमोरजःसत्त्वगुणायै, ऋग्वेदयजुर्वेदसामवेदस्वरूपायै अग्निवायुसूर्य्यात्मिकायै, भूर्भुवःस्वः स्वरूपायै, श्रीभगवत्यै प्रतिवर्षं विजयदशम्यां ये आर्य्याः सर्वथाऽप्यात्मानं समर्पयन्तो निजशक्तिस्वाधिकारानुसारं श्रद्धयोपहारं ददति चेत्कथं तेषामिह न स्यात्सर्वथापि त्रिविधाभ्युदयः। यश्च ऋषिणापि तत्रैव वर्णितः। अन्ते च—

"आराधिता सैव नृणां भोगस्वर्गापवर्गदा"

इति भोग स्वर्ग मोक्ष-दातृत्वेन भगवत्याः त्रैविध्यं वर्णयता ऋषिणा प्रकटितोऽयमुपरिष्टादाशयः ।

अपरञ्च ऋग्यजुःसामवेद-प्रतीकत्वेन भूर्भुवः स्वः स्वरूपतया च सप्तशतीपाठस्य वेदपाठतुल्यत्वं गायत्रीजपसाम्यञ्चापि सिध्यति ।

अतश्चाहमद्य सर्वानपि भारतीयान् विशेषतो विदुषो विद्यार्थिनश्चाऽभ्यर्थये यत्ते श्रीजगज्जनन्या आराधनया स्वतमोमयपरस्परद्वेषाऽहङ्कारविभेदं व्यपाकृत्य रजोमयं स्वशक्तिसञ्चयं संघशक्तिसम्पादनंपरस्परैक्याधानादिकं विदधतः सत्वमयं ज्ञानं निजधर्मदेश-समाज स्वकुलोन्नतिञ्च सम्पादयन्तो भोग-स्वर्ग-मोक्षभाजो भवन्तु । निद्राकालोऽतिक्रान्तः, नास्ति समयोऽयमधुना तमोमयः । साम्प्रतं रजोबहुलानां मानवानां सम्पर्केण भारतस्यापि विराट्शक्तौ रजस एवोत्कर्षो दृश्यते । सर्वेऽपि स्वस्वबुद्ध्यनुरूपं कर्मसु प्रवृत्ताश्चेष्टमाना एव दृश्यन्ते । केवलमस्माकं संस्कृताध्यायिसमुदाय एवौदास्यमोहाज्ञानालस्याद्यभिभूत आलक्ष्यते । तस्यकृतेवोत्तिष्ठन्तु । युगोऽयं रजोबहुलो जातः । 'सूर्य्योदयो'ऽपि भवतो बोधयति यद् गता मोहमयी तमोबहुला रात्रिः सुप्रभातं कृत्वा 'सूर्य्योदयो' जातः । इदानीम् भवन्तो भगवत्या प्रसादाद्विजयादशमीं सफलां कर्तुं स्वीयञ्च विजयं विधातुम् सनातनधर्मस्य रक्षां कर्तुं वर्त्तमाने समये वृद्धिमुपगच्छन्तम् आसुरभावं विनाशयितुं च संघशक्ति-सम्पादनपुरस्सरं सावधाना भवन्तु तदैवास्माकं विजयादशमी सफला भविष्यतीति ।*

"उत्तिष्ठन्तु जाग्रतु प्राप्य वरान्निबोधन्तु"

---

* एवं दुर्गासप्तशतीपुस्तकं हिन्दीभाषाटीकाविभूषितं तथा पुराणरहस्य-नामकं संस्कृत-पुस्तकमपि-संस्कृतज्ञानां कृते प्रकाशितं विद्यते । तत्र सर्वोऽपि संस्कृत-व्याख्यासहित उपर्युक्त-विज्ञानाभिप्राय उपन्यस्तोऽस्ति तदध्ययनेन जिज्ञासूनां महान् लाभः स्यात् । मूल्यं क्रमशः १) १॥) रु० । मैनेजर—निगमागम बुकडिपो भारतधर्मसिण्डिकेट, स्टेशनरोड, बनारसकैन्ट, इति संकेतेन मिलति । (सं०)

## काश्यां छात्रावासप्रयोजनम्।

विदितमेवास्ति काशीवासिनां विदुषां विद्यार्थिनां धार्मिकाणाञ्च बहिः-स्थानामिह काश्यां तीर्थयात्रोद्देशेन यदा कदाचन समागतानां, यदिह संस्कृतविद्यार्थिनां स्थानाभावान्निवासार्थं कियान् कीदृग्वा क्लेशो भवतीति। प्रथमतस्तु काश्यां संकीर्णाः प्रतोल्यः संकीर्णानि गृहाणि संकीर्णमेव मार्गादिकं सर्वमेव स्थानं संकीर्णं विद्यते।

तत्रापि नास्ति काचन समीचीना व्यवस्था संस्कृतच्छात्राणाम्। ते हि कियतां धर्मशीलानां स्वनामधन्यानां धनिनां पाठशालीय-च्छात्रावासे यथा-कथमपि स्थानं लभन्ते। परन्तु प्रायः विद्यार्थिनो निवासस्थानाभावादितस्तत आहिण्डमानाः क्वापि जीर्णदेवालये, तापसानां वा मठे, कुत्रचनापणे वा स्थित्वा रात्रिं यापयन्ति। तत्रापि च द्रव्याभावात् मृत्तैलेन दीपमन्धकारबहुलमेव प्रज्वाल्य पठन्तो रात्रौ नेत्राभ्यां सह स्वास्थ्यमपि विनाशयन्ति। याः संस्कृत-पाठशालाः सन्ति तासामध्यक्षा अपि केवलं परीक्षार्थिनः छात्रान् परीक्षायन्त्रे प्रवेश्य ततस्तानुत्तीर्णान् विधाय स्वनामप्रसिद्धिमेवाभिलषन्ति। न ते स्वपाठ-शालीयानां तद्व्यतिरिक्तानां वा अन्येषां छात्राणां कृते निवासादिव्यवस्थां विदधति। नापि तेषां सदाचारादिशिक्षाव्यवस्थां कुर्वन्ति। न च देशकाला-त्मज्ञानादिसम्पत्तिं तेभ्यः प्रयच्छन्ति। यतश्च ते साधनाभावात् धर्मज्ञानशून्या देशकालात्मज्ञानविरहिता एव भवन्ति। सर्वप्रथमन्तु स्थानप्रबन्धाभावात् ते स्वास्थ्यं स्वीयं विनाशयन्ति। ततश्च सदाचारादिशिक्षाविहीनत्वात् किमपि जगति कर्तुं न प्रभवन्ति।

किं बहुवक्तव्येन तेषां कथा अतिविस्तृता विद्यते, अस्माकमत्र वक्तव्य-मियदेवास्ति यदेवंभूतानां सर्वतोऽसहायानां, येषां कस्यामपि पाठशालायां प्रवेशो नास्ति तेषां संस्कृतच्छात्राणां, क्वापि विद्यालये पाठशालायां वा अध्येतॄणां, स्वतन्त्रतया वाऽधीयानानाम्, अन्यभाषाध्येतॄणामपि छात्राणां कृते इह काश्यां निवासार्थं छात्रावासस्यावश्यकता विद्यते। यत्र ते स्थित्वा कस्यचन सदाचारशीलसम्पन्नस्य विदुषो निरीक्षकस्य तत्त्वावधाने सदाचा-राणां स्वास्थ्यरक्षायाः धर्मस्य च ज्ञानं कुर्युः, यतश्च ते योग्या मानवा भवेयुः। शिक्षां कामपि संस्कृतस्य इंग्लिशभाषाया वा प्राप्नुयुरिति। एकस्य

द्वयोर्वा छात्रनिवासयोः कृते तु वक्तव्यमेव नास्ति साम्प्रतं छात्रनिवासमेकं कोऽपि सत्यधर्मा श्रद्धालुरीभ्यो निर्मापयेत्तस्य तद्धनं सत्कर्मणि संलग्नं स्यादित्येवास्माभिर्वक्तुं शक्यते । दान- विधानं ब्रुवता श्रीकृष्णेन चोक्तम्—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे
देशे काले च पात्रे च तद्दानं सात्त्विकं विदुः ।

देशकालपात्रदत्तमेव दानं सात्त्विकं भवति । अतश्चेदं छात्रनिवासार्थं दत्तं धनम् इह काश्यां सर्वथा छात्रनिवासप्रयोजनवत्यां सर्वथाऽपेक्षितं छात्रावासं प्रयोजनं पूरयिष्यतीति समुचितो देशः । इदानीं काले बहवः छात्रास्तदभावा-न्म्रियन्ते स्वास्थ्यं विनाशयन्ति सदाचारविरहिता भवन्ति । अतश्च कालो-ऽप्ययं समुचितः । तत्र ते एव छात्रा निवत्स्यन्ति येषां च तदावश्यकताऽस्ति ये च तदभावात्सर्वतोऽपि स्वजीवनमेव विनाशयन्ति, इति पात्रमपि तद्यो-ग्यमेवेति सर्वथेदं दानं सात्त्विकं भविष्यति ।

इत्थं सात्त्विकं दानं कर्तुमेव वयं निवेदयामः । यदि कस्यचन धनिनो धर्मकामस्य चेतसि श्रद्धोदेति चेत् सोऽवश्यं सम्प्रति काश्यामेवं छात्रनिवासं निर्मापयतु । येन तस्यापि सत्काले सद्देशे सत्पात्रे द्रव्यव्ययात् सद्धर्मो भवेत् । सद्देशस्य सत्कालस्य सत्पात्राणाञ्च पूर्त्या स भगवान् सर्वनियन्ता परमेश्वरोऽपि सन्तुष्टः स्यादिति ।

---

## श्रीगोस्वामिनां गोवर्द्धनलालमहाराजानां गोलोकवासः ।

उदयपुरराज्यान्तर्गत-नाथद्वारा-शुद्धाद्वैतसम्प्रदायप्रधानाचार्याणामेषा-मकस्माद् देह-विसर्गेण धार्मिकस्य जगतो विशेषतो शुद्धाद्वैतसम्प्रदा-यस्य महती क्षतिः समजनि । इमे गोस्वामिमहाभागा आचारेण विद्यया धर्मप्रचारेण दानशीलतया च परां प्रसिद्धिं गता आसन् । एतेषां भव्यां मूर्तिं विलोक्य धर्मानुष्ठानप्रचारदृढतां च विलोक्य को हि तस्मिन् महतीं श्रद्धां दर्शनमात्रेणैव न चकार । अपि तु सर्वोऽपि लोकःतच्छिष्योऽशिष्यो वा तत्पुरः समागतश्चेद्दर्शनेनैव तेषां तस्य हृदि समुज्ज्वला धर्मे श्रद्धा समुदेति

स्म । तेषां जीवद्दशायां शुद्धाद्वैतसम्प्रदायः प्रफुल्लित इवासीत् । धर्मप्रचारेण तु ते स्वशिष्यवर्गे धर्मस्रोतोऽहर्निशं प्रवाहयन्ति स्म । तेषां धार्मिकप्रभावेण हिन्दूसूर्य्यस्य महाराणामहोदयस्य उदयपुराधीशस्य च प्रबलप्रतापेन तस्मिन् राज्येऽधर्मस्य नामापि न श्रूयते । किं बहुना हिन्दुसूर्यसाम्राज्याधीशस्य तस्य महाराजस्य राज्येऽधुनापि—

"पदैश्चतुर्भिः सुकृते स्थिरीकृते,
कलाविदानीं तप आचरेन्न कः
भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन् ।
दधात्यधर्मोऽपि कृशस्तपस्विताम्"

इति नैषधीयं पद्यमेव द्वित्राणि पदानि परिवर्त्य पठितुमुचितं प्रतिभाति ।

गोलोकवासिनां माननीयगोस्वामिमहोदयानामौदार्य्यन्तु अवर्णनीयमासीत् । इह हि वाराणस्यां पिशाचमोचनतीर्थपार्श्वगा निजभूमिरूपाः सम्पत्तयस्तै धर्मार्थं श्रीमहामण्डलाधीनाः कृताः सन्ति । एकं दानपत्रमपि वार्षिकसाहाय्यार्थं तैः लिखितमास्ते । यतश्च धर्मप्रचारे महत्साहाय्यं भविष्यति । एवमेव तै धर्मार्थं विद्यालयार्थं स्वसम्प्रदायसमृध्यर्थं च मुक्तहस्तं वित्तानि वितीर्णानि । तैः कृता धर्मसेवाः कृतज्ञा भारतीया स्तच्छिष्याश्च नैव कदापि विस्मरिष्यन्ति ।

वयमिदानीं गोस्वामिमहोदयानां परलोकवासेन विदीर्णहृदयास्तदीयात्मने चिरशान्तिं तद्बन्धुभ्यस्तच्छिष्येभ्यश्च धैर्य्यदानं श्रीमद्भगवतो विश्वनाथादभ्यर्थयामहे । एवं परलोकप्रस्थितेभ्यः सुगृहीतनामभ्यस्तेभ्यो गोस्वामिचरणेभ्यो वयं स्वश्रद्धाञ्जलिं समर्पयन्तः शोकावेगाद् विरमामः । आशास्महे च तदीय-परम्परागताचार्य्यमर्य्यादा संरक्षिता सम्बर्द्धिता च भविष्यतीति ।

---

## डाक्टर एनीविसेन्ट महोदयायाः परलोकगमनम् ।

अनया विश्वविख्यातया थिओसफिधर्म्म-प्रचारिकया वृटिशमहिलया स्वजन्मतः षडशीतितमेऽब्दे देहत्यागं कृतवत्या जगति क एवम्भूतो विद्वान् विद्यते यः परिचयं न बिभ्रति । इयं हि पाश्चात्यदेशोद्भवापि इह भारते वर्षे १८६३ रामाङ्कवसुचन्द्रमितेऽब्दे समागत्य तत आरभ्यानवरतम्

स्वमृत्युदिवसावधि, याः सेवा अस्य देशस्य हिन्दुधर्मस्य च कृतवती ता भारतीयैः कृतज्ञतरै रविस्मरणीया एव सन्ति। इयं हि इह देशे समागत्य हिन्दू-कालेजप्रभृतिविद्यासंस्थाः संस्थाप्य विद्योन्नतिं चकार। थिओसफी-मतप्रचारेण पाश्चात्यशिक्षा-विदूषितान्तःकरणानां मानवानामन्तःकरण-मुज्ज्वलञ्चकार। स्वयञ्च हिन्दूधर्मेषु श्रद्धां विधायास्य धर्मस्य सर्वत्र-देशे विजयवैजयन्तीमन्तस्तलं यावन्निचखान। याः सेवा अनया महाभागया अस्य देशस्य कृता विद्यन्ते। तासां सर्वासां गणनान्तु इतिहासविदः करिष्यन्ति। वयन्तु स्थानाभावात् स्वल्पमेवोक्त्वा विरमामः। यद्यपि श्रीहर्षेण एवम्भूतानां विशिष्टमहामहिम-शालिनां जीवानां कृते अन्यथैवोक्तम्। तथा हि—

"वाग्जन्मवैफल्यमसह्यशल्यं गुणाद्भुते वस्तुनि मौनिता चेत्
खलत्वमल्पीयसि जल्पिते तु तदस्तु बन्दीभ्रमभूमितैव।"

अस्तु, इयं हि हिन्दूधर्मे ईदृशीं दृढामात्मनः श्रद्धां निहितवती आसीद्-यन्मरणकाले ममास्थिनिर्वापः-गङ्गायामवश्यं स्याद् इति स्वशिष्यानादिदेश। तद-नुसारमेवेह गङ्गायां दशाश्वमेधघट्टे महता समारम्भेणास्थिनिर्वापं कृतवद्भिः काशिस्थैर्वैदेशिकैश्च स्वीयः श्रद्धाञ्जलिः तस्यै महामहिमशालिन्यै समर्पितः। तदीयः पुनर्जन्मविषयको विश्वासस्तु डाक्टर श्रीभगवानदासमहोदयेनैव सभा-पतिपदात् काश्यां स्वव्याख्यानावसरे प्रकटितोऽस्ति "यत् सा महाभागा मरणकाले स्वशिष्यान् प्रोवाच यत् पुनरिह भारते जन्म गृहीत्वाऽवशिष्टाः सेवाः पूरयिष्यामीति।" मद्विषये च कथितवती "यदयं मम साहाय्यं गतजन्मनि कृत-वान्। अस्मिन् जन्मनि कृतवान् अग्रे आगामिन्यपि जन्मनि करिष्यति इति" एतेन ज्ञायते यत् पुनर्जन्मविषये तस्याः कीदृग् दृढो विश्वास आसीत्।

सा हि महाभागा गीतापुस्तकस्यांग्लभाषायामनुवादं कृत्वा सर्वत्र पाश्चात्यदेशेऽपि गीतोक्तधर्मस्य प्रचारं कृतवती। रुद्राक्षमालाधारणम् अन्ते च सनातनधर्मपद्धत्या स्वदेहसंस्कारं कर्तुमादिष्टवतीत्यादि तदीयो विश्वासो ऽस्माकं वैदिकधर्मस्य मर्यादामक्षुण्णां पाश्चात्यजनेष्वतिदृढां-संस्थापयति। इत्थं सा म्रियमाणापि भारतीयधर्मोपकारं कुर्वती एवास्ति। किं बहुना वयं भारतीय-सनातनधर्मप्रतिनिधिभूताया अस्या विराट्-संस्थायाः सकाशात् अस्या महाभागाया सर्वमपि उपकारं स्मरन्तःकृतवेदिनः परमेश्वरं श्रीविश्वनाथमभ्यर्थयामहे यदस्यै चिरशान्तिं तच्छिष्येभ्यश्च तद्वियोगजं दुःखं सोढुं धैर्यं च वितरतु इति।

# स्वास्थ्यनियमदिग्दर्शनम्।

लेखकः—लक्ष्मणदत्तवर्म्मा शास्त्री शुजाबादवास्तव्यः।

इह निरन्तरप्रवृत्तिमति कार्य्यक्षेत्रे संसारे लघोर्लघीयानपि जन्तुः प्रवृत्तिशून्यो नावलोक्यते। किन्तु सर्व एव देहभृतो यस्मिन् कस्मिन्नपि कर्मणि प्रवृत्तास्तत्सिषाधयिषव एवाहर्निशं कृतोद्योगा वरीवृत्यन्ते। तर्हि किं, सर्वेषामेकमेवाभीष्टम्? आहोस्विन्मिथो भिन्नं सर्वश्चित्? इति संजाते विमर्शे सम्यगनुसन्धीयत एतत्-यदिह मिथो भिन्नान्यप्यभीष्टानि चतुर्वर्गेऽन्तर्भवन्ति। नात्र चतुवर्गफलाद्भिन्नं किमपि कामनाजातं दृष्टिपथमवतरति।

चतुर्वर्गफलप्राप्तिर्न स्वतन्त्रा अपि तूद्योगाधीना। उद्योगश्च नर्ते स्वास्थ्यात्-अतश्चोक्तमपि महर्षिणा चरकेण स्वसंहितायाम्—

"धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्।" (च० सू० १।१५)

आयुः पालनं प्रकृतम्—तद् द्विविधम्-स्वस्थवृत्तमातुरवृत्तञ्च। तत्र माङ्गल्यात् स्वल्पवक्तव्यत्वादातुरोपयोगित्वाच्च स्वस्थवृत्तमेवेहोच्यते।—किन्नाम स्वास्थ्यं, सुखेन संसारयात्रामतिवाहयितुं कथञ्च तल्लभ्येत?=सुष्ठु निर्विकारत्वेनावतिष्ठत इति स्वस्थस्तस्य भावः स्वास्थ्यम्—उद्वेजकधातुवैषम्यविरहितत्वमित्यर्थः। यथा च "रोगास्तु दोषवैषम्यं दोषसाम्यमरोगता" इत्यायुर्वेदविपश्चिता वृद्धवाग्भटेनाभाणि। वातादीनां दोषाणां स्वप्रमाणादेकस्य द्वयोस्त्रयाणां वा वृद्धिः क्षयो वा रुजाकरत्वाद्रोग एव। वैषम्यं विषमता, स्वरूपाच्च्यावः। ततः कार्यकारणयोरभेदेन पठितो रोग इति। दोषाणां साम्यं स्वरूपादप्रच्युतिररोगता आरोग्यं स्वास्थ्यमिति यावत्। तत्र तयो रोगारोग्ययो रोगा द्विधा निजागन्तुभेदेन। निजा वातपित्तश्लेष्मजन्मानः। आगन्तवो बाह्यहेतवः। अनयोरियान्विशेषः—निजे रोगे वातादयः पूर्वं वैषम्यं गत्वा पश्चाद्व्यथामभिनिर्वर्तयन्ति। आगन्तवः पुनः व्यथापूर्वमेवोत्पद्यन्ते; अनन्तरं तत्र वातादयः कुप्यन्तीति। अनेनोभयस्य निजागन्तुभेदभिन्नस्य व्याधेश्चेतः सन्तापकत्वं बोद्धव्यम्। दोषलक्षणञ्च—"प्रकृत्यारम्भकत्वे सति दुष्टिकर्तृत्वं दोषत्वमिति" विदुषा विजयरक्षितेनेत्थमुपदिष्टम्। तत्र दोषा वातपित्तकफाभिधा भवन्ति। इम एव दोषा धारणाद्धातवो भवन्ति मलिनीकारणाच्च मला इति।

यथा चोक्तमप्यात्रेयेण स्वसंहितायाम्-

"विसर्गादानविक्षेपैः सोमसूर्यानिला यथा

धारयन्ति जगद्देहं कफपित्तानिलास्तथा" ॥ श्रा० मं० अ० ८।

एवञ्च यथा जगद्धारणाय सोमसूर्यानिला अवश्यमपेक्षितास्तथैव शरीरायापि--कफाद्यभिधानास्त्रयो दोषा अपेक्ष्यन्त एव। स्वास्थ्यं जिज्ञासमानानां कृते दोषज्ञानमावश्यकमिति कृत्वा दोषविषये समासतो निर्दिष्टम्, स्वास्थ्यलक्षणञ्च यथा सुश्रुते--

"समदोषः समाग्निश्च समधातुमलक्रियः
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते" ॥

तच्च स्वास्थ्यमुभयथा परिपाल्यते, विशुद्धाहाराचाराभ्यां सदाक्षीयमाण-शरीर-पोषणेन। आचारशब्देन विहारादिकं गृह्यते। विहारश्चोपदिश्यते—

ब्राह्मे मुहूर्त्ते उत्थाय कृतशौचविधिर्दन्तधावनविधिञ्च निर्वर्त्य व्यायामाय वायुसेवनाय च बहिर्निर्गच्छेत्। प्रातः शुद्धवायोः सेवनेन फुप्फुसौ बलिष्ठौ भवतः, येन च रक्तशुद्धिस्सम्यक्तया जायते, रक्तेनैव देहो धार्य्यते-शक्तिमांश्च जायते देहभृत्। व्यायामेन च देहलाघवं कर्मसामर्थ्यमङ्गदार्ढ्यं विभक्तघनगात्रत्वञ्चोपजायते, मेदश्च क्षीयते। तच्च निजबलार्द्धपरिमाणेन सम्यगाहुर्विचक्षणाः। अतिहीनयोगौ हेयौ। यतो हि तौ हानिकरौ स्मृतौ। ततोऽभ्यङ्गं विधायाग्निसन्दीपनं देहसंशुद्धिकरञ्च स्नानमुपाचरेत्। अनन्तरं शुद्धबुद्धमुक्तस्वभावं, सर्वव्यापिनं, सर्वशक्तिमन्तं जगदीश्वरं परमात्मानं ध्यायेत्ततो होमञ्च कुर्य्यात्। ततश्चाहारादिकं नियमेनानुतिष्ठेत्। यतोह्युक्तमपि-"आहारवैषम्यादस्वास्थ्यम्" इति। अतो बुभुक्षायां सत्यां रोचकं पौष्टिकञ्चाऽग्निमनुसृत्य भुञ्जीत। उक्तञ्च—

"क्षुत्सम्भवति पक्वेषु रसदोषमलेषु च।
काले वा यदि वाऽकाले सोऽन्नकाल उदाहृतः॥"

उदरस्य द्वावंशौ भोजनेनैकञ्चांशं जलेन प्रपूरयेच्चतुर्थमवशेषयेत्। "उष्णमश्नीयात्स्निग्धमश्नीयान्मात्रावदश्नीयाज्जीर्णेऽश्नीयाद्वीर्याविरुद्धमश्नीयादिष्टदेशेऽश्नीयान्नातिद्रुतमश्नीयान्नातिविलम्बितमश्नीयादजल्पन्नहसंस्तन्मना भुञ्जीताऽऽत्मानमभिसमीक्ष्य भुञ्जीत सम्यक्"। इत्यादिकमपि सम्यङ्निर्दिष्टं भोजनविधाने तन्त्रकृद्भिः स्वस्वतन्त्रेषु। एवमेव विशुद्धाहाराचाराभ्यां क्षीयमाणशरीरपुष्टिर्जायते येन च स्वास्थ्यमुपैति।

प्रत्यवायहेतुपरिहारेण च स्वास्थ्यम्, प्रत्यवायहेतवो रोगाः। रोगा हि खलु तपस्योपवासाध्ययनब्रह्मचर्यव्रतायुषां देहिनां प्रत्यवायभूतास्तत्परिहरणं नाम स्वास्थ्यम्।

को नाम रोगः कथञ्च तन्निवृत्तिः—

कालार्थकर्मणां योगो हीनमिथ्याऽतिमात्रकः।
सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम्॥"

वाग्भट सू० १। १६

कालः शीतोष्णवर्षस्वरूपस्त्रिविधः। कालस्य हीनयोगः स्वरूपहानिर्यथा—हीनशीतता, हीनोष्णता, हीनवर्षता हीनयोगः। कालस्य मिथ्यायोग-स्वरूपाद्वैपरीत्यं यथा—शीतकालावसरेऽत्यौष्ण्यमुष्णकालावसरे शीतं, वर्षा-कालेऽवृष्टिर्मिथ्यायोगे। अतियोगः स्वरूपातिशयः, यथा—शीतेऽतिशैत्यमुष्ण-कालेऽत्यौष्ण्यं वर्षाकालेऽतिवर्षणमतियोगे। अर्थाः शब्द-स्पर्श-रूप-रस-गन्धाः क्षित्यप्तेजोमरुद्व्योम्नां गुणाः, अर्थानां स्वेन स्वेनार्थेनेन्द्रियस्य हीनं संयोगो हीनयोगः। पुरुषानभिमतपदार्थजातेनेन्द्रियस्य योगो मिथ्यायोगः। अत्यन्तसं-योगोऽतियोगः। कर्म्म क्रिया, कायवाङ्मनश्चेष्टा, कायवाङ्मनसां हीन-प्रवृत्तिर्हीनयोगः। वेगोदीरणादिकं साभियुक्तभाषणादिकं रागद्वेषादिकं च यथा-स्वमुत्तरत्र वक्ष्यमाणं मिथ्यायोगः। अतिप्रवृत्तिरतियोगः; इति प्रत्येकं योगत्रिकं रोगैककारणम्। कालार्थकर्मणां सम्यग्योगश्चारोग्यैककारणम्, यथा दीपपरिपालनं स्नेहवर्तिदानात् पोषणेन क्रियते तथा शलभवातादि—निर्वाप-कहेतुपरिहारेण च। शरीरप्रत्यवायहेतुश्च द्विविधः, बुद्धिदोषाद्विषमशरीर-न्यासादिर्वातादिकारकः। दुष्परिहरश्च कालविशेषः स्वभावादिह हेमन्तादिः कफचयादिकारकः। शरीरप्रत्यवायहेतू रोगः।

रोगनिदानञ्च सन्निकृष्टविप्रकृष्टभेदेन द्विधा भिद्यते। कुपिता वातादयो ज्वरादिकान्रोगान् प्रकटयन्तीति सन्निकृष्टकारणम्। विप्रकृष्टश्च यथा—हेमन्ते निचितः श्लेष्मा वसन्ते कफरोगकृत्। स्वास्थ्यसंरक्षणाय संचयप्रकोपकाला ववश्यं ज्ञेयाविति कृत्वा समासतो वर्ण्यते—वर्षासु संचितं पित्तं शरदि प्रकुप्यति, हेमन्ते निचितः श्लेष्मा वसन्ते कफरोगकृत्। ग्रीष्मे सञ्चितो वातः प्रावृषि प्रकुप्यति। इत्येवं सञ्चितानां दोषाणां प्रकोपकाले निर्हरणं कर्तव्यम्। तत्र पित्तसंशोधनं मार्गशीर्षे; कफनिर्हरणं चैत्रे, वातस्य श्रावणे, एवमृतुचर्यामनु-तिष्ठेत्। यतो ह्यकस्माद्दृतु-परिवर्तनकाले रोगादयो जायन्ते।

ऋतवः षड्वर्षाशरदादय स्तेषु चर्या चरणमिति तथाभूतां, (ऋतुवि-शेषवशाच्चाहार-विहार-सेवन-प्रतिपादनार्थमृतुचर्य्याया आरम्भ आवश्यक-स्तथापि विस्तर-भयान्नारभ्यते) जानीयात्। समासेन तावदयमाचारः पूर्वोक्तः। यं समाचरन्नायुरादीन् प्राप्नोति। तेनैव सर्वेषामभीष्टा धर्म्मार्थकाममोक्षा लब्धुं शक्याः। अतस्तदीप्सुभिरुपर्युक्तनियमाः सम्यगध्येयाः। इति शम्।

## काश्यां भागवतयज्ञः ।

तत्र आचार्यो वाराणसेयविद्वद्विभूषणो महामहाध्यापको दर्शनालङ्कारः श्रीमान् प० देवकीनन्दनशास्त्री महाशयः ।

यजमानो दानवीर-धर्मधुरीण-वागलावंशावतंसो रायबहादुरः श्रीमान् श्रीमान् पं० देवकीशेठ रुक्मानन्द–राधाकृष्णजीमहोदयः ।

बागलावंशो मारवाड़ीवैश्यसमाजे धनशालितया, धर्मनिष्ठया, दानवीरतया च प्रसिद्ध एवास्ते । तद्वंशविभूषणेन श्रीमता श्रेष्ठिना रुक्मानन्द-राधाकृष्ण महोदयेन अगस्तमासस्य १० तारिकातः काश्यामपूर्वमष्टोत्तरशत-भागवतपाठात्मको यज्ञो महता समारोहेण विराडायोजनेन च समारब्धः स च यागः १६ तारिकायां निर्विघ्नं सानन्दञ्च समाप्तिमगात् । अस्मिन्नध्वरे अष्टोत्तरशतसंख्यका विद्वांसो भागवतपाठपरायणा एकविंशतिः सुधियश्च नानादेवताराधनतत्परा आसन्, श्रीमान् दर्शनालङ्कारमहोदयस्तत्र भागवत-प्रवचनपरोऽवियत । काशीस्थानां सर्वेषां सुधियां मान्यानां नागरिकाणाञ्चात्र-पूर्णतया सहयोग आसीत् । वाराणस्यामेतादृग् यज्ञो बहुवर्षाभ्यन्तरे नैवाभूत् । अत्र यागे यादृशो धर्मकर्मपरायणो भगवद्भक्तिरसामृतपानलोलुपः सात्त्विको रुक्मानन्दराधाकृष्णजीमहोदयो यजमान आसीत्, तादृश एव धर्ममर्मज्ञः सदाचारपरायणः पण्डितप्रकाण्डो दर्शनालङ्कारो देवकीनन्दनशास्त्री महाशय आचार्यपदे प्रतिष्ठितोऽभवत् । आनन्दकन्दस्य भगवतो गोविन्दस्य परमानुकम्पया यजमानाचार्ययोः सुवर्णसुगन्धयोर्नितरां सुयोगः समजनि । यज्ञावसाने बहूनां वाराणसेयविदुषां दक्षिणासभायां सम्यक् सत्कारः समपद्यत ।

---

## सनातनधर्मप्रचारः ।

श्रीभारतधर्ममहामण्डलस्य महोपदेशकः पण्डित चेतरामत्रिपाठी सनातनधर्मं प्रचारयन् कुरुक्षेत्राद् देहलीनगरमागतवान् । तत्र अगस्तमासस्य (१९३३ ई०) २३ तारिकायां श्रीसत्यनारायणमन्दिरे व्यवस्थापिकायामुपस्थापितस्य अस्पृश्यानां मन्दिरप्रवेशनियमनिर्माणप्रस्तावस्य विरोधं विदधानः स्पर्शास्पर्शविवेकविषये प्रभावोत्पादकं व्याख्यानमकरोत् । अनेन जनतायामतीव सन्तोषः समजनि ।

## कुरुक्षेत्रे सनातनधर्मावलम्बिनां महती सभा ।

अगस्तमासस्य २१ तारिकायां कुरुक्षेत्रे श्री १००८ परमहंसपरिव्राजकाचार्य श्रीतोताद्रि रामानुजाचार्यसम्प्रदायपीठस्थ-प्रधानशिष्योत्तरादि श्रीवैष्णवमठाधीश-श्रीस्वामि देवनायकाचार्यमहाराजस्य सभापतित्वे सनातनधर्मणां विराट् सभा समजनि। तत्र श्रीमदाचार्यवर्याणां श्रीभारतधर्ममहामण्डलस्य महोपदेशक पण्डित चेतरामत्रिपाठि-प्रमुखानामनेकेषां विदुषाञ्च सनातनधर्ममहत्त्वे, भारतमहत्त्वे, देवमन्दिरप्रवेशप्रस्तावविरोधे च प्रभावशालि भाषणमभूत्। अनेन जनतायां पूर्णजागर्त्तिरजनि ।

---

## महामण्डलस्य धर्मप्रचारः ।

श्रीभारतधर्ममहामण्डलस्य महोपदेशकेन श्रीमता पण्डितचेतरामत्रिपाठिना हरिद्वारमुपेत्य हरदोईनिवासिश्रीठाकुररामसिंहमहोदयस्य सभापतित्वे सभा ऽयधायि। तत्र श्रीवद्रीनाथमन्दिरं श्रीटेहरीनरेशाधीनं नूनं विधेयमिति प्रस्तावः सर्वसम्मतया स्वीकृतोऽभूत्। भाषणञ्चापूर्वमभवत् ।

---

## महर्षेर्दधीचेर्जयन्ती-महोत्सवः ।

काश्यां गतबुधवासरे स्थानीय—ज्ञानवाप्यां श्रीसनातनधर्मप्रचारकसंघस्य, 'आर्यधर्मप्रचारिणीसभायाः' श्रीभारतधर्ममहामण्डलस्य, 'नवयुवकसंघ' स्य च प्रशंसनीयप्रबन्धेन महर्षिदधीचिजयन्ती-महोत्सवः सञ्जातः। तत्र दधीचेरादर्शचरितविषये श्रीलालनाथस्वामिनो वाणीविभूषणस्य श्रीमतो महोपदेशक-नन्दकिशोरशर्मणस्तथाऽन्येषाञ्च विदुषां सामयिकं प्रभावजनकं भाषणमभूत् ।

---

## काश्यां सनातनधर्मणां विराट् सभा ।

अगस्तमासस्य १८ तारिकायां ज्ञानवाप्यां सनातनधर्मस्य महती सभा समयाजि। तत्र देवमन्दिरप्रवेशादीनामधार्मिकाणां नियमनिर्माणप्रस्तावानां घोरविरोधकारकः प्रस्तावः सर्वसम्मतया स्वीकृतः। अत्रानेकेषां पण्डितवर्याणामभूतपूर्वं भाषणमभूत्। अस्याः सभायाः सभापतिः श्रीमत्परमहंसपरिव्राजकाचार्यवर्यः श्रीस्वामिस्वरूपानन्दो मण्डलेश्वर आसीत्। अस्य महानुभावस्य विद्वत्ताविलसितो गम्भीरो विश्वजनमनोमोहक उपदेशो जातः।

---

# ब्रह्मचर्य्यम् ।

ले०—पण्डित श्रीघनश्यामचन्द्रशास्त्री, लक्ष्मणगढ़ ।

——:०:——

इह हि विविधवेषभाषाभावविचित्रितेऽसारे नश्वरे त्रिगुणात्मके जगति को नामैवम्भूतः पुमान् यश्च दुःखात्यन्तनिवृत्तिपूर्वकं सुखं नाभिलषेत्, समस्तोपि लोकः दुःखं मे माभूत् सुखञ्च प्रत्यहं निरतिशयं भवत्विति कामयमानस्तिष्ठति, किन्तु तदानन्ददं सुखं, "धर्म्मेण हि सहायेन तमस्तरति दुस्तरं" धर्मो विश्वस्य जगतः प्रतिष्ठा धर्म्मेण पापमपनुदति" इत्यादि श्रुतिस्मृतिकदम्बतो धर्म्मसाधनैकगम्यमिति निश्चप्रचम् ।

तत्र च माननीय मनुप्रोक्तधृत्यादिदशविधसामान्यधर्म्मलक्षणे इन्द्रियनिग्रहात्मकमपि धर्म्मलक्षणमन्यतमम् । विद्वान् यन्ता वाजिनामिव समेषामिन्द्रियाणां निग्रहे यत्नमातिष्ठन् मर्त्यो महान्तमानन्दथुमनुभवतीति निर्विवादम् । तत्र निखिलेन्द्रियाणां युगपत् निग्रहं कर्तुमक्षमश्चेत् उपस्थेन्द्रियनिग्रहपूर्वकं वेदवेदाङ्गाध्ययनाध्यापनात्मकं वीर्यधारणं नाम ब्रह्मचर्यमवश्यमेव सेवेत, यतस्तद्धि, इन्द्रियनिग्रहात्मक-धर्मलक्षणस्य प्रधानाङ्गत्वेन धर्म्म एवेति सर्वोऽपि तत्वज्ञो विज्ञलोको वदावदः । वर्णाश्रमधर्म-व्यवस्थायां विप्रादिवर्णचतुष्कं निर्म्माायाश्रमचतुष्टये प्राधान्येन ब्रह्मचर्यमेवोररीकृतवान् प्रजापतिः ।

ब्रह्मणे वेदादिविद्यायै चर्यत इति ब्रह्मचर्यम् ।

पुरा भारतीयानां कृते गृहस्थाश्रमसेवनात् प्रागेव ब्रह्मचर्यसेवनमनिवार्यमासीत् नेदृशः कोऽपि दृष्टिपथमवतरतिस्म यश्च ब्रह्मचर्यविरहितो भवेत् अत एवैतद्देशशिशवः सिंहसूनुभिः सार्द्धं निर्भयाः क्रीडन्तिस्म । येषाञ्च पदाघातै गिरिश्रृङ्गाणि चूर्णीभूतानि भवन्ति स्म । येषाञ्चाननारविन्दनिर्गतां श्रोत्रसुखावहां श्रुतिध्वनिं श्रुत्वा बहवो वैज्ञानिका वैदेशिका विपश्चितः सादरमुत्तमाङ्गं नमयन्ति स्म । हा ! दुःखेन प्रोच्यते, तेषामेव ब्रह्मचारिणामुत्पत्तिस्थलेऽत्र पावने भारते वर्षे ब्रह्मचर्य्यस्य नितरामभावः समजनि ।

अद्यत्वे भारतीया लक्षाधिका बालकाः ब्रह्मचर्य्याचरणात् भ्रष्टा भूत्वा यौवनागमात् प्रागेवापक्वं वीर्यं विनाश्य सर्वतः बुद्धिबलोत्साहतेजोभ्यो विरहिता भारभूता भवन्ति । बहवो युवानो नानाविधदुर्व्याधिपीडिता अकाण्ड एव मातापितरौ प्राणाधिकां प्रेयसीञ्च रोदयित्वा यमनिकेतना-

तिथयो जायन्ते "विद्यार्थं ब्रह्मचारी स्यात्" इति शुक्रनीत्युक्तेः ब्रह्मचर्यमन्तरेणैव ज्ञानविज्ञानाधिष्ठात्री महासरस्वती तु तेभ्यः सुदूरमेव जिगमिषति, अतोऽस्य दुर्दशाग्रस्तस्य देशस्य परिरक्षणं पुनः ब्रह्मचर्यस्य प्रतिष्ठयैव भवितुमर्हतीति बलीयान् विश्वासोऽस्माकम् ।

"ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत"

इत्यथर्ववेदश्रुतेः पूर्णायुषो लाभार्थं मृत्युभयनिरासार्थञ्च ब्रह्मचर्यमावश्यकं, यदि नरः क्रमेणाचतुर्विंशति वर्षं पूर्वं प्राथमिकमाश्रमं निषेव्य पुनर्यथाविधि गृहस्थाद्याश्रमेषु प्रवर्तेत तर्हि अवश्यं "शतायुर्वै पुरुषः" इति श्रुतिं सार्थां विदधीत । आयुषो ह्रासस्य कारणं ब्रह्मचर्यस्य नाश एव । यदात्रदेशे ब्रह्मचर्यस्य सार्वत्रिकः पूर्णः प्रचार आसीत् तदानीमत्र नैतावन्तो व्याधय आसन् न च प्रायो यौवने कोपि म्रियते स्म । परन्त्वद्यत्वे सर्वथा वैपरीत्यं गता दशा, जीवनमूलस्य ब्रह्मचर्यस्य त्यागादेव वयं निर्धना अल्पायुषो निर्वीर्याश्च सञ्जाताः । "ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः" इति भगवान् पतञ्जलिः सत्यमुपदिशति । वस्तुतो वीर्यधारणमेव ब्रह्मचर्य्यम् ।

मरणं बिन्दुपातेन जीवनं बिन्दुधारणात् ।
तस्मादतिप्रयत्नेन कुरुते बिन्दुधारणम् । इति शिवसंहितोक्तेः ।

भगवान् शङ्करः बिन्दुधारणब्रह्मचर्यप्रभावेणैव विष्णुनाप्यपेयं हालाहलं भयङ्करं विषं पीत्वापि स्वस्थ एवावातिष्ठत, इति पुराणेषु प्रसिद्धमस्ति । महाभारत प्रसिद्धो भगवान् भीष्मपितामहोऽपि ब्रह्मचर्यप्रभावेण जगति विश्रुतो भूत्वा—"परित्यजेयं त्रैलोक्यं राज्यं देवेषु वा पुनः । यद्वाप्यधिकमेताभ्यां न तु सत्यं कदाचन" इति श्रीपुरुषोत्तमस्य भगवतः कृष्णस्याग्रे निजप्रतिज्ञां तथ्यां चकार । किं बहुना कृतान्तमपि विजित्य स्वच्छन्दमृत्युर्बभूवेति नाविदितं वेदितव्यानाम् । ब्रह्मचर्यसेवनेनैव भगवान् रामानुजः सौमित्रिः पुरन्दर-विजयिनं मेघनादं निजघानेति वाल्मीकीये रामायणे प्रसिद्धम् ।

"ब्रह्मचर्यमायुष्यकराणाम्" इति चरकसंहितासूत्रेण आयुषे हितकराणां पदार्थानां मध्ये ब्रह्मचर्यस्य प्राधान्यं स्पष्टतयावगम्यते । "यदिच्छन्तो ब्रह्मचर्यं चरन्ति" इति श्रीमद्भगवद्गीतोपनिषदपि परमात्मप्राप्ति-कामुकानां साधकानां कृते ब्रह्मचर्यपालनमेव प्रधानं निर्दिशति । शुद्धस्वान्तेनानुष्ठितवीर्यधारणब्रह्मचर्य एव नित्यशुद्धबुद्धसच्चिदानन्दपरमात्मानमधिगन्तुमधिकारी भवतीति स्पष्टम् । ब्रह्मचर्यसमेधित एवाञ्जनेयो रामानन्यसेवको वीरवरो हनूमान् रावणसेवितां सुरासुराधृष्यां लङ्कां लीलयैव दग्ध्वा स्वेष्टदेवं

रामचन्द्रमुपेयायेति नापरोक्षमितिहासविदाम् । साम्प्रतं वीर्योत्पत्तिविषये किञ्चित् प्रस्तूयते;—

भोज्यपदार्थसेवनानन्तरं शरीरे औदराग्निबलात् क्रमशः रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि सप्त धातवः पञ्च पञ्च दिनानन्तरं प्रत्येकं समुत्पद्यन्ते । प्रथमतो रसोत्पत्तिरन्ते च वीर्यसमुद्भवः वीर्योत्पत्तेरनन्तरं तस्य पाकक्रियाऽवरुद्धा भवति तदेव सारभूतमोजोरूपेण देहे तिष्ठति । यथोक्तं सुश्रुते । "रसादीनां शुक्रान्तानां धातूनां यत्परं तेजस्तत् खल्वोजस्तदेव बलमिति । एतदोजः प्रधानतया हृदयस्थमपि सामान्यरूपेण सर्वस्मिन् देहे तिष्ठति एतत् स्वरूपं शार्ङ्गधरेणाभाणि ।

"ओजः सर्वशरीरस्थं स्निग्धं शीतं स्थिरं सितम् ।
सोमात्मकं शरीरस्य बलपुष्टिकरं मतम् ।

वीर्यान्तिधातुपरमतेजोभागस्य ओजसो वर्द्धनेनैव देहस्य तुष्टिपुष्टिबलोदयाः, उत्साहप्रतिभाधैर्यलावण्यसुकुमारताश्च बोभूयन्ते ।

आयुर्वेदपद्धतिमनुसृत्य "रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते । मेदसोऽस्थि ततो मज्जा मज्जः शुक्रस्य संभवः" इति सुश्रुतोक्त दिशा प्रत्येकं धातूनां पाचने पञ्चदिनप्रमाणेन रसादियुग्णां धातूनां पाचने त्रिंशद्दिनानि लगन्ति । अद्याशितस्य भोज्यपदार्थस्य त्रिंशत्तमेह्नि वीर्यं जायते । प्रत्यहं एकप्रस्थमितभोज्यपदार्थसेवकोऽपि मासेनैकेन त्रिंशत्प्रस्थमितमेव भक्ष्यपदार्थं मत्तुं शक्नोति, अशितात् त्रिंशत्प्रस्थमितात् भक्ष्योपहारात् मासैकस्मिन् सार्द्धं कर्षमितं वीर्यमुत्पद्यते इत्ययं मासिक आयः । सकृत् स्त्रीसङ्गेन च सार्द्धकर्षमितं वीर्यं व्ययीभवति । साम्प्रतं विचारणीयमेतत् यो महता प्रयासेन सञ्जातं मासिकमायं क्षणेनैकेन द्वाभ्यां वा क्षणाभ्यां नाशयति, स एवमेव च प्रतिदिनमुच्छृङ्खलो भूत्वा नाशाय बद्धपरिकरो भवितुमर्हति ।

"एतदेवात्र पाण्डित्यं यत् स्वल्पाद् भूरि रक्षणम्"

आयात् स्वल्पतरो व्ययः । इति नियममजानतस्तस्य "अपव्ययपरायणस्याढ्यकुमारस्य कष्टोपार्जितं पितृपैतामहं द्रविणमिव कलेवरं विविधदुर्व्याधिपीडितं सत्तूर्णमेव विनाशमुपेयाच्चेदत्र किं नामाश्चर्यम् ?

वीर्यनाशश्च मैथुनेन भवति । तच्चाष्टविधम् । तद्यथा—

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्य-भाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्यमनुष्ठेयं मुमुक्षुभिः ॥

कस्याश्चित् स्त्रियाःकस्यामप्यवस्थायां मनसा चिन्तनं स्मरणम्। अमुकस्त्री सुन्दरी, पीनोन्नतस्तनी, चन्द्रमुखी; अमुकी, गाने निपुणा शृङ्गारपरायणेत्यादिकथनं कीर्तनम्। स्त्रीभिः सार्द्धमक्षैःक्रीडनं होलिकोत्सवसान्निध्ये सति भ्रातृपत्नी-श्यालपत्नीत्यादिपरिचिताभिः "फागाख्य" खेलनं च केलिपदवाच्यम्। दूषितया सरागदृष्ट्या स्त्रीणां दर्शनं प्रेक्षणम्। स्वपाणिगृहीतां विहायेतरस्त्रीभिः रहसि वार्तालापकरणं गुह्यभाषणम्। योषित्प्राप्त्यै मनसि संकल्पकरणम्, अमुकस्त्री हंसगमना कृशोदरी, तां प्राप्स्यामीत्यादिविचारणं संकल्पपदवाच्यम्। स्त्रीप्राप्तिहेतोरितरान् व्यभिचाररतान् लम्पटान् प्रेरयित्वा प्रयत्नकरणमध्यवसायः। स्त्रिया साकं प्रत्यक्षं सहवासः क्रियानिष्पत्तिः, इत्यष्टाङ्गः मैथुनं मनीषिभिः प्रतिपादितम्—तत्र प्रत्यक्षसहवासातिरिक्तेन सप्तस्वन्यतमेनापि मैथुनेन धातुदौर्बल्य-स्वप्नविकार-प्रमेह-मूत्रकृच्छ्राद्यो व्याधयो देहमात्मसात् कुर्वन्ति। तेन हृदयं दुर्बलं भवति। स्मरणशक्तिश्च नश्यति। अतो मोक्षकामुकैरभ्युदयकामुकैश्चैतद्विपरीतं ब्रह्मचर्यं महता प्रयत्नेनानुष्ठातव्यम्।

तदनुष्ठाता ब्रह्मचारी भवति, ब्रह्म वेदस्तदध्ययनार्थं व्रतमपि ब्रह्म तच्चरतीति ब्रह्मचारीति सिद्धान्तकौमुद्यां दीक्षितोक्तेः। स च ब्रह्मचारी प्राथमिके वयसि गुरुकुले ब्रह्मचर्याश्रमे च निवसन् आचार्यशासनं शिरसा धारयन्

> "सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन्।
> सन्नियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः॥
> वर्जयेन्मधुमांसं च गन्धं माल्यं रसान् स्त्रियः।
> शुक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम्॥"

इत्यादिनियमान् समाहितो भूत्वा पालयन् परस्त्रीषु मातृमतिश्च सर्वदा कुर्वन् विद्यास्नातको व्रतस्नातको विद्याव्रतोभयस्नातको वा भवेत्। ततश्च "अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्। अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्" इति याज्ञवल्क्योक्तमानेन विवाहसंस्कारसंस्कृतः सन् यथाविधि गृहस्थाश्रमं पालयन् देशधर्मजात्युन्नत्यै प्रयतमानः परमेश्वरार्पणबुद्ध्या शुभानि कर्माणि कुर्वीत। गृहस्थाश्रमेऽपि यदृच्छयेन्द्रियासक्तेन न भवितव्यम्, यतो हि गृहस्थानां कृतेऽपि याज्ञवल्क्येन महर्षिणा "ऋतावृतौ स्वदारेषु संगतिर्याविधानतः। ब्रह्मचर्यं तदेवोक्तं गृहस्थाश्रमवासिनाम्"॥ इति प्रमाणेन ब्रह्मचर्यं विहितम्।

> ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा।
> पर्ववर्ज्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया॥

इति भगवता मनुनापि संयतेन्द्रियत्वमेवादर्शि । एवं हि कुर्वन्नत्र गृहस्थोऽपि ब्रह्मचारी निर्दिष्टस्तत एव च गृहस्थानां निखिलकार्यनिष्पत्ति र्हस्तगता भवतीति । हा कष्टम् ! साम्प्रतिका गृहस्था रेतःसंयमाभावान्महतीं दुर्दशां समधिगतवन्तः । पशुभ्योऽपि निकृष्टतराः सञ्जाताः । यतस्तेऽपि समयेन सहवासं कुर्वन्ति । गर्भधारणानन्तरं स्त्रीपशुः कामार्तं पुरुषपशुं नोपैति । किन्तु ऋतुकालनिर्दिष्टशुद्धसमयमतिक्रम्य यथेच्छमनर्गलरूपेण स्त्रीसहवासं विदधतां "सन्तानार्थं च मैथुनम्" इति शास्त्रोक्तेः हेलनामाचरतामकालमृत्युः, सात्विकबुद्धिनाशः, बलोत्साहहानिश्चेति दुर्गुणाः भवेयुश्चेद्दोष अस्माकमेव भारतीयानाम् ।

अतः सर्वदोषाकरां ब्रह्मचर्यविघातकारिणीं बालविवाहप्रथां बालविधवावर्द्धिनीं जरठविवाहप्रथाञ्च देशादस्माद्दर्द्धचन्द्रं दत्वा त्वरया निष्कास्य ब्रह्मचर्यस्य प्रतिष्ठा पुन विधातव्या । यद्यपि क्वचित् क्वचित् ब्रह्मचर्याश्रमाः स्थापिताः सन्ति तथापि तत्र दृढतरप्रबन्धाभावेन यावाँल्लाभः अपेक्षितस्तावान्नैवाक्षिगोचरतां व्रजति । किन्तु अकरणान्मदकरणं श्रेय इति प्रसीदामः । गृहस्थैश्च शरीरं मनश्च दृढं सात्विकं विधातुं भाविनीं सन्ततिं बलिष्ठां मेधाविनीञ्च संपादयितुं निकृष्टपशुवृत्तिमपसार्य निर्दिष्टविधया संयतैर्यथर्तु समयमभिगच्छद्भिर्ब्रह्मचर्यधनमर्जनीयम्, येन जीवनपरमलक्ष्यपरमात्मप्राप्तौ महती सहायता स्यात् । भारतजनन्याः सनातनवैदिकधर्मस्य च पारमार्थिकी स्यादुन्नतिरिति जगन्नियन्तारं परमात्मानं सादरं प्रार्थयते ।

---

## ऋग्वेदीयोपाकर्मनिर्णय-समालोचना ।

---

ले०—श्रीशेषशास्त्री हेब्बालकरः, सुरपुरम् ( निजामराज्यम् )

पण्डितश्रीमदहोबलशास्त्रिकृतनिर्णयमेषमस्सूर्योदयप्रथमाङ्के काशी दरभङ्गापाठशालायामृग्वेदाध्यापकैः श्रीबाबूदीक्षितजडेमहोदयैः प्रकाशितं जानन्त्येव विद्वांवराः पाठकमहाशयाः ।

न च धर्मशास्त्रप्रमाणकोटिमारीकृते सौरभाद्रकृष्णप्रतिपदि बह्वृचानामुपाकर्मविधायकस्तेषां पक्षः कूलङ्कषया मान्यतमानां भूयसां धर्मग्रन्थानां विवेचनया । यतः प्रतीक्ष्यचरणैर्धर्मशास्त्रनिबन्धशिरोमुकुटालङ्कारहीरैः श्रीकाशीनाथोपाध्यायैर्धर्मसिन्धौ "तत्र बह्वृचानां श्रावणशुक्लपक्षे श्रवणनक्षत्रं

पञ्चमी हस्त इति कालत्रयं, तत्र श्रवणं मुख्यकालस्तदलाभे पञ्चम्यादि" रितिकालत्रितयस्याऽपि, पर्यालोच्य समञ्जसं शुक्लपक्षमेव समयं प्रथमं तावत् प्रत्यपादि "श्रावणशुक्लपक्ष" इतिश्रावणोक्तकालत्रयेऽपि दोषदृष्टिते "एवं भाद्रपदशुक्लपक्ष" इति शुक्लपदमात्रेऽपि प्रायुङ्क्त तत्र भवान् सिन्धुनिबन्धा। अनेन पूर्णिमोत्तरकृष्णप्रतिपद्गतश्रवणग्रहणप्रतिषेधः स्फुटं प्रतीयते। "अथाऽतोऽध्यायोपाकरणमोषधीनां प्रादुर्भावे श्रवणेन श्रावणस्ये" त्याश्वलायनगृह्यसूत्रे निरुपपदस्य श्रावणशब्दस्य प्रयोगादभिप्रेतं पक्षद्वयमपि सूत्रकृत इति चेत्। मैवं वादीः। इतरेषु हिरण्यकेशीयप्रभृतिषु गृह्यसूत्रेषु स्पष्टमुपपादिते शुक्लपक्षे, भगवता महर्षिणाऽऽश्वलायनेनैकेन केवलं श्रावणपदं प्रयुक्तं चेत्; तस्य कृष्णपक्ष इति व्याख्या न मनोरमा धर्मशास्त्रकोविदानाम्। उल्लिखिते कृष्णपक्षशब्दे सूत्रकृद्भिः परैर्वा धर्मशास्त्रनिबन्धृभि र्देहलीदीपन्यायानुसृतस्य बहवृचगृह्यसूत्रवचसस्तदिदं व्याख्यानं सूपपन्नं भवेत्। लोकेषु तत्तच्छाखीयेषु परस्परमुपाकृतौ तिथिनक्षत्रेष्वेव संघटते भेदो न च शुक्लाऽशुक्लरूपे पक्षे। "बहुभिः प्रयुक्तं पदमेकेनाऽप्रयुज्यमानमपि प्रयुक्तमेवाऽर्थं गमयतीति" संप्रदायात्, बहवृचगृह्यसूत्रस्य शुक्लकृष्णपदमप्रयुञ्जतामपरेषां वचनानामपि शुक्ल इत्येव तात्पर्यकल्पनेन न कमपि दोषमुत्पश्यामः। अन्यथा धर्मग्रन्थविरोधस्य दुर्निवारत्वात्। दीपिकयाऽपि "वेदोपाकृतिरोषधिप्रजनने पक्षे सिते श्रावण" इति शुक्लपक्षमेवउपाकर्मणः कालः सिद्धान्तितः। अनेन 'प्रतिपन्मिश्रितं पर्वग्राह्यं न श्रवणं पुनः, इति श्रवणस्य प्रतिपत्सम्बन्धनिषेधं प्रतिपादयन्, तत्त्वमुक्तावलीकृदपि संगच्छते। सति प्रमाणानामैककण्ठ्ये तेषां परस्परं पराङ्मुखीभावकल्पनं न सहृदयानां हृदयङ्गम्। शास्त्रिभिः प्रमाणत्वेन समुपन्यस्तं "चतुर्दश्यां पौर्णमास्यां प्रतिपद्दिवसेऽपि वा। यत्र वा श्रवणम् ऋक्षं बहवृचानां तु तत्स्मृत" मिति स्कान्दवचनस्य नैकेषु धर्मनिबन्धेष्वनवलोकनादनाकरत्वं श्रेयम्। एकेनैव धर्मग्रन्थविरोधिना स्कान्देन वचसा साधितमुपाकर्म कृष्णप्रतिपदीति शास्त्रिभिर्विस्मयास्पदम्। अत्राऽयं सारः। कैश्चन गृह्यसूत्रकारैः शुक्लपक्षपदस्य निर्देशितत्वात्, सिन्ध्वादिभि "र्बहवृचानां श्रावणशुक्लपक्ष" इति घण्टाघोषमुद्घोषितत्वाच्च श्रावणशुक्लपक्ष एव बहवृचसम्मत उपाकृतिसमय इति निश्चीयते। औचित्यानौचित्यमत्र विमृशन्तु सप्रमाणं धर्मसिन्धुपारदृश्वानः सम्प्रदायवेत्तारः सम्पादकमहाभागाः परे वा पण्डितप्रकाण्डा इति सर्वं शिवम्।

# श्रीशारदीयनवरात्रपूजा।

ले०—श्रीयुक्त आद्याचरण झा शर्मा ( छात्रः )

श्रीतारा संस्कृतविद्यालयः, मङ्गरौनी, पो० मधुवनी, जि० दरभङ्गा ( मिथिला )

—:o:—

श्रुत्यादिशास्त्रेषु सम्यगभिहितं यत् सकलचराचरसत्त्वभूता तेजःस्वरूपाद्या शक्तिरेव संसारसृष्टिस्थित्यन्तकारिणी। यथोक्तं ब्रह्मवैवर्ते—

"आद्या नारायणी शक्तिः सृष्टिस्थित्यन्तकारिणी।
कुर्वन्ति च यया सृष्टिं यथा ब्रह्मादिदेवताः॥
यया जयति विश्वञ्च यया सृष्टिः प्रजायते॥"

सा सर्वजननी निखिलवस्तुषु तत्तद्वस्तुगतगुणशक्तिरूपेण सर्वत्र सर्वदा सन्तिष्ठत इत्यपि सर्वशास्त्रसम्मतमेव। तथोक्तं तत्रैव—

सा वाणी सा च सावित्री विप्राधिष्ठातृदेवता।
वह्नौ सा दाहिका शक्तिः प्रभाशक्तिश्च भास्करे॥
सस्यप्रसूतिशक्तिश्च देवशक्तिः सुरेषु वा।
पारे संसारसारे सा त्रयी दुस्तरतारिणी॥

सर्वशक्तिस्वरूपा सर्वज्ञानात्मिका परमा प्रकृतिः सा दुष्टदुर्गविनाशनाद् दुर्गेति नाम्ना प्रसिद्धा जातेति पुराणादिषु शास्त्रेष्वभिहितम्। यथा तत्रैव—

बुद्ध्यधिष्ठातृ देवी या सर्वशक्तिस्वरूपिणी।
सर्वज्ञानात्मिका सर्वा सा दुर्गा दुर्गनाशिनी॥

दुर्गाशब्दव्युत्पत्तिस्त्वेवं दृश्यते—

दैत्यनाशार्थवचनो दकारः परिकीर्तितः।
उकारो विघ्ननाशस्य वाचको वेदसम्मतः॥
रेफोरोगघ्नवचनो गश्च पापघ्नवाचकः।
भयशत्रुघ्नवचनश्चाकारः परिकीर्तितः॥
स्मृत्युक्तश्रवणाद्यस्या एते नश्यन्ति निश्चितम्।
ततो दुर्गा हरेः शक्तिर्हरिणा परिकीर्तिता॥

जगत्कल्याणकारिणी सा मदोद्धतैर्दैत्यैर्बाधिता सती सुरसमूहे दिव्य-शक्त्या प्रधानशरीरं धृत्वा यथाऽवसरं सुरशत्रून्दानवान् विनिपातयति ।

यथोक्तं मार्कण्डेयपुराणे—

इत्थं यदा यदा बाधा दानवोत्था भविष्यति ।
तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम् ॥

यथाऽवसरं कृतं तया स्वप्रतिज्ञापालनं प्रोद्दामबलादिमदमत्तान्महिष-दुर्ग-त्रिपुर-शुम्भ-निशुम्भादीन्निहत्य । यथाह स्वयं शिवा—

तेजस्तु सर्वदेवानां पुरा सत्ये [1] तवाज्ञया ।
अधिष्ठानं कृतं तत्र धृतं दिव्यशरीरकम् ॥
शुम्भादयश्च दैत्याश्च निहताश्चावलीलया ।
दुर्गं निहत्य दुर्गाऽहं त्रिपुरा त्रिपुरे वधे ॥
निहत्य रक्तं बीजं च रक्तबीजविनाशिनी ।

तस्याः धर्मार्थकाममोक्षचतुर्वर्गफलार्थिभिर्जगन्मातुः पूजनमहोत्सवो यथाविधि विधेय एव । तथोक्तं श्रीमद्देवीभागवते—

य एवं पूजयद्देवीं श्रीमद्भुवनसुन्दरीम् ।
न तस्य दुर्लभं किञ्चित् कदाचित् क्वचिदस्ति हि ॥
देहान्तेषु मणिद्वीपं मम यात्येव सर्वथा ।

ज्ञेयो देवीस्वरूपोऽसौ देवा नित्यं नमन्ति तम् ॥

दुर्गापूजनमहोत्सवस्य नवरात्रमपि नाम । तन्नामकरणं तूक्तं रुद्रयामले—

नवशक्तिसमायुक्तं नवरात्रं तदुच्यते ।
एकैव देवदेवेशी नवधा परिनिष्ठिता ॥

नवरात्रं द्विधा शयनाख्यं, बोधनाख्यं च । तथोक्तं रुद्रयामले—

शयनं बोधनाख्यं च नवरात्रं द्विधा भवेत् ।
शयनं चैत्रमासीयमाश्विनस्थं च बोधनम् ॥

---

१—सत्ये—सत्ययुगे ।

किन्तु शयनाख्य-चैत्र-मासीय-नवरात्रादधिकं शारदीय-नवरात्रस्य प्राशस्त्यम् । उक्तं च वृहत्सारसिद्धान्ते—

शरत्कालीनपूजां ये कर्त्तारो भक्तिभाविताः ।
तेषां दारान् सुतान् भोगान् वित्तमारोग्यमुन्नतिम् ॥
तुष्टा दास्याम्यहं शम्भो ! स्वर्लोके वसतिं सदा ।

यथोक्तं स्वयं श्रीदेव्या—

आश्विनस्य सिते पक्षे नाना विधिमहोत्सवैः ।
प्रसादयेयुः श्रीदुर्गां चतुर्वर्गफलार्थिनः ॥

अकृतायां शारदीयार्चायां महद्दोषः, उक्तं महाकालसंहितायाम्—

"त्रिपुरघ्नाय यद्वाक्यं पुरोवाच महेश्वरी ।
शारदीयामिमां पूजां न करिष्यन्ति ये नराः ॥
ते पतिष्यन्ति निरये पापाः पूजापहारकाः"

अत एव सुरसमूहसम्पूजितादिशक्तिः सकलसम्भूतिप्राप्तये निखिलोपद्रवशान्तये च सोत्साहं सर्वथा शारदीयार्चा जनैर्मनोवाक्कायकर्मभिः कर्तव्यैव ।

——

## समालोचनम् ।

ले० सीतारामशास्त्री, काव्य-व्याकरण-तीर्थः ।
मुक्ताराम बाबू ष्ट्रीट, कलकत्ता ।

—:०:—

प्रबन्ध-मञ्जरी-प्रणेता-पण्डितहृषीकेशशास्त्री भट्टाचार्यः । सम्पादकः—श्रीमान् पण्डित-पद्मसिंहशर्म्मा साहित्याचार्यः । प्रकाशकः श्रीकाशीनाथशर्म्मा काव्य-तीर्थः, ( काव्य-कुटीर-कार्यालयः, नायक-नगला, चान्दपुर ( विजनौर यू० पी० ) मूल्यम् सार्धैक-मुद्रा । को हि नाम न वेत्ति सुर-सरस्वती-समाराधनसंलग्नमानसः सुधीवरं सम्प्रति पुरन्दर-मन्दिर-प्राङ्गण-वास-सुख-सौभाग्यमनुभवन्तं विलक्षण-वैदुष्य-विभवं निरवद्यसुरभारतीगद्यलेखन-पाटवे मूर्तमिव भट्टवाणं "विद्योदय" सम्पादकं श्रीहृषीकेश-शास्त्रि-चरणम् । यो हि देव भाषां विषाद-प्रमग्नामालोक्य तस्याः साधीयसे प्रचाराय प्राण-पण-प्रयासमाचरन् भारती-भाग्य-भानूदयमिव विद्योदयमुदय्य मुद्रितवान् खलु विकृतमस्तिष्कानां वदन-विवराणि, सपटहनादञ्च प्रख्यापितवान् भगवत्याः सुरगिरोऽतुलं महत्त्वमनुपमं सौष्ठवञ्च । तस्यैव पण्डित-मण्डलाखण्डलस्य सरस-सुन्दरसाहित्य-निर्माण-प्रवीणस्य विश्वविख्यात-वैदुषी-विभवस्य शास्त्रिवर्यस्य,

"विद्योदये" समये समये प्रकाशितानां निरुपमानां माधुर्येणाधरीकृतमाध्वीक-मधु-मृद्वीकानां गाम्भीर्येण परिहसित-प्रशान्त-महासागराणां साहित्यिक-वर-समुपास्य-हास्य-रस-भरितानां निबन्धानां संग्रह-रूपेयं प्रबन्ध-मञ्जरी प्रकाण्ड-पाण्डित्य-प्राप्त-प्रतिष्ठैः समालोचक-शिरो-मुकुट-माणिक्यैः मधुरिम्णि विडम्बित-पण्डितराज-जगन्नाथवाक्यैर्विविध-भाषा-लता-मञ्जरी-मकरन्द-मधुपैः सुप्रसिद्ध-नामधेयैः लेखक-ललाम-भूतैः श्रीपद्मसिंहशर्म्मसाहित्याचार्यैः सम्पाद्य साधुतया स्वीयात् काव्य-कुटीर-कार्यालयात् प्राकाश्यमुन्नीयते। इयं हि सुमनोमनोहरी विविधविज्ञेय-वार्ता-विलास-कलित-कलेवरा प्रखरतर-नैकविध-विषय-पाण्डित्य-भूषित-निबन्धवरा रमणीयतरापरा कादम्बरीव निरतिशयहृद्यतरानवद्यगद्य-विभूषिता विरचयितुर्निबन्धानां किमपि विचित्रं वैचक्षण्यं प्रकटयतीव। अस्यां खलु ये चतुर्दश निबन्धाः समुज्ज्वलन्ति तराम्, तेषु क्वचन धर्म-ध्वंसक-धुरीण-धौरेयैः परिचालितं प्रत्यग्र-धर्ममालोक्य परिप्लवन्ते शोकाश्रूणि, कुत्रचन स्वार्थि-सार्थवाह-समूह-सन्तर्जने मूर्तिमानिव क्रोधः समुज्जृम्भते, कुहचन विचित्र-हास्य-रस-विलासः, परत्र पाषाण-हृदय-द्रावकः करुण-भरनिर्भरः, अन्यत्राद्भुतरस-संलापः, एकत्र च बीभत्स-रस-भीषणता, एवमेव सर्वत्र विचित्रतायाः—स्वच्छन्दं पर्यवेक्ष्यते प्रसारः। नास्ति खलु बहु वक्तव्यमस्या वर्णनीयत्वे सम-पेक्षितम्, अस्यामवसाने विन्यस्ता भारतीय-विद्वद्वराणां सम्मतय एव तत्र विषये पर्याप्ता विराजन्तेतमाम्। अनेकशास्त्राचार्यैः ज्वालापुरीयगुरुकुलमहा-विद्यालयाध्यापक-प्रकाण्डैः श्रीहरिदत्तशर्म्मभिः सुयोग्यैः सम्पादक-तनूजैः श्रीकाशीनाथशर्म्मभिश्च प्रबन्ध परिचयं विलिख्यापरं खलु चन्दनस्य कुसुम इव सौन्दर्यं समपादि। सम्पादकीयं वक्तव्यमुल्लिख्य श्रीपद्मसिंहशर्म्मभिर्यानि खलु त्रिचतुराणि प्रवाहितानि समुष्णान्यस्राणि तानि कस्य नाम कुलिश-कठो-रस्यापि हृदयं द्रवीभूतं कर्तुं न क्षमाणि स्युः। साहित्याचार्यैर्यादृशं हिन्दी-भाषायां विधीयते पीयूष-वर्षणं ततोऽप्यधिकं—मन्यामहे—तैः सुरगिरि समा-चर्यते। अलं खलु बहूक्त्वा संस्कृतज्ञैरियमवश्यमुपादेया विशेषतश्च शास्त्रीयैः काव्यतीर्थीयैश्च सुबुद्धैश्छात्रैरियं ग्राह्यैव। यदि सम्प्रत्यपि सुर-भारतीसेवका एव न प्रदास्यन्ति तस्यै प्रश्रयं तदा निश्चप्रचमिदं विभावनीयम्-यत्त एव खल्वस्य महीयसः संस्कृतनिष्प्राणत्वसम्पादनरूपापराधस्य भविष्यन्ति मन्दि-राणि। मूल्यं पुस्तकस्यास्य निभाल्य पत्राणि नालम्बते बाहुल्यम्। प्रायोऽ-स्मिन् सार्धद्विशतानि वरीवृत्यन्ते पत्राणि। ईदृशं शोभनमवसरम्-आशासे-न विहास्यन्ति संस्कृतज्ञाः। इतिशम्।

(लेखकेन १९८८ विक्रमाब्दे चैत्रकृष्णेतृतीयायां लिखित्वा प्रहितमिदं समालोचन-मत्राङ्के प्रकाशितम्—सं० )

# श्रीदुर्गाऽभ्यर्थनम्

ले०—व्याकरणाचार्यः श्रीमदम्बिकादत्ततनूजश्रीशदत्तशर्मा, 'श्रीशः'

विमलभक्तमनोमुददायिनी
महितमङ्गलमञ्जुविधायिनी ।
विजयतां जगतां जननी हिता
लसदुमाधवमाधवपूजिता ॥ १ ॥

अतिकरालकृपाणकराम्बुजा
मृदुमृगादनपृष्ठनिषेदुषी ।
सजलसज्जलजातविशालिनी
ह्यवतु मां भुवि काऽपि कपालिनी ॥ २ ॥

गिरिगणाधिपविन्ध्यविचारिणी
कलुषसम्भवकष्टनिवारिणी ।
भवतु मे वृषभाङ्कविहारिणी
सकलसङ्कटसंघविदारिणी ॥ ३ ॥

अवनता कथिता निजदुर्दशा-
जननि ! किन्तु कृपा न कृता त्वया,
पदमिदं 'जननीति' सुविश्रुतम्—
भवति ! संशयमादधते स्वयम् ॥ ४ ॥

सुपतितः पतिताधिपतिर्महान्
अहह ! शाम्भवि ! पानकपङ्किले ।
सुविलपामि सदाऽत्र भयङ्करे
झटिति शङ्कुरु शङ्करि ! किङ्करे ॥ ५ ॥

विहर हे हरहृद्धरणक्षमे
हृदि ममान्धतमोनिचये चिरम् ।
तव पदाम्बुजतस्तमसां क्षयः
भवतु येन भवोद्भवकारणे ! ॥ ६ ॥

बहुदिनानि गतानि पदाम्बुजे
रतिरहो विहिता कठिनी मया
न तु दयां प्रकटीकृतवत्यहो
किमिति दुर्बलमेवमुपेक्षसे ? ॥ ७ ॥

फणिपते रसनाऽपि यशः कथां
तव समापयितुं ननु लज्जते ।
कथमयं प्रलयङ्करपत्नि ! ते
वदतु दीनतरो द्विजबालकः ॥ ८ ॥

विषयभोगेनातृप्तं चित्तं पौनःपुन्येन चञ्चलायमानं सदनन्तं दुःखं घोरामशान्तिञ्च जनयति। यतो हि सृष्टेर्निदानीभूताया वासनाया एष एव धर्म्मो यत्ततोऽनेकशो भिन्नभिन्ना बहुप्रकारा वासना उद्गच्छन्ति। यासां न क्वापि कथमपि पर्य्यवसानं भवति। उक्तञ्च स्मृतिशास्त्रे—

यावतः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान्।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः॥
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
नाऽलमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत्॥
तृष्णानदी सारतरप्रवाह-
ग्रस्ताऽखिलाऽनन्तपदार्थजाता।
तदस्थसन्तोषसुवृक्षमूल-
विकाशदक्षा वहतीह लोके॥
तृष्णालताकाननचारिणोऽमी-
शाखाशतं काममहीरुहेषु।
परिभ्रमन्तः क्षपयन्ति कालं-
मनोमृगा नो फलमाप्नुवन्ति॥
चित्तप्रसादेन यतिर्जहातीह शुभाऽशुभम्।
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमत्यन्तमश्नुते॥

यदा हि साधकचित्तं भगवच्चरणाश्रितं भवति तदा भगवदनुकम्पया तस्य सकला अपि वासना निर्मूला भवन्ति। ततश्च तस्य शान्ते चेतसि अपूर्वानन्दस्याध्यात्मप्रसादस्योदयो भवति। यतो हि यत्र यस्याः परमानन्दसत्तायाः छायारूपं विषयसुखमाश्रित्याऽज्ञानिनो जीवाः प्रोन्मत्ता भवन्ति तत्रैव यदि तस्य छायात्मनो विषयसुखस्य स्थाने शाश्वतिकायास्तस्याः परमानन्दसत्ताया यथार्थसुखस्वरूपाया एव सम्प्राप्तिः स्याच्चेत् कथन्तत्र विषयवासनाया अवसरलेशः। अत एवोक्तम् श्रीमता भगवता श्रीमद्गीतायाम्—

विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते॥ इति॥

यतो हि निराहारस्य मानवस्यान्तःकरणाद्वासनाबीजन्तु न निवर्तते तत्तु गुप्ततया निहितमेव तिष्ठति। तदेवाहारोपलब्धौ पुनरङ्कुरितं भवति। भगवच्चरणकमले निषक्तचेता भक्तस्तु सर्वथेन्द्रियवासना निर्मूलयति। ततश्च

मनोनाशं, तत्त्वज्ञानं परमानन्दमयं, निर्विकल्पसमाधिं, परात्मिकां भक्तिञ्चा-सादयति । अभिहितञ्च श्रुतौ तथाहि—

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चाऽस्य कर्माणि तस्मिन्दृष्टे परावरे ॥

स्मृतावप्येवमेवोक्तम्—

मुक्ताऽऽश्रयं यर्हि निर्विषयं विरक्तं
निर्वाणमृच्छति मनः सहसा यथाऽर्चिः ।
आत्मानमत्र पुरुषोऽव्यवधानमेक-
मन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥
सोऽप्येतया चरमया मनसो निवृत्त्या
तस्मिन्महिम्न्यवसितः सुखदुःखबाह्ये ।
हेतुत्वमप्यसति कर्तरि दुःखयोर्यत्
स्वात्मन् विधत्त उपलब्धपरात्मकाष्ठः ॥

यद्यपि आर्तो, जिज्ञासुरर्थार्थी चेति त्रयोऽपीमे कियतीमपि कामनां दधत्येवेति तेषां स्वभावसिद्धम् । ज्ञानिनि भक्ते तु कामनागन्धोऽपि न स्थातुमर्हति । अतश्च सर्वेषामेव भक्तानामिह चतुर्थेऽवस्थाविशेषे बद्धलक्ष्यत्वात् सर्वासां च भक्तीनां परस्या एव भक्तेरन्तिमत्वात् सर्वैरपि भक्तिमर्माभिज्ञैरिदमङ्गीकर्तव्यमेव यद् यथार्थे सर्वोत्तमे भक्तिभावे कामनागन्धोऽपि न स्थातुमर्हतीति ।

अन्यच्च यत्र पदे सर्वासामपि कामनानां विलयो भवति, तद्धि पदं निरोधात्मकमस्तीत्यपि निःसन्दिग्धमेव । सर्वमपीदं चराचरात्मकं जगत् तत एव परमात्मनो जायन्ते तत्रैव निजस्थितिं बिभ्रदवसाने तस्मिन्नेव सर्वात्मना विलीयते । यतो हि सर्वस्यापि विलयस्थानं तदेव श्रुतावपि समर्थितम् ।

"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति ।
यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति ॥"

अतश्च तत्पदं निरोधरूपमेवास्तीत्यप्यसन्दिग्धमेव । एवञ्च यत्पदं निरोधात्मकमस्ति तत्रोपतिष्ठतः सर्वा अपि कामनाः स्वत एवाप्युपरता भवन्तीति विज्ञानसिद्धम् ।

अपरञ्च यया च कामनया भक्तोऽकाम्ये परमपदे समुपतिष्ठतीति तस्याः

कामनेति शब्देनाह्वानम् सर्वथाऽनुचितम् । अतोऽपि भक्तिकामना न कदापि कदापि कामनात्वेनाभिधानीयेति विरमामः ॥ २६ ॥

अधुना भक्तेस्तृतीयं वैशिष्ट्यं ब्रूते—

**स्वयं फलरूपत्वात् सर्वफलप्रदा ॥ २७ ॥**

भक्ति र्हि स्वयं फलमेवेति सर्वं फलं प्रददाति स्वभावादेवेति सूत्रार्थः । भगवद्भक्त्या भक्तः सर्वमपि फलमासादयति, यतो हि भक्तिः स्वयं फलस्वरूपैवोच्यते । भक्तिस्तु सर्वेषामपि साधनानां फलमुच्यते । यतो हि जन्मजन्मान्तर-तपस्यया भक्तस्य चित्तमलं यदा विदूरीभवति तदैव भगवदनुग्रहेण भक्तचेतसि भगवद्भक्तिभावोद्गमो भवतीति ।

पूर्वसूत्रैर्महर्षिः सूत्रकार इदं सूचयति यद् भक्त्यैवामृतत्वभाव-सम्प्राप्तिर्भवति । भक्तिरूपे च साधने नास्ति पातावसरः । तस्याश्च भक्ते र्निरोधरूपत्वान्न तस्याः कामनाशब्दवाच्यत्वम् । सा तु अकाम्येत्युच्यमानैव शोभते । यदा च भक्तिरेव मुक्तिप्रापिका तर्हि तस्या अमृतत्वस्वरूपत्वे कः सन्देहः । यदा च भक्तो भक्तिं द्वारीकृत्य तस्मिन् तत्त्वातीते परस्मिन् पदे समासक्तचेता भवति तदाऽन्यस्मिन् लक्ष्ये तस्यासक्तेरसम्भवात् पतनाशङ्कैव नोदेति । यतश्च यया भक्त्या सर्वा अपि सांसारिक्यो वासना निरुद्धा भवन्ति । सा भक्तिरकाम्यपदमर्पयतीत्यत्र कः सन्देहः ।

यत्र महर्षिः सूत्रकारोऽनेन सूत्रेण सर्वोत्तमस्य फलस्य स्वरूपं वर्णयन् भक्तेः फलस्वरूपत्वमेवाङ्गीकृतवान् तत्र भक्तिः सर्वफलदाऽस्तीत्यत्र कथं सन्देहावसरः । सर्वेषामपि पुरुषार्थानाञ्चरमं ध्येयन्तु मुक्तिरेवेत्यत एवाह "मुक्तिरत्यन्तपुरुषार्थः" इति । स्फुटमभिहितम् सांख्यदर्शने—

"अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ।"

एवञ्च मुक्तिफलदा भक्तिः परमपुरुषार्थं निश्रेयसमेवार्पयतीति तस्याः स्वतः फलत्वे कःसन्देहः । अतः साऽवश्यं फलरूपा । यतश्च सा फलरूपेत्यवश्यं सर्वफलप्रदाऽपि । यतो हि यस्मिन्पदे सर्वेषामपि फलानां पर्य्यवसानम् । तत्पदं सर्वफलप्रदमित्यत्रापि किं प्रमाणप्रयोजनम् ?

विषयोऽयमन्यविधयाऽप्यवगन्तुम्पार्य्यते । तथा हि । जीवानां पुरुषार्थोऽर्थकामधर्ममोक्षा इति चतुर्वर्गात्मतया चतुर्धा विभक्तो विद्यते । तत्र चतुर्ष्वप्येषु अर्थकामौ तु सर्वथा धर्मपरतन्त्रावेव स्तः । मोक्षस्तु धर्मफलमेव गीयते । इति सिद्धान्तानुसारेणापि मोक्ष-प्रदायिनी भक्तिः सर्वफलप्रदैव सिध्यति ।

सकामो भक्तस्तु सर्वतः सर्वथा सर्वदैव सर्वफलदातुः सर्वकर्म-नियन्तुर्जगद्धातुः सर्वशक्तिमतो भगवतो भक्तिमेव सर्वफलप्राप्तये सर्वात्मनावलम्ब्य निर्भरस्तिष्ठति। यतो हि भगवान् सर्वशक्तिमान् भक्तवत्सलश्चास्तीति सद्यं तस्य मनोरथं पूरयत्येव। यथाचोक्तन्तेनैव गीतायाम्।

अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते।
तेषां नित्याभियुक्तानां योगक्षमं वहाम्यहम् ॥ इति।

तस्य भगवतः करुणामयमलयपवनः सततमेव प्रवाति। परन्तु जीवस्य मनोनौर्यदा भक्तिरूपं निजपटपत्रं विस्तारयति तदैव करुणामयस्य भगवतः कृपापवनं तं ग्रहीतुं समर्था भवति। ईदृग् भक्तिलाभस्तु जन्मजन्मान्तरार्जित-तपःसञ्चयेनैव साध्यते। स्मृतावप्युदीरितम्—

जन्मान्तर-सहस्रेषु तपोध्यान-समाधिभिः।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥ इति।

ईदृश्या भक्तेरधिगमेन भक्तोऽध्यात्मराज्ये क्रमश उन्नमन्नवसाने परमानन्दमयं निःश्रेयसात्मकं परमपदञ्च विन्दति। यथोक्तं स्मृतिषु—

तदा पुमान्मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशयाकृतिः।
निर्दग्धबीजानुशयो महीयसा
भक्तिप्रयोगेण समेत्यधोक्षजम् ॥
अधोक्षजालम्भमिहाशुभात्मनः
शरीरिणः संसृतिचक्रशातनम्।
तद्ब्रह्मनिर्वाणसुखं विदुर्बुधा-
स्ततो भजध्वं हृदये हृदीश्वरम् ॥

श्रीमद्भगवद्गीतायामप्येवमेवोक्तमास्ते—

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥

यद्धि पदं सकलपुरुषार्थानां चरम-लक्ष्यं मनुष्यजन्मनश्चान्तिमं ध्येयं विद्यते। तदधिगतौ सत्यां साधकस्य न किञ्चनापि साधनीयमवशिष्यते इदमेवोद्दिश्य स्फुटं समुदीरितं कंसारिणा श्रीमद्भगवद्गीतायाम्—

यं लब्ध्वा चाऽपरं लाभं मन्यते नाऽधिकन्ततः।
यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥

तत्रैवमप्युक्तं तेनैव—

यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥

यथाहि विशालेऽगाधे नीरनिधौ स्नानेनकूपतड़ागादीनां स्नानफलन्तु भवत्येव, किन्तु तत्र सर्वतोव्याप्तसमुद्रेऽवगाहन-जन्या या शान्तिरासाद्यते सा त्वधिकफलतया गण्यते। तथैवेहापि सकामसाधनैस्तत्तल्लोकानामधिगत्या सकामानां साधकानां या परिच्छिन्नानन्दावाप्तिरासाद्यते तस्यास्तत्र निष्कामसाधनैर्लब्धेऽपरिच्छिन्ने ब्रह्मपदे पर्य्यवसानन्तु भवत्येव, किन्तु ततोऽप्यधिकं ब्रह्मानन्दसागरस्यापरिमितत्वान्निःसीमतया च तत्र निमग्नस्य भक्तस्यानिर्वचनीयानन्देयत्तां कर्तुं कोहि जगति योगीतरो मानवः समर्थः। अत एव श्रुत्या समर्थितोऽयं विषयः।

"आनन्दं ब्रह्मेति व्यजानात् एषोऽस्य परमानन्दो
ऽन्यानि भूतान्येतस्य मात्रामुपजीवन्तीति"

भूम्न आनन्दस्य सत्ता तु ब्रह्मण्येव विराजते। या च भगवद्भक्तेनैव साधकेनाधिगम्यते। विषयमुग्धा जीवास्तु तस्याश्छायामात्रमवलम्ब्य नन्दन्ति इति। अतश्च सर्वेषामेव साधनानां फलस्थानीया भक्तिः सर्वसिद्धिप्रदायिनीति निःसन्दिग्धं सुनिश्चितम्। उपनिषत्स्वपि समर्थितम्—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चाऽस्य कर्म्माणि तस्मिन्दृष्टे परावरे ॥

यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान्।
तं तं लोकं जायते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥

इदं हि परस्या भक्तेः श्रेष्ठस्वरूपमहत्त्वम् ॥ २७ ॥

सम्प्रति भक्तः स्वरूपं निरूपयति—

**नासौ ज्ञानं ज्ञानसत्त्वेऽपि द्विषतस्तदसत्त्वात् ॥ २८ ॥**

असौ भक्तिः ज्ञानं न, द्विषतः शत्रोः ज्ञानसत्त्वेऽपि शत्रुविषयकज्ञाने विद्यमानेऽपीति भावः। तत्र तस्या भक्ते रसत्वात् शत्रुविषयकभक्त्यभावादिति सूत्रार्थः।

भगवद्विषयकं ज्ञानं तद्विषयिका भक्तिश्चेति द्वयोरपि न स्वरूपत ऐक्यम्। यद्विषयकं ज्ञानं भवति तद्विषयिका भक्तिरपि भवत्येवेति नानयोः कश्चनेदृशः सम्बन्धो दृश्यते। जगति तु बहुशो दृश्यते यद्रिपुविषयके विशिष्टज्ञाने सत्यपि तेन सहाणुरपि न भवति प्रीतिगन्धः।

ज्ञानमपि द्विधा गीयते। एकञ्च स्वरूपज्ञानमपरन्तु तटस्थज्ञानमिति। इह हि सूत्रकृन्महर्षिः तटस्थज्ञानमुद्दिश्यैव प्रोवाच सूत्रम्। स्वरूपज्ञानस्थिते-

रद्वैतपदे विद्यमानत्वात् तस्या आत्मस्वभावत्वम्। आत्मनो हि ज्ञानस्वरूपत्वमिति हि स्वरूपज्ञानानुभवः। न तत्रास्य सूत्रस्य तात्पर्य्यम्। सूत्रस्यास्य तटस्थज्ञानसम्बन्धित्वात् तटस्थज्ञानमेव भक्तिसहायकमिति ध्रुवमङ्गीकरणीयम्। तथापि भक्तिज्ञानयोराकाशपातालवन्महदन्तरमित्यपि न विस्मरणीयम्। तटस्थज्ञानमेकं सामान्यविषयकं ज्ञानं यच्च शत्रुमित्रोदासीनसदसत्सर्वविषयकं भवितुमर्हति। अन्यच्च यदा भक्तेरनुरागेणैव सम्बन्धस्तदा तस्या न ज्ञानेन सहैक्यं सम्भवति। ज्ञानन्तु शत्रुमित्रयोर्जडचेतनयोः सदसतोरेकामेव विधामधिकरोति। तेन हि मनसोऽनुरागवृत्त्यैव सम्बन्धवत्या भक्त्या न कथमपि ज्ञानस्याभेदः। यद्यपि ज्ञानेन ज्ञेयात्मनि भगवति तदनुरागोत्पत्त्यै भक्तस्य साहाय्यमातन्यते। परन्तु सोऽनुरागो न ज्ञान-सापेक्षः। अनुरागराज्यन्त्वन्यदेव। अतो हि भगवदनुरागोत्पत्तौ चित्तभावो हृदयैकतानत्वम् दीनबन्धोर्भगवतो दयैव प्रधानमालम्बनमूह्यम्। उक्तमन्यत्रापि स्मृतौ तथाहि—

> कथं विना रोमहर्षं द्रवता चेतसा विना।
> विनानन्दाश्रुकलया शुद्ध्येद्भक्त्या विनाशयः॥
> मयि प्रेमाकुलवति रोमाञ्चिततनुः सदा।
> प्रेमाश्रुजलपूर्णाक्षः कण्ठगद्गदनिःस्वनः।

यया भक्त्या शरीरं मन आत्मेति त्रितयमपि पवित्रीभूय साधकमानन्दसागरे निमज्जयति। तस्या भक्तेः प्रकाशो ज्ञाने कथं स्यात्। अपि तु प्राणस्पन्दने भावोच्छ्वासे अङ्गप्रत्यङ्गपुलकोद्गमे हृदयस्यार्द्रतायाम् चक्षुषश्चाश्रुधारायामेव विवर्तमानं दृश्यते। इदमेव हि हृदयविहारिण्या भक्त्या माधुर्य्यम्। इहहि "अपि" शब्द इदमेव विज्ञानम्पोषयति। द्वेषपात्रे हि रिपौ न कथमप्यनुरागोद्गमः। इत्यतोऽपीह "अपि" शब्दप्रयोगः॥ २८॥

भक्तेरुन्नततमं भावं विवृणोति—

**परा तु स्वरूपज्ञानरूपा॥ २९॥**

स्वरूपस्य परमात्मन इति यावत् ज्ञानम् बोधः रूपं लक्षणं यस्याः सा तथोक्ता परा श्रेष्ठा भक्तिरुच्यते इति सूत्रार्थः।

परमात्मनः स्वरूपज्ञानं परा भक्तिश्चेति पदार्थैक्यम्। ज्ञानं हि द्विधाऽभिधीयते। तटस्थज्ञानमेकमपरं स्वरूपज्ञानञ्चेति पूर्वमेवोक्तम्। तटस्थज्ञाने तु ज्ञाता, ज्ञानं, ज्ञेयमिति त्रिपुटीस्थितिर्भवति। फलतोऽस्यां दशायां ज्ञेये परमात्मनि ज्ञातरि च साधके ज्ञानात्मके च व्यापारे सत्येव आत्मोपलब्धिर्भवति। स्वरूपज्ञानदशायान्तु ज्ञातृ-ज्ञान-ज्ञेयात्मिकायां त्रिपुट्यां पूर्णतया विलीनायां

सत्याम् एकमद्वितीयं सच्चिदानन्दरूपं ब्रह्मैव तिष्ठति। निर्विकल्पसमाधिस्थो राजयोगी ज्ञानी महापुरुष इममेवाद्वैतभावं लब्ध्वाऽऽनन्दति। भगवतः सच्चिदानन्दस्यानन्दभावे निमग्नः साधकोऽपि भक्तः परावस्थायां सर्वत्रैवानन्दात्मनः परमात्मनः साक्षात्कारं कुर्वन्निममेवाद्वैतभावमधिगत्य कृतकृत्यः प्रसीदति।

यथा हि ब्रह्मसद्भावे समुदिते सति स्वरूपज्ञानस्योदयात् कार्य्यकारणात्मनोर्ब्रह्मणो मायाजन्यभेदात्मकस्वतन्त्रसत्ताया विलये तयोरैक्यादिदानीं शुद्धाऽद्वैतभावस्थितिरेव विराजते। तथैव परस्यां भक्तौ समुदितायां भाग्यवान् भक्त एकं परमात्मानं श्रीभगवन्तं विहाय नान्यत् किञ्चित् द्वैतानुभवमनुभवति। तदानीन्तु कार्य्यब्रह्मात्मकं जगत् कारणब्रह्मात्मनः श्रीभगवतः स्वरूपे एव विलीयमानं तादृशैरुन्नतश्रेणिगैर्भक्तैरनुभूयते। तदानीन्तु तस्य भक्तशिरोमणेः चित्तं स्थूलसूक्ष्मात्मक-जगत्प्रपञ्चैः सह रससागरात्मके कारणब्रह्मणि परमात्मनि संगत्य जले जलबिन्दुवत्समानभावमेवाश्रयति। न तत्र कियानपि भेदगन्धो विभाव्यते। अत एवोक्तं परा भक्तिः स्वरूपज्ञानञ्चेत्युभयमप्येकमेव वस्तु इति। तथाहि-स्मृति-वाक्यानि—

उच्चैर्गायंश्च नामानि ममैव खलु नृत्यति।
अहंकाराऽऽदिरहितो देहतादात्म्यवर्जितः॥
इति भक्तिस्तु या प्रोक्ता परा भक्तिस्तु सा स्मृता।
यस्यान्तदतिरिक्तं तु न किञ्चिदपि भाव्यते॥
इत्थं जाता परा भक्तिर्यस्य भूधर! तत्त्वतः।
तदैव तस्य चिन्मात्रे मद्रूपे विलयो भवेत्॥
भक्तेस्तु या परा काष्ठा सैव ज्ञानं प्रकीर्त्तितम्।
वैराग्यस्य च सीमा सा ज्ञाने तदुभयं यतः॥

यो हि भाग्यशाली भक्तशिरोमणिरिमामवस्थामाश्रयति। सहि भागवतोत्तम-शब्दभाग्भवति। यथोक्तं भक्तिशास्त्रे—

सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः॥
सर्व्वभूतस्थमात्मानं सर्व्वभूतानि चाऽऽत्मनि।
ईक्षते योगयुक्तात्मा सर्व्वत्र समदर्शनः॥

श्रुतावपि समर्थितोऽयमर्थः।

आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते
आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्ति।

"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ॥"

अत एव शान्तः साधकः सर्वतो व्याप्ते आनन्दात्मके श्रीमति भगवति स्वचित्तं विलाप्य परस्या भक्तेरवस्थायां स्वरूपज्ञानमधिगत्यानन्दन् विराजते । परस्या भक्तेरवस्थोपलब्धिः श्रीमद्भगवतः स्वरूपोपलब्धेरभिन्नैवोच्यते । न तत्राणीयानपि भेदलेशः । अस्यामेवावस्थायां तत्त्वमस्यादि-महावाक्यानां चारितार्थ्यं भवति ॥ २९ ॥

सम्प्रति परस्या भक्तेरवस्थायां स्वरूपज्ञानोदये सति किं भवतीत्याह—

**तदाविर्भावात्तटस्थ-ज्ञानलयः ॥ ३० ॥**

तस्याः परभक्ते राविर्भावात् तटस्थस्य ज्ञानस्य लयः तिरोभावो भवतीति सूत्रार्थः ।

भक्तेः परावस्थायां स्वरूपज्ञानोदये सति तटस्थज्ञानस्य तिरोभावः । वैधी, रागात्मिका चेति यौ द्वौ भेदौ भक्तेः समुदीरितौ, ताभ्यां द्वाभ्यामपि तटस्थ-ज्ञानस्य सम्बन्धो विद्यते । तथा हि—वैध्या भक्तेः प्रथमकक्षामारभ्य रागात्मकाया भक्तेरन्तर्गतां तन्मयासक्तिं यावत् सर्वास्वप्यवस्थासु ध्यातुर्ध्येयस्य च सम्बन्धपार्थक्यं तिष्ठत्येव । भक्तेः पराऽवस्थैवैकैवंभूताऽस्ति । यत्र स्वरूप ज्ञानोदये सति साधकः सर्वत्रैवाद्वितीयं सच्चिदानन्दमेवावलोकयति । तदा तु ध्यातु ध्येयस्य चैक्यमेव भवति । येन साधकः स्वस्वरूपावस्थितो भूत्वा ऽऽनन्दति । अत एवोक्तम् श्रुतौ—

"यत्र हि द्वैतमिव भवति यत्र वाऽन्यदिव स्यात्तत्राऽन्योऽन्यत् पश्येदन्योऽन्यद्विजानीयात्, यत्रत्वस्य सर्वात्मतैवाऽभूत् तत् केन कं पश्येत् केन कं विजानीयात् ।"

यावद्धि तटस्थज्ञानं द्वैतज्ञानं तिष्ठति । तावत् द्रष्टरि दृश्ये च भेदस्तिष्ठति । यदा च तटस्थज्ञानं तिरस्कृत्य स्वरूपज्ञानोदयो भवति । तदा द्वैत-भावस्य सर्वथाविलये सति साधकोऽद्वैते परब्रह्मभावे स्थितो भवतीत्यत एवेयं परा भक्तिः सर्वैरपि भक्तैरभिलषितास्ति । इयमेवावस्था भक्तिराज्यस्य सीमोच्यते । इयमेवावस्था शास्त्रेषु जीवन्मुक्तावस्थतयोच्यते ॥ ३० ॥

ज्ञानापेक्षयापि भक्तेर्वैशिष्ट्यं ब्रूते ।

**नानुष्ठात्रनुष्ठानविषया ज्ञानवत् ॥ ३१ ॥**

( भक्तिः ) ज्ञानेन तुल्यं ज्ञानवत् अनुष्ठातु रनुष्ठानस्य विषयो गोचरो न भवतीति सूत्रार्थः ।

ज्ञानेन सदृशम् अनुष्ठानतो भक्ति नैवाधिगम्यते । यथा हि-ज्ञानस्य जिज्ञा-

ओंतत्सत् ।

# पुराणरहस्यम् ।

महामहोपाध्यायेन महामहाध्यापकेन श्रीअन्नदा-
चरणशर्मणा तर्कचूड़ामणिना
सम्पादितम् ।

वाराणस्यां
भारतधर्म्म-सिण्डिकेट-लिमिटेड द्वारा प्रकाशितम् ।

कलेर्गताब्दाः ५०३४ सम्वत् १९९० वैक्रमाब्दे ।



प्रथमसंस्करणम् ।     मूल्यं सार्द्धरूप्यकम्

# प्रस्तावना ।

—:॰:—

ब्रह्मा दक्षः कुबेरो यम-वरुण-मरुद्वह्नि-चन्द्रेन्द्र-रुद्राः ।
शैला नद्यः समुद्रा ग्रहगणमनुजा दैत्य-गन्धर्व-नागाः ॥
द्वीपा नक्षत्र-तारा रवि-वसु-मुनयो व्योम भूरश्विनौ च ।
संलीना यस्य सर्वे वपुषि स भगवान् पातु वो विश्वरूपः ॥

पूर्णावतार आनन्दकन्दो भगवान् श्रीकृष्णो दिव्यं चक्षुः प्रयच्छन् अनन्यभक्तमर्जुनं यद्विश्वरूपमदर्शयत्, तद्विश्वरूपं भगवता श्रीवेदव्यासेन पुराणात्मना आबालवृद्धं स्त्रीपुरुषाणां कृते सुलभमकारि। यतो वै विश्वरूपात्मके पुराणशास्त्रशरीरे ब्रह्मा दक्षः कुबेरो यमो वरुणो वायुरग्निश्चन्द्र इन्द्रो रुद्र, शैलाः सरितः समुद्राः ग्रहगणो मनुष्या दैत्या गन्धर्वा नागाः सप्तद्वीपाः नक्षत्रगणो रविर्वसवो मुनिगणः आकाशः पृथिवी अश्विनीकुमारादयः सर्वे किल विलीना विराजन्ते। संसारे नैतादृक् तत्त्वज्ञानमस्ति यत् किल श्रीवेदव्यासविरचिते पुराणशास्त्रे न भवेत्, तस्मादेव विवेकिनो महापुरुषाः कथयन्ति यद् 'व्यासोच्छिष्टं जगत्सर्वम्' इति ।

पुराणेषु देवीदेवानां लीलामय्यो गाथा गीयन्ते, ऋषिमुनीनामुपाख्यानमस्ति पुण्यश्लोकानां महापुरुषाणां जीवनचरितानि वर्त्तन्ते, तत्रेतिहासः काव्यं राजनीतिरध्यात्मज्ञानं व्यवहारज्ञानम्, सर्वविधा एव विद्या विद्यन्ते, पुराणशास्त्रमेतादृक् परिपूर्णं वाङ्मयमास्ते येन सामान्यवर्गमारभ्य परमोच्चतमान् यावत् सर्वेषामेव जनानां यथाधिकारं लाभो भवितुमर्हति ।

पुराणभाषा नितान्तं सुबोधा, तत्र वर्णितं तत्त्वज्ञानं सातिशयं सुगममास्ते। तत्र चित्रितो नायकनायिकास्वभावः परमोदात्तो विद्यते । पुराणेषु प्रसादगुणः परिपूर्यते, तन्निकषायमाणं निदर्शनमेतदेवास्ते यदनेकशः पठितेष्वपि पुराणग्रन्थेषु पाठकानां पुनः पुनः पुराणपाठेऽभिरुचिर्वर्द्धत एव, न तेषां चित्ते तत्राऽरुचिर्जायते। आधुनिकासु सर्वास्वपि यावत्प्रचलितभाषासु नाटकोपन्यासगल्पगाथादीनामनेके ग्रन्थाः प्रकाशन्ते किञ्च चिन्ताशीलैः पाठकैरेतन्नि-

विवादं नूनं मन्येत यत्तेषां रुचिकराणामपि ग्रन्थानामेकवारं द्विवारं वाऽध्ययनेन न पुनस्तान् पठितुं पाठकानां चित्तमुत्कण्ठते, किन्तु न जाने पुराणेषु कीदृगलौकिकत्वं निहितमास्ते यद् यावद्वारमेषां पाठो विधीयेत तावदेवाधिकमेतेषां माधुर्यमेधमानं पाठकानां मनांसि मोहयति। परःसहस्रवर्षेभ्योऽपि कालेभ्यो जनाः पुराणपाठं प्रकुर्वते, अपि चैकव्यक्तिरेव बहुवारं पुराणमधीते शृणोति च, परञ्च तेषां नूतनत्वं दैनन्दिनं विवर्द्धते। सदा पल्लविता कल्पलतिकेव प्राचीनाऽपि पुराणग्रन्थमाला नवीनैवाऽवतिष्ठते नैव पुराणत्वमुपगन्तुमीहते।

पुराणानां सर्वग्राहकत्वं सर्वव्यापकत्वं च अनुपममस्ति। सनातनधर्मस्य श्रुतिः, स्मृतिः, पुराणमित्थं त्रिविधं प्रामाणिकपुस्तकमाम्नायते। श्रुतीनां वेदानां वा परब्रह्मणः साक्षान्निःश्वासभूतत्वात्तेषां रहस्यं न सर्वैरवगन्तुं शक्यमास्ते। वेदपुरुषा एव वेदान् साक्षात्कर्त्तुं प्रभवन्ति। येषां महात्मनामन्तःकरणे च सर्वज्ञानमयो वेदः पुरुषरूपेण विराजते त एव वेदार्थानां यथार्थज्ञानमवगन्तुमीशते। प्राचीनाः पूज्यपादा महर्षयो वेदाश्रयाद् निषेधविधिवाक्यैर्या धर्माज्ञाः स्मृतवन्तः ता एव स्मृतयः प्रोच्यन्ते। प्रायस्ताः सर्वा एव विधिनिषेधात्मकतया दुर्बोधत्वेन जटिलत्वमापद्यन्ते स्म, तेषामपि रहस्यं त एवाधिकारसम्पन्ना महापुरुषा अवगच्छेयुः, यैर्धर्मस्य यथार्थस्वरूपं सम्यगवबुध्यते। पौराणिकी वार्त्ता तु न तथा। पुराणेषु तु तत्त्वज्ञानैः सह मनोरञ्जककथोपाख्यानरोचकता-सद्भावात् पुराणग्रन्थाः सर्वविधानामधिकारिणां चित्तान्याकर्षन्ति।

यदि बालवृन्दं पुराणं पठेत् तदा तस्य सौजन्यवृद्धिपुरस्सरं भाविजीवनस्य पुण्यमयः पन्थाः स्पष्टमक्षिगोचरो भवेत्, यदि पुरुषाः पुराणशास्त्रस्य स्वाध्यायं विदधीरन् तदा तेषां पुरुषार्थः कर्त्तव्यनिष्ठा च विवर्द्धेत। पुराणपाठप्रभावात् स्त्रीणां हृदयेषु गृहिणीधर्मस्योदयो भवेत् पातिव्रत्यबीजं च दृढ़मूलमुपजायेत। राजनीतिः प्रायो यथासमयं परिवर्त्तते, ततो राजनीतिवर्णनप्रसङ्गे केनाऽपि कविनोच्चैरुट्टङ्कितम् "पण्याङ्गनेव नृपनीतिरनेकरूपा" इति।

किन्तु पुराणेषु ये राजनीतेः सामान्यसिद्धान्ता उपवर्णितास्ते त्रिकालाऽबाधिता विद्यन्ते। यदि संसारस्य सर्वदेशीया भूतकालीना अर्वाचीना च राजनीतिकपरिस्थितिः परिशील्येत तदा तत्कार्यकारणरहस्यं पुराणेषु नूनं लोचनगोचरतामापद्येत। तथैव सामाजिकविज्ञानस्यापि सर्वे मूलसिद्धान्ताः पुराणेषु गुम्फिता विद्यन्ते। आदर्शसमाजव्यवस्थाया विवेचनमन्यत्र पुराणशास्त्राद् दुर्लभमास्ते।

अध्यात्मज्ञानैस्तु पुराणानि प्राचुर्येण प्रपूर्यन्ते, यतः पुराणानि सर्वज्ञानमयानां वेदानां भाष्यरूपाणि विद्यन्ते। मुक्तिरेव मानवजातेरन्तिमं लक्ष्यमुचितमिति त्रिकालदर्शिभिर्महर्षिभिः सांसारिकदुःखान्यवलोक्य निश्चितम्। मुक्ति विना नात्यन्तिकसुखलाभो भवितुमर्हति, सर्वे च मानवाः सुखार्थमेव प्रवृत्ता दरीदृश्यन्ते। भारतवासिभिर्यन्निसर्गतो निःश्रेयसमेवान्तिमलक्ष्यमाम्नातम्, एष पुराणानामेव महनीयमहिमा वर्त्तते। पृथिव्या अन्यमनुष्यजातयो लौकिकमभ्युदयमुपेत्य मदगर्विताः प्रमत्ता नश्यन्ति भ्रश्यन्ति च, किन्तु भारतवर्षीया आर्यजातिश्चिरकालात् स्वं स्वरूपमभिरक्षति। एतत् प्राचीनमितिहासमारभ्य नवीनेतिहासं यावत् सर्व एवेतिहास उदूर्ध्वबाहुः प्रमाणयति। आर्यजातावेतज्जीवनशक्तिसञ्चारकार्यं पुराणैरेव सम्पादितम्। ऐहिकपारलौकिकाभ्युदयस्य तदन्ते निःश्रेयसप्राप्तेश्च यदि किञ्चित् सुलभं साधनं स्यात्तत्तु केवलं पुराणशास्त्रावलम्बनमेवास्ते।

पुराणशास्त्रस्य सर्वाधिकारित्वं तस्य वैलक्षण्यं स्वस्वान्तस्य यथार्थभक्तिगोचरमुद्‌गारञ्चोद्भावयता भगवता श्रीवेदव्यासेन व्याहृतम्—

> रूपं रूपविवर्जितस्य भवतो ध्यानेन यत् कल्पितम्,
> स्तुत्याऽनिर्वचनीयताऽखिलगुरो ! दूरीकृता यन्मया।
> व्यापित्वं च निराकृतं भगवतो यत्तीर्थयात्रादिना,
> क्षन्तव्यं जगदीश ! तद्विकलतादोषत्रयं मत्कृतम् ॥

यथा पुराणानि विश्वरूपेणोपमितानि तथैव तेभ्यो लौकिकरीत्या समुद्रस्योपमाऽपि दातुं शक्यते। पुराणसागरमन्थनाद् हालाहलं गरलमपि निःसर्त्तुमर्हति अमरकारकममृतमपि। सुराऽपि निःसरेत् सुधांशुरपि। लक्ष्मीः समुद्भवेत् निरर्थकः शंखोऽपि। पुराणपाठावसरे पाठकैरेतन्नूनं प्रणिधेयं यत् पुराणविषयं प्रतिपादयता श्रीव्यासदेवेन समाधिभाषा लौकिकीभाषा परकीया च भाषा प्रयुक्ता, एतद्रहस्यमज्ञात्वा स्थूलदृष्ट्या पुराणपाठं प्रकुर्वाणैर्जनैर्यत पुराणेषु नानाविधमाक्षेपवाक्यकदम्बमुत्क्षिप्यते तेषां पुराणपयोधिविलोडनेन सुरा, गरलं, केवलः शंखो वा करे आयाति। सुधा, सुधांशुः, लक्ष्मीर्वा ततो बहुदूरमेवावतिष्ठते।

नास्मिन् विषये केवलमाक्षेपकाणामेवाधिको दोषः। यतो येऽज्ञानिनामज्ञाननाशं कर्तुं शक्नुवन्ति नाद्यावधि ते स्वीयां शक्तिं यथोचितमत्र प्रयुक्तवन्तः। नैव सर्वे आक्षेपका हठिनो भवन्ति, तेषु बहवोऽधिकांशतो जिज्ञासवो भवन्ति। किन्तु तज्जिज्ञासातृप्तेरभावात् पुराणेषु तेषां

भ्रमोऽज्ञानं वा न निर्मूलमुपजायते। ततः सर्वमङ्गलमयपुराणशास्त्रप्रचार-कार्येऽनल्पा क्षतिरुपजायते।

श्रीभारतधर्ममहामण्डलसञ्चालकानां चित्ते चिरात् प्रबलेयमिच्छाऽऽसीत् यत् पुराणानामेतादृशाः टीकाग्रन्थाः प्रकाश्येरन् यतो वेदभाष्याणां पुराणानां यथार्थस्वरूपं विद्वज्जनैरवगम्येत। तथा पुराणानां त्रिविधभाषाः त्रिविधभावान् पौराणिककथाकदम्बैः सह ऐहलौकिकवंश्यानां दैवलौकिकवंश्यानां च चरितानां सम्बन्धं तत्र दैवसृष्टेर्मानवसृष्टेश्च द्वयो रहस्यवर्णनमित्यादि माधुर्यमयीं वर्णनशैलीमनायासं सुधियोऽवगच्छेयुः। श्रीमहामण्डलप्रधानव्यवस्थापकानां परमपूजनीय-श्रीस्वामिचरणानामेव आदेशो वर्त्तते यत् साधनाभाव-सत्त्वेऽपि पुरुषार्थतो न वैमुख्यं विधेयमिति। ततस्ते विविधबाधाविपत्तिभिः प्रतिपलं निरोध्यमाना अपि नैकसंहिताग्रन्थानां नाना गीताग्रन्थानाम् अनेक-दर्शनभाष्यग्रन्थानां प्रकाशनं तथाऽन्यान्य-लुप्त-ग्रन्थानामुद्धारादिकार्यञ्च यथा दृढव्रताः सन्तः सम्पादयन्ति तथैवायं पुराणटीकाग्रन्थः 'पुराणरहस्यनाम्ना' प्रकाशितो बोभूयते। सर्वतः प्रथमं श्रीमार्कण्डेयपुराणस्यैव टीकाग्रन्थः 'पुराणरहस्यस्य' प्रथमखण्डे प्रकाशितोऽभूत्।

श्रीभारतधर्ममहामण्डलस्य शास्त्रप्रकाशविभागेनालौकिकैर्यत्नैः सर्व-प्रथमं श्रौतदार्शनिकमीमांसात्रयशास्त्रेषु या न्यूनताऽऽसीत् सा प्रापूर्यत। तथा हि कर्मकाण्डीयमीमांसाया उपासनाकाण्डीयमीमांसायाश्च सूत्रग्रन्था उपलब्धाः साम्प्रतं संस्कृतभाष्यसहिता मुद्रिता भवन्ति। कर्ममीमांसायाः-प्रथमं खण्डद्वयं मुद्रितं प्रकाशितञ्चाभवत्। योगशास्त्रप्रपूर्त्तये मन्त्र हठ-लय-राज-योगसंहितानां चत्वारो ग्रन्थाः प्रणीयमानाः सन्ति, येषु ग्रन्थद्वयं प्रकाशितमपि जातम्। उपासनायाः समन्वयार्थं तद्दृढिम्ने च शम्भु-विष्णु-धीश-सूर्य-शक्ति-गुरुगीतानां ग्रन्थसमूहः प्रकाशितोऽभूत्, संन्यासाश्रमिणां कल्याणकृते सन्न्यासगीताऽपि प्रकाशिता। संन्यासाश्रमस्य पद्धतिग्रन्थाश्च क्षिप्रमेव प्रकाशिता भविष्यन्ति। वैदिकसप्तदर्शनानां 'प्राञ्जलभाष्याणि वेदान्तस्य समन्वयभाष्यञ्चाधिकांशतः प्रणीतानि क्रमशः प्रकाश्यन्ते च। इत्थं संस्कृत-भाषाया बहुमूल्यानि अप्रकाशितानि च ग्रन्थरत्नानि श्रीमहामण्डलीय—शास्त्र-प्रकाशविभागद्वारा नियमतो मुद्रितानि निरन्तरं विद्वज्जनमोदं विवर्द्धयन्ति। एवं हि सर्वविधाधिकारिणां कल्याणनिमित्तं पुराणशास्त्रस्यापूर्वोऽयं टीकाग्रन्थो वेदार्थप्रतिपत्तये पुराणमहत्त्वप्रकाशनाय सनातनधर्मगौरव-विवर्द्धनाय च लोकसेवायामुपस्थाप्यते।

सर्वप्रथमं मार्कण्डेयपुराणस्य टीकाग्रन्थप्रकाशने एतदेव कारणं विद्यते यत् पुराणमिदमन्यमहापुराणैर्व्यासतः प्रतिपादितं महत्त्वपूर्णं सर्वं विषयं समासतः प्रतिपादयति। पुराणमिदं सर्वसम्प्रदायानां विरोधं परिहरति, हृदयग्राहि-मधुरभाषायां वेदानामतिगूढरहस्यं विवृणोति, ऐहिकामुष्मिकज्ञानराशिभिः प्रपूर्यते च।

एष सर्वसम्मतः सिद्धान्तो यदेवंविधो विशदपुराणटीकाग्रन्थो नाद्यावधि कुत्रापि प्रकाशितोऽभूत्। एतेन विद्वांसो वेदानां रहस्यं सनातनधर्मस्य गूढविज्ञानञ्चावगत्य कृतकृत्या भविष्यन्ति। संस्कृताध्यायिनो विद्यार्थिनश्चाल्पप्रयासेनैव ज्ञातशास्त्रसारा बहुश्रुता लोकोपयोगिनो भविष्यन्ति। वैदिकमतानुयायिनामवैदिकमतानुयायिनाञ्च सर्वेषामेव चित्तेषु पुराणेषु यः शंकासमूहः समुत्पद्यते, एतदध्ययनेन तस्य सर्वस्य सम्यक् समाधानं सम्पत्स्यते। ब्राह्मणोऽस्य पाठेन ब्रह्मविद्यां लप्स्यते, गुरवः पुरोहिताः कर्मकाण्डिनश्च स्वस्वधर्मपालने यथोचितं साहाय्यमाप्स्यन्ति। प्रवृत्तिमार्गाधिकारिणो गृहिण एतदनुशीलनेन स्वधर्मपालने यथेच्छं साहाय्यमेष्यन्ति, निवृत्तिसेविनः सन्न्यासिन एतत्पाठेन औपनिषदतत्त्वानि ज्ञातुं सुगममार्गमेष्यन्ति, सर्ववर्गीया उपासकाश्च उपासनाया रहस्यमनायासमवबोद्धुमीशते। संस्कृतज्ञो जन इमं पुराणरहस्यनामकं ग्रन्थमधीत्य कृतार्थो भविष्यति।

विनीतः—
अन्नदाचरणशर्मा तर्कचूडामणिः
( महामहोपाध्यायः महामहाध्यापकः )

ललितापञ्चमी १९९० वै०



# पुराणरहस्यान्तर्गतविषयाणां अनुक्रमणिका ।

ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधाकृतम् ।
एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति ॥
यत्र वेदध्वनिध्वान्तं यत्र गोभिरलङ्कृतम् ।
यत्र बालैः परिवृतं श्मशानमिव तन्नगरम् ॥

नवमे वर्षे } कार्त्तिकस्य पूर्णिमा सं० १९९० { पञ्चम-संख्या

# मङ्गलाचरणम् ।

(१)

सुरासुरासेवितपादपङ्कजाम्
करे विराजत्कमनीयपुस्तिकाम् ।
सिताब्जभासां कमलासनप्रियाम्
सरस्वतीं नौमि सदाऽभयप्रदाम् ॥

(२)

हंसैर्जुष्टे सिताब्जे विनिहितचरणा स्वच्छकर्पूरभासा
नानालङ्कारशोभा सितसुभगमुखा मौक्तिकोद्भासिनासा ।
भाले बालेन्दुलेखा करतलविलसत्पुस्तिका शुभ्रवासा
विद्याधिष्ठातृदेवी जयति सुरगणैरर्चिता शारदा सा ॥

(३)

शुद्धान्तमब्जप्रभवस्य कोमलम्
सिद्धान्तमध्यात्मजुषां सनातनम् ।
वीणाधरं ज्ञानसुधाकरं परम्
महस्तु शोणाधरमानतोऽस्म्यहम् ॥

(४)

सर्वदा सर्वदाऽम्भोजवदने वदने सती ।
शारदे शारदे काले सन्निधिं सन्निधिं कुरु ॥

कीर्त्तनं श्रवणं दानं दर्शनं चापि पार्थिव ।
गवां प्रशस्यते वीर सर्वपापहरं परम् ॥
निविष्टं गोकुलं यत्र श्वासं मुञ्चति निर्भयम् ।
तं विराजयते देशं पापं चास्यापकर्षति ॥
मया गवां पुरीषं वै श्रियाजुष्टमिति श्रुतम् ॥

—महाभारतम्

"आइने अकवरी" नामधेयस्य पुस्तकस्यावलोकनेन ज्ञायते यत् अकबरमहोदयस्य शासनसमये एकेन आणकेन सेटकपरिमितं घृतं, दशभिराणकैर्मणपरिमितं दुग्धं च भारतेऽत्र लभ्यते स्म। इदानीं भारते गवां घृतस्य दुग्धस्य वा सर्वथा अभाव एव लक्ष्यते। खिद्यते चेतो यदत्र देशे सम्प्रति आस्ट्रेलियातो नवनीतं दुग्धं च समायाति, तेन भारतीया बालका अन्ये च स्वीयं जीवनं धारयन्ति। शुद्धस्य घृतस्याभावतो यज्ञानां फलं न लभ्यते, समयानुसारिणी वृष्टिरपि न भवति। भारते सदैव दुर्भिक्षस्य प्रबलः प्रकोपो दृश्यते। भारतमिदं गोहीनं गव्यविहीनं च जातम्। अत्र देशे गोचर्मव्यापारस्य दिनानुदिनं वृद्धिर्दृश्यते। Imperial Gayetteer of India Vol. III, P. 189 इत्यस्य निभालनेन आशास्यते यत् पञ्चाशद् वर्षानन्तरं चित्रेष्वेव गोमातुर्दर्शनं मिलिष्यति। कूर्चचिक्कणीकरणार्थमपि गोघृतं न लप्स्यते।

नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च।
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमोनमः ॥
गवि पश्याम्यहं नित्यं, गावः पश्यन्तु मे सदा।
गावोऽस्माकं वयं तासां यतो गावस्ततो वयम् ॥

---

## आन्दोलनमावश्यकम् ।

—०*०—

विहारे, उत्कलप्रान्ते, बङ्गदेशे, संयुक्तप्रदेशे, भारतस्य वर्षस्य अन्येषु प्रदेशेषु वा तत्रत्यां संस्कृतभाषायाः सर्वोत्तमां] परीक्षां ये सुरसरस्वतीसेवकाः समुत्तरन्ति, ते यदि बी० ए० परीक्षायाः आङ्गलभाषाप्रश्नपत्रस्यैव केवलम् उत्तरं दत्त्वा, तत्र च समुत्तीर्णाः, बी० ए० इत्युपाधिधारिणो भवेयुस्तर्हि अतीव शोभनं स्यात्। तेषु तेषु प्रान्तेषु तादृशनियमविधानस्य महती आवश्यकता प्रतीयते। एतेन संस्कृतसेवासम्पादनशीलेषु सुधीधौरेयेषु राजभाषाया आङ्गल्या अतीव सारल्येन सुमहान् प्रचारः सम्भवेत्, राज्ञः प्रजायाश्च उभयोरेव

हितं सिध्येत् । परस्परहार्दिकभावानामादानप्रदानेन नितरां प्रीतिरपि प्रवर्द्धेत । पञ्चाम्बुनदप्रान्ते ये संस्कृतज्ञा विद्वांसः शास्त्रिपरीक्षामुत्तरन्ति, ते किल बी० ए० परीक्षायाः केवलम् आङ्गलभाषाप्रश्नपत्रस्य समुत्तरं विलिख्य, तत्र च उत्तीर्णतां लब्ध्वा बी० ए० इत्युपाधिधारिणः सन्तः 'ग्रेजुएट'-समानाधिकाराः सर्वत्रैव शिक्षाविभागकार्यकलापे भागं गृह्णन्ति । शिक्षाप्रेमाणो महोदयाः सर्वेष्वेव भारतवर्षस्य प्रान्तेषु तदर्थमान्दोलनमान्दोलयिष्यन्तीत्याशास्महे ।

---

## निरतरां खटखटायते ।

निखिलस्यापि विहारप्रान्तस्य राजधानीभूते पाटलिपुत्रस्थाने ( पटनानगरे ) संस्कृतमहाविद्यालयस्य ( राजकीयस्य गवर्न्मेण्ट संस्कृत कालेज ) अभावः कस्य सहृदयस्य चेतांसि न दुनोति ? विहारप्रान्ते खलु व्यतीतादाबहोः कालात् इदानीं यावत् संस्कृतसाहित्यागाधमहोदधिमन्थनमन्दरायमाणाः संख्यातीता महामहिमशालिनो विद्वद्धौरेया जन्म लेभिरे लभन्ते च । अत्रैव प्रान्ते गौतम-शाण्डिल-पाणिनि-प्रभृतयो महात्मानो महर्षयो बभूवुः । अत्रैव प्रदेशे चाणक्यादयो नीतिशास्त्रकोविदाः समुत्पेदिरे । सुरसरस्वत्या अधःपतितावस्थायामपि विहारप्रान्तसमुत्पन्नस्य उदयनाचार्यस्य—

"वयमिह पदविद्यां तर्कमान्वीक्षिकीं वा
यदि पथि विपथे वा वर्त्तयामः स पन्थाः ।
उदयति दिशि यस्यां भानुमान् सैव पूर्वा
नहि तरणिरुदीते दिक्पराधीनवृत्तिः" ॥

इत्युक्तिं को वा संस्कृतमर्मज्ञो न जानाति । एतादृशविदुषां जनकस्य विहारप्रान्तस्य सर्वश्रेष्ठे स्थाने संस्कृतमहाविद्यालयस्याभावो नितरां खटखटायते ।

---

## जातिप्रथायां मिस्टरविलियमः ।

मिस्टरविलयममहोदय एक आङ्गलदेशीयो विद्वान् । अयं हि आर्यजातीयानां जातिप्रथायाः पूर्णरूपेण समर्थकः अस्ति । जातिप्रथासमर्थनविषये

विलियममहोदयस्यैको लेखः प्रायो बहुषु समाचारपत्रेषु समुदितो निभालितः । स च लेखो हिन्दीभाषायां निबद्धः । अभिप्रेतविषयप्रतिपादनं तु विलियम-महोदयेन विद्वत्तापूर्णंच कृतमास्ते । आङ्गलदेशवासिनां हिन्दी भाषा कीदृशी भवतीति प्रबन्धपठनेन पाठकै र्ज्ञातुं शक्यते । प्रबन्धप्रतिपादितया सुमनोमनोहारिण्या युक्तया साकं विदेशीयलिखितहिन्दीभाषायाः स्वरूपमवलोक्य सूर्योदय-पाठकाः प्रसीदेयुरिति तत्प्रबन्धो हिन्दीरूपो मया अधोभागे समुद्ध्रियते । हिन्दी-भाषानभिज्ञानां कृते एतत्प्रबन्धसारांशोऽपि संस्कृतभाषयाऽनूदितः प्रबन्धान्ते प्रदत्तो वर्त्तते ।

"अब बूड्ढा आदमी होनेपर हम सोचता, और देखता, कि जात ( Civilisation ) सभ्यताका ( Sign ) चिन्ह है । जो लोग इतिहास खूब पक्का पढ़ा, वे जानता है, कि एरियन लोगका सभ्यता ( Civilsation ) सबसे पुराना है । एक बात और है, कि उसके समयका दूसरा सभ्यता अब जिन्दा नहीं है । कोई साहब बोलता है, कि एरियन लोगका सभ्यता सबसे पुराना नहीं है, लेकिन वह साहब हिन्दुस्तानका पुराना इतिहास नहीं पढ़ा । अगर पढ़ता, तो नहीं बोलता ।

"लोगको सोचना चाहिये, कि क्या बात है, कि हिन्दू लोगका इतना बूढ़ा सभ्यता जीता है और दूसरे लोगका जवान मर गया । आजकल डाक्टर बोलता है, कि ( Nature ) प्रकृतिके मोताबिक चलो, तो बहुत जियेगा । हम देखता है कि हिन्दू सभ्यता प्रकृतिके मुताबिक है, इसीसे बहुत जीता है और अभी जवान है । इसको जात मरने नहीं दिया । अगर जात इस मुल्कमें नहीं होता, तो यह सभ्यता भी मर जाता । हिन्दूसभ्यताको न मरने देनेके लिये मुनि लोग जातका किला बनाया और इसमें सब हिन्दूको रखा । मुनि लोग देखा कि गाछके जीनेके लिये जड़, पत्ता, डण्टल वगैरह आदमीके जीनेके लिये पाँव, पेट शिर आदि है । तो हिन्दू सभ्यताके जीनेके लिये इसमें भी भाग चाहिये । तो चार भाग ब्राह्मण, क्षत्रिय, वैश्य, शूद्र बनाया और स्वभावके मुताबिक काम बाँट दिया । अब काम अपना करने लगा और हिन्दू सभ्यता जिन्दा है । जिनमें भाग नहीं वह सुभावके खिलाफ था, मर गया । हम देखता है, कि हिन्दू मुनि लोग बहुत बहुत विज्ञान ( Science ) जानता था । साहब लोग जिसको Division of Labour ( श्रम विभाग ) बोलता है, वही हिन्दू जातका है और उस बातको बहुत पहले जान गया ।

"अगर जात नहीं" होता, तो मुसलमान और पादरी लोग सबको धरम ले लेता। मगर जातका रखासे हिन्दू लोग ऐसा कला है कि कोई उससे निकल नहीं सकता। जिसको लायक नहीं समझकर हिन्दूलोग निकाल देता है, वही दूसरा धरममें जाता है यही वजह है कि अच्छा जातका हिन्दुस्तानी इसाई कम मिलता है। हम देखता है कि जात हिन्दू लोगके बचनेके लिये किला है। इस किलाकी वजहसे ही बहुत कम जातवाले धरम दिया। धरमके लिये बहुत कम लोग कृस्तान हुआ, हुआ तो रूपये और मेम लोगकी तरह रहनेवाली लड़कियोंके लिये।

"हिन्दूलोगमें मुनिलोग ऐसा इन्तजाम किया ब्राह्मण वेद पढ़े, क्षत्रिय फौज़ हमेशा लड़ाईके लिये तय्यार, वैश्य हमेशा व्यवसायके लिये तैयार, शूद्र हमेशा सेवाके लिये तैय्यार, ऐसा अच्छा इन्तजाम दुनियामें नहीं है। लेकिन अंग्रेजी पढ़ा लोग साहबका चाल पसन्द करता है, इसलिये इस किलाको तोड़ना माँगता है। लेकिन यह किला टूटने नहीं सकता, ढीला हो सकता है। करोड़ों मुफस्सिलका लोग यह किला तोड़ने नहीं देगा। सब देशमें जात है। हमारा मुल्कमें लेबर, लार्ड यह सबका भी जातका दूसरा रूप है। एक जात तोड़ेगा, तो दूसरा जात पैदा होगा। जात जरूर रहेगा। हम देखता है, कि अंग्रेजी पढ़ा लोग जो जात तोड़ना माँगता है। वह गलती करता है, जात स्वभावकी चीज है। यह कभी नहीं टूट सकता।"

पौरस्त्या सभ्यता सर्वतः प्राचीना। तथाभूतामेतां ते न मन्यन्ते,ये पौरस्त्यं प्राचीनमितिवृत्तं न जानन्ति।

हिन्दूनां जरती सभ्यता जीवति, पाश्चात्यानां युवती सभ्यता मृतेति किं कारणमत्र? हिन्दुसभ्यता प्राकृतिकी, अत एव चिरंजीवति। जातिविभागो हि हिन्दुजातिं सर्वदा संरक्षति। वृक्षादीनां स्थावराणां मानवादीनां जङ्गमानां च जीवानां दीर्घजीवनार्थं यथा तदीयाङ्गप्रत्यङ्गविभागानामत्यावश्यकत्वं, तथैव जातेश्चिरजीवनार्थं ब्राह्मण-क्षत्रिय-वैश्य-शूद्रादीनामङ्गप्रत्यङ्गानां संरक्षणं नितरामावश्यकम्। सर्वमिदं भारतीयमहर्षीणां दूरदर्शित्वमेव, यैर्जातिविभागेन-हिन्दुजातिः चिराय जीवन्ती कृता।

यदि हिन्दुषु जातिप्रथा न अभविष्यत तर्हि माहम्मदखिस्तधर्मप्रचारकैः हिन्दुधर्मो नाशितोऽभविष्यत्। हिन्दुभिः पतितान् मत्वा ये स्वजातितो बहिष्क्रियन्ते, त एव माहम्मदाः खिस्ता वा भवन्ति, हिन्दवो द्रव्य-मेम-लोभेन खिस्ता भवन्ति, न जातिधर्मलोभेन।

आङ्गलशिक्षाविकृतमनसो भारतीया अपि केचन मानवा आङ्गलीं-रीतिं बहुमन्यमाना जातिप्रथां नाशयितुं चेष्टन्ते! किन्तु नेयं जातिप्रथा ध्वंसयितुं शक्यते। आङ्गलदेशेऽपि 'लेबर-लार्ड'-प्रभृतयो जातिविभागाः सन्ति। नेयं जातिप्रथा कथमपि प्रयत्नशतेनापि नङ्क्ष्यति। ये तां विनाशयितुं प्रयतन्ते, ते भ्राम्यन्ति।

---

## समस्या-पूर्त्तयः।

### "जीवनं भारभूतम्"।

भास्वद्भावा त्रिविधसुखदा यैस्तु गीता न गीता।
स्वातन्त्र्यं वा भरतधरणी यै र्विनीता न नीता॥
नो वा गङ्गा सुकृतजननी गौर्न गोविन्दमूर्त्ति-
र्दृष्टा, तेषां नरतनुभृतां "जीवनं भारभूतम्"॥

### "दीपावली"

कैश्चिद्धन्त कुबुद्धिभिः कवलितं काम्यं कलाकौशलम्
हंहो कैश्चन नाशितं सुविपुलं वाणिज्यविद्यावलम्।
सर्वस्वं समयेन संचितमिदं स्वाहाकृतं कैश्चन
मृत्तैलाप्तकलेवरा ज्वलति तद्दुःखेन "दीपावली"।

### "शेरते"

वापीं कर्दमयन्तु नित्यफलदान् उन्मूलयन्तु द्रुमान्,
तावत् काममुपद्रवन्तु समदा रेरे गजश्रेणयः!
युष्मत्कुम्भकपाटपाटनपटुप्रोच्चण्डवक्त्रस्वनाः,
यावन्नन्दनकाननेऽत्र परितः कण्ठीरवाः "शेरते"॥

—श्रीविन्ध्येश्वरीप्रसादशास्त्रिणाम्।

---

# धर्म्मदुर्गत्राणायाऽस्मत्पूर्व्वजानां दूरदर्शित्वम्।

प्रणेता—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री शुजाबादाऽभिजनः।
( 'मुलतान' स्थ-श्रीसनातनधर्म्मसंस्कृतकालेजाऽध्यापकः )

—:०⁂०:—

अस्मदीयपूर्व्वजा यत्र यत्र विषये नियमकाठिन्यं वितेनुः; तत्र २ तैर्व्वैज्ञानिकलाभा आस्माकीनरक्षा, अस्मज्जात्यस्तित्वस्थापनविचाराश्च विचिन्तिता बभूवुः। तस्य सुफलमेतदेव जातम्; यद्-आस्माकी जाति×परस्कोटिवर्षेभ्य×प्रवृत्ताऽद्यापि नैजीमक्षुण्णां स्थितिङ्कलयतीव। एतस्मिन्नन्तरे अन्या बह्वयो जातय उत्पन्नविनष्टाः; किन्तु नेयम्; अत एवाऽस्या नियमानां स्थैर्य्यं लाभजनकत्वञ्च प्रत्यक्षमेव। अस्यां बौद्ध-धर्म्मस्याऽऽक्रमणञ्जातम्, यावना घोरात्याचारा आपतन्, ईशवीयानां सम्मोहनास्त्राणि सम्पेतुः तथापीयं यन्न नष्टा, नवा क्षुब्धा(१) नचाऽपि भ्रष्टाऽजायत; तत्रैकमात्रं कारणमस्मदीयपूर्व्वजानां शेमुषीशालिता, तेषामेव दूरदर्शित्वं नान्यत्। तैरस्माकमेव त्राणाय यत्र तत्र काभिश्चिज्जातिभिरस्पृश्यताऽपि निर्दिष्टा; न तत्र द्वेषो घृणा वा कारणं किन्तु स्वस्वधर्मरक्षैव, अथवा तत्र तत्र वैज्ञानिकलाभं ते स्वदूरदृष्ट्याऽवालुलोकन्, अत एव तेऽस्पृश्यतां न्ययमयन्। यद्यपि ते प्रकारान्तरेणाऽपि तत्तज्जातिभिर्व्यवहारनिषेधङ्कर्त्तुमलम्भूष्णव आसन्; परं स्थूलदृग् लोलस्तदाचरणे प्रमत्त उपेक्षावान् वाऽभविष्यत्। तत्र अस्पृश्यतैव एतादृग्भित्तिरस्ति; या स्थूलसूक्ष्मदृशां मनुतनुजनुषां विनाऽपि वक्तृत्वं व्यवहारनिषेधिका वर्त्तते। तस्या एव सुपरिणतिरियम्; यदद्याऽपि द्विजातिजातिशुद्धताया असाङ्कर्य्यस्य वा गर्व्वमिबर्भत्ति। अमुष्या एव परिणामोऽयं यद्-वयं स्वस्माद् भिन्नधर्म्मवतां राज्ये भूयिष्ठानत्याचारान् प्रपद्यमाना अपि तैर्निगीर्णा नाऽजनिष्महि। अस्यामस्पृश्यताभित्तावसत्यां सर्व्वाभिर्जातिभिस्समाने व्यवहारे जाते वयमपराभिर्जातिभिर्निगीर्णा एवाऽभविष्याम। अस्माकमद्य सत्ताऽपि नाऽभविष्यत्। एवमस्पृश्यताऽथवा नियमानां कठिनता लाभमूलिकैव सिद्धा; न द्वेषमूलिका।

---

(१) क्षुब्धा। 'नि लोट्' इति वक्तव्ये 'आनि लोट्' इति कथनेन ज्ञापितया 'आगमशास्त्रमनित्यम्' इति परिभाषयाऽत्रेडभावः। वस्तुतस्तु 'क्षुभिता' इत्येव शिष्टम्। मन्थार्थ एव 'क्षुब्धस्वान्ते' तीडभावः।

अत्रोदाहृतिः श्रूयताम्—अस्मत्पूर्व्वजैः स्त्रीणां रजस्वलात्वे पूर्व्वदिन-त्रिकपर्य्यन्तमस्पृश्यता न्ययम्यत। तत्र तैर्व्वैज्ञानिकलाभांस्तन्नियमभङ्गे हानि-भूयिष्ठताञ्च विविच्यैव तथा कृतम्। यदि ते तासामस्पृश्यत्वमनादिश्य, केवल-म्पूर्व्वदिनत्रितयकृते हानिरेव प्रदर्श्य निधुवन-निषेध-नियमं निरमास्यन्; तर्हि कामकामी स्थूलदृक् च लोको निरुद्धो नाऽभविष्यत्। तत्प्रमाणमेतदेव—यत्तै-र्ऋतुकालस्य षोडशदिवसाऽनन्तरमपि रजःप्रसरं यावत् स्त्रीसम्बन्धस्य निषेधो विहितो विद्यते, केवलमत्र तैरस्पृश्यता नादिष्टा; परङ्कामी लोकस्तस्मा-द्विरमति किमु? तेन पूर्वदिनत्रयकृतेऽस्पृश्यतायां तैरास्माकरक्षैवोद्देश्यम-चिन्ति। यदि केवलं रज एव कारणमभविष्यदस्पृश्यत्वे; तर्हि रजसो वेगस्तु सप्तदिनपर्य्यन्तं तिष्ठति, तस्य स्थितिश्च षोडशदिवसान् भवति, तत्तेष्वपि दिवसेष्वस्मत्पूर्व्वजैः स्त्रीणामस्पृश्यता नियमिताऽभविष्यत्! तेनाऽऽध्यात्मि-कहानिभूयिष्ठताकारणादेव तद्रक्षार्थं स्त्रीणामाद्यदिवसत्रयमेव तैरस्पृश्यता कृता; यतोऽग्रे हानिसम्भवस्तथा नाऽऽसीत्। तया साकमेव च तैर्धर्म्मस-म्बन्धोऽपि योजितः। तत्रैतत्कारणं यज्जना धर्म्मभीरवो भवन्ति। आधि-भौतिकरूपेण तथा निरोधोपदेशे तु जनानां भयं न स्यात्; तेनैव ते तदा प्रद-र्शिता लाभहानीरपि न विविञ्चन्ति; किन्तु स्वैराचारपरा एव भवन्ति।

एवमेवाऽस्मत्पूर्व्वजैः स्त्रीणां कृते ये कठिननियमाःकृता अपराऽस्प-र्शादिकस्य पुरुषाणामपेक्षया; तत्राऽपि कारणं वैज्ञानिकलाभा एव। ते वर्ण-साङ्कर्य्ये।आध्यात्मिकदशा बह्वीं हानिं ददृशुः। ते जानन्ति स्म; यत् पुरुष-कर्तृकनियमोल्लङ्घनेन तादृशी हानिर्न भवति; यादृक्ता स्त्रीकर्तृकनियमाऽति-क्रमणेन। यतः स्त्रिय एव वंशशुद्धतामूलम्। यदि तासु शुद्धता भविष्यति; तर्हि पुरुषाःकथमपि नियमानुल्लङ्घयितुम्प्रभवो न भवेयुः। अत एव तैः स्त्रीणां कृते कर्कश-संयमनियमा नियमिताः, यान् स्थूलदृगदूरदर्शी च सुधार-कगणो व्याख्यानमञ्चमञ्चन्नत्याचारानाख्यापयति। वस्तुतोऽयं निग्रहोऽनु-ग्रह एव।

एवमेव मलवाहकप्रभृतयो यदस्पृश्याःकृताः, तत्राऽपि उद्देश्यमास्मा-कीनरक्षैव। यदि तथा न कृतमभविष्यत्; तर्हि स्वैराचारो लोकस्तैस्सह रक्तसम्बन्धाद् यौनसम्बन्धाद्वा कथमपि विरतो नाऽभविष्यत्। तत्र प्रमाण-मेतदेव-यदद्यत्वे गान्धिप्रभृतीनामुपदेशं प्राप्य मलवाहकानामस्पृश्यताममत्वा केचित् कामकामाः स्त्रीरहिता वा जना गान्धिना 'रोटी बेटी' सम्बन्धेऽशिष्टेऽपि तदीयसुन्दरकुमारीभिर्यौनसम्बन्धं रक्तसम्बन्धं वा विधातुं प्रारप्सत इति

समाचारपत्रेषु प्रत्यक्ष एव वर्त्तमानो विस्मयमयस्समयः । अस्मदीयपूर्व्वजानां दृष्टिस्सीमिता नाऽविद्यत । ते जानन्ति स्म, यदेषां वासांस्येव न केवलं स्पर्शाऽनर्हाणि, प्रत्युत दुर्गन्धितपरमाणुपूर्णं शरीरमपि । कामं ते मलापकर्षणकृत्यं समाप्य शरीरं स्नानेन शोधयेयुः तत्र मलशोधकान्-( साबुन ) वा कामं घर्षयन्तु; परन्तेषां वपुष्योतप्रोताः परमाणवस्ते कथं व्यपगमयितुं शक्याः । प्रत्युत ते तु विदन्ति स्म, यदेषां सद्य उत्पन्नास्तनुजनुषोऽपि तथा सन्ति: यतो हि—

"अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे ।
आत्मा त्वं पुत्रनामाऽसि × × ×"( गो० गृ० सू० २ ८।२१ )

गुदाद्यपवित्रप्रदेशा जलेन शोधिता अपि अस्पृश्या एव तिष्ठन्ति; बाष्पयानानां प्रथमद्वितीयविभागे जलेन धौता अपि स्वच्छा अपि च पुरीषालया न भोजनाद्यर्थमुपवेष्टव्या भवन्ति; न वा पवित्रा मन्यन्ते । तेषाम् ( अस्पृश्यानां तादृश ) परमाणुपूर्णतायां लौकिको दृष्टान्तोऽप्येक इममर्थं पुष्णाति ।—"एको मलवाहकश्चिरात् तत्कर्म्म कुर्व्वाणः पुनरदस्तत्याज । कियत्समयाऽनन्तरं स ज्वरितः सन् बहुभिश्चिकित्सकैश्चिकित्सितोऽपि न ज्वरशान्तिमापेदे । ततश्चैकेनाऽनुभविना वैद्येनाऽसौ—'को भवान् किङ्कर्मा चे—'त्यनुयुक्तः सन् स्वजातिपरिचयं व्यतारीत् । वैद्य ऊचे-गच्छेतः, तदेव कर्म्म पुनः प्रारभस्व । तदेवौषधम्भवत्कृते । कतिपयदिवसानन्तरञ्चोपस्थाय स्वदशामाख्याहि—इति । फलतः पुनस्स तत्कर्म्म प्रारभमाणो ज्वरान्मुक्तो बभूव ।" तत्रैतदेव कारणम् यत् स परम्परातस्तत्कर्म्मा, कियन्तं कालं त्यक्ततत्कर्म्माऽपि तादृशैः परमाणुभिस्तादृश्यैव च प्रकृत्या पूर्ण एवाऽऽसीत् । तदीयं शरीरञ्च तत्कर्म्मणैव सम्बद्धं तदेवाऽऽकाङ्क्षति स्म; तेनैवाऽसौ जूर्तिजूतिजीर्णशीर्णतां भेजे । ज्वरसमये प्रकृतौ विकृतिरेवैति; यदा सा प्रकृतिस्थता शरीरम्पूर्व्ववत्प्राप्नोति; तदा स्वयमेव ज्वरः प्रशाम्यति ।

एवं लाभमूलाऽस्पृश्यता नाऽपरनरकदर्थनाय प्रवृत्ता; किन्तु स्वरक्षायायैव, शौचनामकधर्म्माङ्गपुष्ट्या एव । न चाऽपि ते अपि(१) (अस्पृश्याः)

(१) ते अपि । 'वाक्ये तु सा विवक्षामपेक्षते' इति दर्शयितुमत्राऽसंहितम् । सन्धौ तु 'एङः पदान्ता' दिति पूर्वरूपे 'तेऽपि' ।

इदं स्वकदर्थनं जज्ञिरे, किन्तु धर्म्मपालनमेव । अद्यत्वे यदस्पृश्याः स्वक-दर्थनं मन्वत एतत्; तत्र कारणं सुधारकाणां निन्दनीयोत्तेजकदुर्नीतिरेव, अन्यथा मध्यमसमयेऽपि तेषां कथमीदृशि आन्दोलनानि नाऽभविष्यन् ?

अस्पृश्यो यस्मान्मार्गादायान् भवति; वयमेव तस्मादपसरणकष्टं कुर्म्मो न तेभ्यो यथासम्भवमपसरणस्य कष्टं दद्मः । तैरस्पृष्टा वयमेव ( शीतकालिके वाते वाति सत्यपि ) स्नाम; न तेभ्यः स्नानकष्टदानं कुर्म्मः । तेषाङ्कृते पृथक् कूपादि-कान्निर्म्मित्सामो यदि; तर्ह्यस्मभ्यमेव व्ययकष्टं नेतरेषाम् । यदि वयं स्वपक्वमेव भोजनं भुञ्ज्महे, तर्हि स्वयमेव कष्टभाजो भवामो नान्यान् भावयामः । तत् कथं कष्टप्रदास्तेभ्यो वयं मन्यामहे ? अत्र केवलं सुधारकाणामेव दुश्चेष्टितम्; नाऽस्म-त्पूर्व्वजानाम्बालिश्यम् । सर्व्वैस्साद्धं समाना व्यवहृतिस्तेषां ( सुधारकाणां ) स्वप्नमात्रमेव । वैदिकम्मन्या अपि ते "अक्षण्वन्तः(२) कर्णवन्तः सखायो मनोज-वेष्वसमा बभूवुः" इति ऋग्वेद ८।२ ३४।२ मन्त्रमपि विस्मरन्ति । एकस्मिन् हस्त एव पञ्चाऽङ्गुलीनां यदि साम्यं न, दक्षिणवामहस्तयोरेव कर्म्मणां यदि सरूपता न; तर्हि मनुष्यमात्रे एवङ्कथं भवितुमर्हति । वयन्त्वेतद्वक्तुमुत्सहामहे यदस्पृश्य-ताया कारणादेव तेऽस्पृश्या अद्याऽपि धर्म्मे श्रद्धां स्थापयन्ति, शिखाधारि-णोऽपि च वर्त्तन्ति । यदा खलु सुधारका इमान् स्पृश्यान् विधास्यन्ति; तदेमे सुधारका इव धर्म्मेऽपि बद्धाऽश्रद्धा भविष्यन्ति शिखादिकचिह्नमपि त्यक्ष्यन्ति । एषां सुधारोऽदसीयार्थिकदशासुधारेणैव भवेदित्यसकृदवोचाम; तदनुसारं सनातनधर्म्माण एषामार्थिकदशासुधारकत्वाद्रक्षकाः, भक्षकास्त्वेतेषां सुधा-रका एव, य इदमीयाऽऽर्थिकदशाह्रसिम्नि निदानभूतास्सन्ति । कथमिति चेच्छ्रू-यताम्—

( क्रमशः )

---

( २ ) अक्षण्वन्तः । 'छन्दस्यपि दृश्यते' इत्यजादि-विभक्त्यभावेऽपि अनङ् । 'अनो नुट्' । 'न ङीपः प्रातिपदिकान्तस्य' । नुटः परादित्वेन पदान्तत्वाभावात् 'पदान्तस्ये' ति णत्वनिषेधो न । 'मादुप-' इतिमतोर्वः ।

## विज्ञापनम्।

ले०—श्रीपुरुषोत्तमनारायण वीरकर, बी० ए०।

—:o:—

अगणितान्पतितानपि लीलया
पतितपावन ! रक्षितवान्भवान् ॥
भवत एव मनः करुणं, मया
यश इदं विमलं तव विश्रुतम् ॥ १ ॥

तदधुना यदुनाथ ! परित्यजन्
शठमयीमखिलामपि मेदिनीम् ।
गुणनिधे ! चरणं समुपैमि ते
सुखकरं विमलं कमलोपमम् ॥ २ ॥

सकलवित् ! परतन्त्रतयाऽधुना
परमपीड़ितभारतवासिषु ।
सुमनसोऽपि मनो मृदुलं तव
प्रकुरुतां करुणां करुणाकर ॥ ३ ॥

नित्यं शकुन्ताः पशवोऽपि सर्वे
स्वातन्त्र्यजानन्दसुधां पिबन्ति ।
स्वभूमिदेव्यास्तु वयं कुमाराः
सेवामहे सम्प्रति पारतन्त्र्यम् ॥ ४ ॥

वेणुं धृत्वाऽधरकिसलये नादयन्मञ्जुनादं
प्रीत्या नित्यं वरद ! कृतवान् धेनुसंरक्षणं त्वम् ॥
अद्य त्वन्ये विगतकरुणा घ्नन्ति ता एव धेनूः
प्रेक्ष्यापीदं कथय न कथं दीर्यते मानसं ते ॥ ५ ॥

क्षुधायाः पीडेयं मरणपथमाकर्षति जनं
न वाऽसौ पर्याप्तं मुरहनन ! वासोऽपि लभते ॥
इमां दृष्ट्वाऽवस्थामतुलमहिमन् ! पुष्पसदृशं
दयार्द्रं ते चित्तं भवति भगवन् हन्त न कथम् ॥ ६ ॥

यथा तारकामण्डले पूर्णचन्द्रः
तथासीत् पुरा भारतं सर्वदेशे ।
स एव प्रभावान् कथं हिन्दुदेशः
प्रयातोऽधुनाऽतीव दीनामवस्थाम् ॥ ७ ॥

सविता यथाऽपि भगवन् ! अस्तं गत्वाऽपि पुनरुदेति तथा
उत्कर्षाचलशिखरे विलसतु दयितः पुनर्भरतदेशः ॥ ८ ॥
विज्ञप्तिमिमां करुणां कुर्वन् नारायणस्य तनयोऽयं
नवक-वनकुसुमहारं समर्पयति चरणपङ्कजाभ्यां ते ॥ ९ ॥

———

# स्वर्गीयश्रीडुमराँवमहाराजशोकोच्छ्वासः।

( ले०· राजगुरु पौत्र, काव्यतीर्थ पण्डित मुक्तिनाथमिश्रः। )

वर्षे शून्यनवाङ्कभूपरिमिते पक्षेवलक्षे शनौ
मासे चाश्विनके गणाधिपतिथौ रात्रौ धरामण्डले।
ऐश्वर्य्यं प्रचुरं तथा निजवपु र्हित्वा स्वकीयाः प्रजाः
प्राप श्रीपतिमन्दिरं सुरगणैराराध्यमानं सदा ॥ १ ॥
हा कष्टं नितरां न राजति धरा शून्याऽधुना सर्वतः
सम्पत्संचयपूरितं च सदनं सौन्दर्य्यमूलाऽपहम्।
जातेयं नगरी भृशं हतकला शोकाकुला बान्धवाः
स्वर्याते भवति प्रजागणपते! कैवल्यसम्प्राप्तये ॥ २ ॥
उद्यानं विविधप्रसूननिचयै रम्यं विलीनप्रभम्
येऽमात्यप्रमुखा विमर्शनपरा ह्रासं गतास्तेऽप्यहो।
दासीदासजनाः समश्रुपतनैः सम्पीड्यमानाशयाः
किञ्चैकाधिपतिं विना बहुतरं राज्यं हि शोकाकुलम् ॥ ३ ॥
हा धात र्नहि ते दया हृदि कथं यस्मादकस्मादियं
जाता संघटनासमस्तजनता मूर्च्छावहा सत्वरम्।
संसारः खलु मायया विरचितो मिथ्यास्वरूपस्त्वसौ
तत्रादौ जननं तथैव निधनं जीवस्य निर्धारितम् ॥ ४ ॥

# छपरा-मण्डले मया किं दृष्टम्।

( ले०—दर्शनकेशरी, श्रीगोपालशास्त्री त्रिपाठी, साहित्याचार्यः, व्याकरणशास्त्री, न्यायतीर्थः, दर्शनविद्यालयः, काशी )

ऐषमो विहारोत्कलसंस्कृत-कन्वोकेशनसदस्यतानिर्वाचनावसरे छपरा-मण्डलीयैः निर्वाच्यमात्मानं मन्यमानैः पण्डितैरेवमुद्भ्रान्तमाचेष्टितं यन्मत्पार्श्वे तडित्पत्रमागतम् 'भवान् इह शीघ्रमायातु' इति तत्प्राप्त्यनन्तरं तत्र मण्डले गतेन मया किं दृष्टम् इति संक्षेपत एवोच्यते।

येषु पण्डितेषु संस्कृताध्यायिच्छात्रेषु वा पाश्चात्य-सभ्यतापिशाची-स्पर्शोऽपि नास्तीति मया तर्कितमासीत्तानेवाहं तथा प्रस्तान् किं, तां पराजित्य

स्थितान् प्राप्तवान्। किं बहुना साऽपि सभ्यता पिशाची तान् दृष्ट्वा स्वयं लज्जिताऽऽसीदिति मयाऽनुमितम्। एकेन मम मित्रेणोक्तमपि यद् "अस्तु नाम एतस्य निर्वाचनस्य परोक्षं फलन्तु कालगर्भेऽस्ति प्रत्यक्षं फलन्तु मया पुर एव दृश्यते यत् संस्कृतज्ञा विद्वांसोऽस्मिन्निर्वाचने परस्परमविश्वसन्तोऽनृतजिह्ममायासाम्राज्यं जनतायां विस्तारयन्तीति।" तत्र निर्वाच्यमानैः पण्डितैरेवं गर्हितं भारतीयसदाचारविपरीतमनुष्ठितमासीद् यत्तत्स्थनिर्वाचनव्यापारं दृष्ट्वा "साक्षरा विपरीताश्चेद्राक्षसा एव केवलम्" इयं लोकोक्तिरकस्मादेव मन्मुखान्निःसृताऽभूत्। अहोऽज्ञानमोहलोभानां विलासाः? एभिर्जगति किन्नानुष्ठीयते इति मया प्रत्यक्षीकृतम्। ये खलु "तत्र कन्वाकेशनसभायां किं भवति? मया च गत्वा किं कर्तव्यम् विद्यते? निर्वाचनप्रथायाः कोऽभिप्रायः? कीदृग् मनीषी तद्योग्य इत्यादिज्ञानगन्धमपि न बिभ्रति, त एवाकाशपातालमेकीकृत्याकाण्डताण्डवेन स्वनिर्वाचनार्थं विद्वच्चरित्रं कलङ्कयन्ति, संस्कृतमहिमानं विलोपयन्ति, धर्ममार्गं विदूषयन्ति, स्वशिष्यवर्गैः शिष्टाचारं विहापयन्ति, मतदातृषु अनृतजिह्ममाया विस्तारयन्तीत्याद्यवर्णनीयं व्यवहारं दृष्ट्वा मद्धृदयं विदीर्णमासीन्मस्तिष्कं विघूर्णितमासीद्यत्र तत्रोक्तमपि मया "यदहो फलिता पाश्चात्यनीतिरिह भारते? ये खलु भारतीय-संस्कृति-गोप्तारस्त एवेदानीमेवं कलुषिताः सञ्जाताः, तर्हि के ते वराका ये रात्रिन्दिवं तन्नीत्यामेव निमग्नाः सा च जनता वराकी का! याऽप्रत्यक्षतस्तद्धारायामेवोह्यमानाऽस्तीति।

कियन्तो निर्वाचका मतदातारश्चैवं निर्वाचननियमज्ञानशून्या दृष्टा यत्ते यत् किमपि स्वगुरुभ्योऽन्येभ्यो वा ज्ञानमज्ञानं वा गृहीतवन्तः वानरमुष्टिस्थबदरफलवत्तत्त्यक्तुमेव न कामयन्ते। "मम योग्यायोग्यविचारणया किं फलम्"। "मया तु अमुक उत्थापितो विद्यते तस्मा एव मतं देयम्" "मयातु मतदानपत्रं भृत्वा प्रेषितमेवेत्यादि" मिथ्यापरुषादिभाषयाऽपि न जिह्रियति स्मेति। "मद्गुरवे यो मतं ददाति दापयति तस्मै अहं दास्यामीत्यादि।" कथयन्ति स्म।

सत्यप्येवं व्यतिकरे कियन्तो मतदातारो मया साधुसदाचारशिष्टाचारपालका निर्वाचनज्ञानभृतश्चोपलब्धा इत्यानन्दलेशोऽपि समजनि।

अस्तु लेख-कलेवर-वर्द्धनभयात् संक्षिप्तस्यैव वक्तव्यत्वाद्विषयस्य च बहुत्वादग्रे पुनरवशिष्टं कदाचित् सत्यवसरे लिखिष्यामि। इदानीं सहृदयान् भारतीयसंस्कृतिसंरक्षकान् भारतीयसंस्कृतज्ञान् विदुषः किञ्चिद्वक्तुमिच्छामि- तद्यथा—

अयं निर्वाचनरोगस्तु सर्वथापि भारते वर्द्धिष्यत एवेति तदुच्छेद-यत्नस्तु निष्फलः। परन्तु तत्र संशोधनकरणमावश्यकम्। तद्यथा एवं योग्या मतदातारो भवेयुर्ये गर्हितमाचरद्भ्यो निर्वाच्येभ्योऽपि शिक्षां दातुमर्हेयुः। विशिष्टाश्च विद्वांसो मिलित्वा मण्डलविद्वत्सभानाम्ना सभामेकां मण्डले संस्थापयेयुः यत्र च मतदातॄणां सूचिकां सम्पूर्णां विरचय्य संस्थापयेयुः सत्यवसरे तया सभयैव निर्वाच्यानां विदुषां नामानि प्रकटितानि कारयेयुरित्येवं स्यात् कथंचित् किमपि भारतीयमर्य्यादारक्षणमिति मां प्रतिभाति।

अपरञ्च कन्वोकेशनसभाकार्य्य-संञ्चालका अपि दृढा भूत्वा यथावन्निर्वाचननियमाननुसरेयुश्चेत्स्यात् कियानपि निर्वाचनप्रथापरिष्कारः। तेऽपि शिथिला मया अवलोक्यन्ते। प्रथमं निर्वाचकसूचिकैव नास्ति शुद्धा। तत्रापि मतदानपत्रं ( वोटपत्रं ) बहुत्र अनियमितं भूतमपि ते नावद्धति। "संस्कृतज्ञा विद्वांस एवमेव भवन्तीति" ते उपेक्षन्ते। इति न ते विदन्ति यत् संस्कृतज्ञा विद्वांसो निर्वाचनप्रथास्थितान् दोषांस्तु द्रुतं गृह्णन्ति, गुणग्रहणे एव वहिर्मुखा इति। अतश्चैषमो निर्वाचनकुव्यवस्थया तेऽपि शिक्षिता भूत्वा निर्वाचकसूचिकानिर्माणादिकृत्यमग्रे सतर्काः परीक्ष्य कुर्य्युरेवं न स्याद्यथाऽस्मिन् हायने शीघ्रतया सर्वं कृत्यमस्तव्यस्तमेव जातमिति।

अन्यच्च निर्वाच्यानां कृते कोऽप्येवं निर्वन्धोऽपेक्ष्यते येन विशिष्टा विद्वांस एव निर्वाच्यमात्मानं कर्तुं प्रयतेरन् यथाऽन्यत्र निर्वाचने मुद्राप्रतिवन्धोऽस्ति तथाऽत्रापि प्रस्तावसंख्याप्रतिवन्धो, योग्यताप्रतिवन्धो, मुद्राप्रतिवन्धो वा स्यात्। अन्यद्वा किमप्यपेक्ष्यते। परन्तु अपेक्षितमस्ति किमपि एवमेव प्रावृषि मण्डूककुलवत्सर्वेषां निर्वाच्यसूच्यामारोहणं न शोभते।

सर्वतोऽपि प्रथमं मतदातॄणां शिक्षाऽपेक्षिता विद्यते। यत्ते निर्वाचन-प्रथान्तु जानीयुः। केयं प्रथा? को ह्यस्याः प्रकारः? कीदृशा विद्वांसो निर्वाच्याः? के कार्य्यकर्तारः? के केवलं प्रतिष्ठालोलुपाः? किं तत्र कार्य्यम्? इत्यादि। मया तु एषमो निर्वाचकान् छपरामण्डलीयान् दृष्ट्वा आश्चर्य्यपारावारे न्यमज्जि। तत्र कश्चित् कथयति—"मम मतदानपत्रं गुरुपार्श्वे विद्यते, ते एव भृत्वा प्रेषयन्ति। कश्चित् कथयति मया हस्ताक्षरं कृत्वा गुरुपार्श्वे प्रेषितम्। कश्चित् कथयति अमुकेन आगत्य हठात् मद्धस्तात् गृहीत्वा पत्रमेव नीतम्"। कश्चन विलपति-अहो मान्तु निगृह्य मदिच्छाविरुद्धमेवान्येषां नाम लेखयित्वा स्वहस्तेनैवामुकेन राजेष्ट्रितं ( रजिष्ट्री ) कृतम्। इत्यादि किं वच्मि लेखो वृद्धर्यतेऽतो विरम्यते मया नोचेदियं निर्वाचकानामज्ञानकथा निर्वाच्यानां च गर्हितकृत्यकथा तु पुस्तिकया समाप्ता स्यादिति।

# श्रीकृष्णाभ्यर्थना ।

—:०※०:—

( गीतिका छन्दसा )

ले०—दर्शनकेशरी पं० श्रीगोपालशास्त्री "केशरी"
साहित्याचार्य्यः, व्याकरणशास्त्री, न्यायतीर्थः, काशी ।

श्रीकृष्ण! कर्मयोगिन्नव भारतं ममेदम् ।
गोविन्द ! हे मुरारे ! याचे हरे ! सदेदम् ॥
तव जन्मभूरिदानीं विलपत्यहो सखेदम् ।
कलहैर्विमर्दितां मां कथमीक्षसे वदेदम् ॥
बाल्ये वसन् व्रजे त्वं गोपाल ! गर्वितानाम् ।
क्रीडन् चकार नाशं शकटाद्यपूतनानाम् ॥
कालीयकेशिकानां बकवत्सधेनुकानाम् ।
चाणूरमुष्टिकानां कंशादिशासकानाम् ॥
तव वल्लभाः सुरभ्यः शतशो विहिंस्यमानाः ।
दैनन्दिनं ह्रसन्ति त्वत्कैरपाल्यमानाः ॥
यासां सुगुप्तये त्वं गोवर्द्धनं दधार ।
वैकुण्ठवासमुज्झन्भूमाववाततार ॥
कस्माद्धरे न पश्यस्यघमद्य मानवानाम् ।
इह नग्ननृत्यमाराद्भरतावनौ खलानाम् ॥
कौटिल्यमार्गतो वा स्वार्थोपदेशतो वा ।
अन्योऽन्यवैरतो वा किमु वच्मि सर्वतो वा ॥
इतरेतरं द्विषन्ति निजगेहमाभरन्ति ।
रिक्तीभवन्ति कोशाश्चिरसञ्चितार्थपोषाः ॥
दुष्टान्निहत्य राज्ञः साम्राज्यमाततान्नः ।
धर्माय धर्मगुप्त्यै प्रादादधर्मलुप्त्यै ॥
कथमद्य दुष्टदुष्टान् समुपेक्षसे सुपुष्टान् ।
वित्तैस्तव प्रियाणां भरतावनीनराणाम् ॥
चाणक्यसंज्ञया त्वं नवनन्दभूमिपात्वम् ।
सद्यस्तिरश्चकार गुप्तं नृपं चकार ॥
अधुना च तूष्णिमेत्य शेषे समुद्रमेत्य ।

कथमद्यगोप्तुरस्यां भुवि दृश्यतां समस्याम् ॥
पाखण्डधर्ममत्तान् श्रुतिमार्गतः प्रमत्तान् ।
त्यक्तत्वदीययोगान् बहुधाश्रिताधिरोगान् ॥
पुनरानयस्व लोकान् गीतोक्तकर्मयोगान् ।
भूत्वा विनष्टशोकाः पुनरात्तकर्मयोगाः ॥
नन्दन्तु विश्वलोकाः पर्य्याप्तगेहभोगाः ।
शश्वल्लभेत लोकः त्वदनुग्रहाद्विशोकः ।
अपि"केशरी" निजं तत् सौख्यं भुवश्च तत्सत् ॥

---

## विलापः ।

( श्री १०८ युत योगिवर्य बालानन्दब्रह्मचारि-प्रधानशिष्य-
देवघर करनीवाद वास्तव्य श्रीपूर्णानन्दब्रह्मचा-
रिणां भाद्रशुक्ल द्वितीयायां ( १६६० )
बुधे, शरीरावसानं प्रति )

ले०—श्रीबदरीनाथ मिश्रः, व्याकरणतीर्थः, खुटहाग्रामवास्तव्यः, मुङ्गेर ।

श्रुत्वा हन्त महेन्द्रवज्रतुलितां वार्त्तामिमां लोकतः
पूर्णानन्दयतीश्वरो दिवि गतो योगीश्वराणां मणिः ॥
वाष्पारुद्धविशीर्णमेव वचनं चेतः समावर्जितम्
वैक्लव्येन वदानि किं बुधवरा वागेव मन्दायते ॥ १ ॥
योगी पण्डितमण्डलीपरिवृढो वादीभकण्ठीरवो
विद्वद्वृन्दसमर्चिताङ्घ्रियुगलो वन्द्यो नृपालैरपि ॥
पूर्णानन्दयति गुरुर्यदि विधे नीत स्त्वया शोच्यताम्
कस्मिंस्ते करुणा दया च भविता नैतावता भावये ॥ २ ॥
किम्वा ते करुणैव नास्ति हृदये लेशो दयायाः क वा
सौजन्यन्तु न दूरतोऽपि भवतः साम्मुख्यमागच्छति ॥
रे दुर्दैव विधे ! त्वयाद्य किमिदं दुःचेष्टितं चेष्टितम् ।
पूर्णानन्दमहोदयं प्रहरता सर्व्वं जगत्खेदितम् ॥ ३ ॥

क्रूरं त्वामपहाय सा भगवती श्री भारती भारते
मान्यं शान्तमुदारमद्भुतगुणं श्रीसद्गुरुं संश्रिता ॥
आहूतापि गता न तेऽन्तिकमियं मूढोऽसि यस्माद्विधे !
तस्मादेतदनर्थकारि भवता कार्य्यं समानुष्ठितम् ॥ ४ ॥
तर्कोऽयं किमु, वेद एव, किमु वा धर्मोऽथवा मूर्त्तिमान्
वादो वाऽखिलशेखरः किमु रसः शान्तोऽथवा रूपभृत् ॥
इत्येवं विविधा मतिः समभवद्यस्मिन्बुधानां सदा
हा हा हन्त ! विधे ! तमेव हरता क्रूरत्वमाविष्कृतम् ॥ ५ ॥

---

## कृष्णोपालम्भः ।

—ः❀ः—

लेo—श्रीगोपालदत्तशर्मा ऋषिकुल-ब्रह्मचारी ।

विपदमनुभवन्त्यो हन्त गावो विपन्नाः
तदपि तव विषादो नैव जागर्ति भूयः ।
कथमपि नवनीतं न स्मरस्यन्ततोऽपि
बहुतरगुरुकाणां शासकानां भयं किम् ?

(२)

यदि भवदवतारो जायते सोऽद्य सद्यः
प्रणुदति मम शङ्कां प्राग्विशङ्कस्य कृष्ण !
तव विपदमिदानीमागतस्यैव-मन्ये
कुपितकपिमुखानां शासनाद्-भुक्तपूर्वं ?

(३)

यदि चरणमिदानीं शासकस्ते प्रपश्येत्
सपदि भवसि कारागारबद्धोऽत्र चौर !
अतलजलविलासे सुप्यतां मुक्तशङ्कः
न हि भवति विलासो द्वापरीयो वरीयान् ॥

(४)

अनुभवति न कश्चिद्वेणुनादं विनोदी

प्रथितमियमिदानीं ग्राम्यताऽस्यतेति ।
तदपि वहति कश्चिद् हस्यते निन्द्यतेऽसौ
विशति मधुररागे वाद्यशेषे–प्रशस्ये ॥

( ५ )

अधिरथनतवाहान् वाहयित्वा तदानीम्
अधिगतरणसाथ्यस्तत्र प्रभुत्वं प्रपन्नः ।
यदथ चलति युद्धे स्यारसत्वमद्यापि भूयः
शृणु बहु परिहास्यं यास्यसे त्वं जनेन ॥

( ६ )

यदि जगति कलापान् मस्तके धारयित्वा
भ्रमसि समतिनीतो वध्यसे सर्वतोऽपि ।
न हि न हि तव नीतेः क्वापि गाथा-प्रशस्या
यदपि चरितवाँस्त्वं धार्तराष्ट्रेषु पापम् ॥

( ७ )

चरमकथनमेतत्त्वं न मन्यस्व मन्तुम्
सरति नवनवोऽयं नास्तिवादो जगत्याम्
भवति न तव भानं मानसे शङ्कुकीलम् ।
प्रभवति भवनाथे तर्क्यते राष्ट्रहानिः ॥

( ८ )

तव तु यदुपते ! हा ! नाशितो धर्मसारः
त्वमसि विशदशङ्कावह्निदग्धो विलुप्तः ।
वद तव किमु नाथ ! ज्योतिरस्त्येव वा नो
यदि भवति जनेषु स्मर्यतां सत्यसत्ता ॥

---

## नाट्य-कला-विकासः

लेo—श्रीहरिराममिश्रः ( पन्ना, सी० आई० ई० )

मनुष्याः किञ्चित् वस्तु दृष्ट्वा हृदये तत्प्रति भावान् जनयन्ति तान् हृदये निरोद्धुं न शक्नुवन्ति । इङ्गितैः वाण्या च प्रकाशितुं सदा यतन्ते । तेषां भावानां प्रकाशनं कर्तुं ते अनुकरणस्यापि साहाय्यमिच्छन्ति । बाल्यावस्थात

एव मनुष्याः अनुकरणं शिक्षन्ते च तस्मिन् साफल्यं लब्ध्वा आनन्दं प्राप्नुवन्ति। यावत् अनुकरणप्रवृत्तिः नाट्यरूपं न धारयति तावत् नाटकस्याविर्भावो न भवति। यदा नाटकं शास्त्रनियमैः नियन्त्रितं भवति तदा तत्साहित्यरूपं प्राप्नोति। वहवः जातयः विद्यन्ते यासां नाट्यशास्त्रं नास्ति। किन्तु वहवः ईदृश्यः अपि यासु नाटकप्रचारः यथेष्टं किन्तु अविकसितरूपे वर्तते। नाटकानां वहवः भेदाः उपभेदाश्च सन्ति। तदा नाटकं साहित्यान्तर्गतं गण्यते यदा तस्मिन्सानुकरणकथोपकथनं विद्यते। संगीतं वेषभूषा च तस्य गौणगुणौ स्तः। किन्तु वयं एतदपि स्मरामः यन्नाटकस्य सृष्टिः संगीतनृत्ययोः कारणादेव जाता। प्राचीनकाले यदा मानवसमाजः आरम्भिकावस्थाया मासीत् जनाः ऋतुपरिवर्तनादि दृष्ट्वा अत्यन्तं भयभीताः भवन्तिस्म। तत्परिणामप्रभावरक्षणार्थं देवानुद्दिश्य अनेकोत्सवान् कुर्वन्ति स्म। अस्मादेव नाटकानां गीतानां गीतकाव्यानां चोत्पत्तिः जाता। कतीनाम् वर्षाणाम् पश्चात् नाटकानां सृष्टिर्विकासश्च जातः। कालान्तरे ते नृत्यगीतोद्देशं परिवर्त्य वालादिप्राणरक्षां धनधान्यवृद्धिं चोद्दिश्य अनेकान् धार्मिकोत्सवान् कर्तुमारभन्त। प्राचीनकाले यथा धनधान्यार्थं देवताः पूजिताः तथा पूर्वजाः सुमहान्तः ऐतिहासिकपुरुषाश्चापि आराधिताः। तेषां जीवन घटनानामभिनयः कृतः। अस्माकं देशे भारते श्रीकृष्णरामलीलारूपे अद्यप्रभृति सः वर्तते। नाटकं 'नट्नर्तने' धातोः निर्मितम्। सर्वैः विद्वद्भिः एतत् सिद्धीकृतं यन्नाटकानामुत्पत्तिः प्रथमं भारते एव संजाता। ऋग्वेदः अस्माकं प्राचीनः ग्रन्थः। तस्मिन्नाटकस्य त्रीणि मूलानि गीतकाव्याख्यानकथोपकथनानि विद्यन्ते। अस्मिन्नेवाधारे मेकडानल कीथ प्रभृतयोः यूरोपीया विद्वांसः स्थिरीकृतवन्तः यत्संसारे प्रथमं प्रथमं नाटकारम्भः भारतवर्षे एव जातः। पाणिनि पातञ्जलि समय पर्यन्तं भारते नाटकानां यथेष्टं विकासो जातः। पाणिनिपूर्वमेव नाट्यशास्त्रमासीत् यतः पाणिनिः स्वव्याकरणे नाट्यशास्त्रस्य ज्ञात्रोः शिलालि कृशाश्वयोः आचार्ययोः नामानी लिखितवान्। भारते नाट्यशास्त्रस्य प्रधानमुनिः भरतः मतः। नाट्यसंबन्धिनं तस्य ग्रन्थं जनाः प्राप्तवन्तः। भरतः स्वसूत्राणि यावन्ति सर्वाङ्गपूर्णानि कृतवान् तेषु च यावन्ति सूक्ष्मातिसूक्ष्माणि वस्तूनि विवेचितवान्, तानि सर्वाणि प्रमाणयन्ति यत् भरतस्य पूर्वं अस्मिन्देशे अनेकानि नाटकानि निर्मितानि। भरतस्तान्येव नाटकानि तानेव ग्रन्थांश्च सम्यगधीत्य स्वग्रन्थं लिखितवान्।

अधुना वयं संक्षेपेण भरतमुनेः नाट्यशास्त्रस्य प्राचीनत्वं विविच्य

अस्य विषयस्य समाप्तिं विधास्यामः । तस्य ऋषेः शास्त्रस्य द्वितीयेऽध्याये रङ्ग-शालानां प्रकाराः लिखिताः । तेषु दिवसेषु रङ्गशाला 'प्रेक्षागृह' इति कथ्यते स्म । नाट्यशास्त्रानुसारं प्रेक्षागृहाणाम् त्रयः प्रकाराणि आसन् विकृष्टं चतुरस्रं च त्र्यस्रम् इति । विकृष्टप्रेक्षागृहस्य विस्तारः १०८ हस्तमितः द्वितीयस्य चतुरस्र प्रेक्षागृहस्य आयामः ६४ च विस्तारः ३२ हस्तमितः भवतिस्म । तृतीयः त्र्यस्यप्रेक्षागृहः त्रिभुजाकारः । भारतीयनाट्यकलायाः मूलं धार्मिकम् । नाटकानामारम्भः गद्यात् गीतकाव्येभ्यश्च जातः । साहित्यिकेतिहासस्य क्रमे प्रथमं गद्यं पश्चात् गीतकाव्यं तत्पश्चान्महाकाव्यं गरायन्ते । अतः सिद्धं यानि नाटकानि गद्येभ्यः समुत्पादितानि तानि प्राचीनतराणि सन्ति । अनेकैः प्रमाणैः इदं सिद्धं यत् भारते नाटकानां प्रचारः ईसातः अष्टसहस्रवर्षाणां पूर्व-मासीत् । कतिपयानां वर्षाणां पूर्वं महाकविः कालिदासः संस्कृतस्य आद्यः नाटककारः मन्यते स्म, किन्तु अनेकानि प्रमाणानि उपलब्धानि यानि समुत्पा-दयन्ति यत् कालिदासस्य चतुःपञ्चानां सहस्राणां वर्षाणां पूर्वं बहूनि गुण-पूर्णानि नाटकानि निर्मितानि । कालिदासस्य मालविकाग्निमित्रनाम्नि नाटके भास-कविपुत्रयोः नामनी लिखिते । ट्रावनकोर नगरे नाटककारस्य भासस्य बहूनि नाटकानि प्राप्तानि येषु 'स्वप्नवासवदत्ता' इति एकम् । बहूनि तत्र प्रका-शितानि । किन्तु एषः नाटकविकाशकालः अज्ञातकालः एव मतः । अतश्च अत्रैव एवम् असमाप्य ज्ञातकालस्य सम्बन्धे किंचिन्मात्रं कथयिष्यामः । अस्माकं नाटक-ज्ञातकालः कालिदासादारभ्यते । तस्य समयाच्च दशशताब्दीपर्यन्तं स कालः वर्तते । कालिदासानन्तरं सुनाटककारेषु हर्षः गणितः । कालान्तरे भवभूतिः भट्टनारायणः विशाखदत्तः, राजशेखरः, कृष्णमिश्रः इत्यादयः नाटककाराः जाताः । दशैकादशशताब्दीपर्यन्तं नाटकानि लिखितानि । एतानि नाटकानि नाट्यशास्त्र-विहितलक्षयुतानि किन्तु एतत्पश्चात् यानि नाटकानि आविष्कृतानि तानि नाट्यकलादृष्ट्या दोषमयानि आसन् । अस्मादेव समयान्नाटकानां पतनकालः आरभत इति ।

## समालोचना ।

### मध्यकधातुरूपावलिः ।

—परिडत टी० आर० कृष्णाचार्यसंकलिता । मू० १) एकं रूप्यकम् । प्राप्तिस्थानम्—टी० के० वेंकोबाचार्य्य, मैनेजर माध्वविलासबुकडिपो, ईष्ट ऐयन ष्ट्रीट्, कुम्भकोणम् । इति ।

पुस्तकमिदमन्वर्थं भूधातुत आरभ्य सर्वेषामुपयोगिनां पञ्चशतानां धातूनां रूपाणि संकलयति। संकलित-धातवस्त एव विद्यन्ते ये खलु सर्वत्रैव प्रचलित-काव्यादिपुस्तकेषु सम्प्रति पठनपाठनादिकार्य्ये सम्प्रयुज्यमानाः समुपलभ्यन्ते। संकलयितु विदुषः परिश्रमः श्लाघनीयो विद्यते। येनानायासेनैव रूप-परिज्ञानं साधु स्फुटतामेति। प्रथमं परिभाषा-संज्ञाकरणेन अवसाने च धातूनां वर्णानुक्रमणिकोपन्यासेन अशुद्धशोधनादिना मसृणकर्गज-स्फुटाक्षरविन्यासादिना मुद्रण-परिष्कारादिभिश्च साधु सम्पादितं सौष्ठवं कस्य द्रष्टुर्मनो न हरति। किं बहुना रूपप्रदर्शनप्रकारोऽतीव साधीयान् विद्यते। यत्सत्यं वशीकृतं मे मनोऽनेन पुस्तकेनेति संस्कृताध्यायिनोऽनुरुन्धे संग्रहीतुम्। इंग्लिशकलाशालासु अध्ययनं कुर्वतां धातुरूपज्ञाने वंभ्रम्यमाणानां वराकाणां संस्कृतपरिशीलिनान्तु कल्पद्रुमायत एवेदं पुस्तकं बहुधान्विष्यापि दोषं न किञ्चिदुपलब्धवानहमिति विरमामि।

---

## न्यायदर्शनम्।

श्री पं० छज्जूरामशास्त्रिविद्यासागरकृतया लघुवृत्त्या विभूषितम् मू० ॥) अर्धरूप्यकम्। प्राप्तिस्थानम् (१) मेहरचन्द्र लक्ष्मणदास संस्कृतपुस्तकालय, सैद मीठाबाजार, लाहौर। (२) मास्टर खेलाड़ीलाल संस्कृत बुकडिपो, कचौडीगली, बनारस इति—

पुस्तकमिदं श्रीगौतम-मुनि-प्रणीत-न्यायसूत्राणां लघुवृत्तिविभूषितं प्रसाद-गुण-गुम्फितं साधु मुद्रितं विद्यते। यथा ग्रन्थप्रणेतुरभिप्रायोऽस्ति तथाऽहमपि समर्थये यत् परीक्षार्थिनामुपकारकमिदं पुस्तकमिति। शास्त्रिणां प्रयासः स्तुत्यो विद्यते। परन्तु ग्रन्थ एवाऽयमीदृग् उपनिबद्धो मुनिना यद् बहुत्र सूत्रेषु विस्तारेण कथनं विना सूत्रार्थ एव न स्पष्टीभवति। तथापि स्वल्प-प्रयासेन सामान्यतः सूत्रार्थावगतिरनेन भाविनीति भावुकैः छात्रैः संग्राह्यमिदं पुस्तकम्। अहन्तु परीक्षाध्यक्षान् वच्मि यदि ते शृणुयुः, यद् विश्वनाथवृत्त्यादिकं विहायेदृग् लघुवृत्त्युपहितमपि अनुज्झितभाष्यार्थभावं पुस्तकं यदि ते परीक्षा-पाठ्ये निर्धारयेयुस्ततोऽधिकः स्याल्लाभश्छात्राणामिति।

मूल्यमपि कर्गजाकारमुद्रणपरिष्कारादिपर्यालोचनया स्वल्पमेवास्तीति संस्कृतच्छात्राणां कृते सौलभ्यम्।

---

## संस्कृत-रत्नाकरः ।

अखिलभारतवर्षीय संस्कृत–साहित्य सम्मेलनस्य मुखपत्रमिदं प्रतिमा-समुद्वेलते रत्नाकरत्वात्। अस्य सम्पादकौ श्री-सूर्य्यनारायण-शास्त्री व्याकरणा-चार्य्यः, भट्ट श्रीमथुरानाथशास्त्री साहित्याचार्यश्चेति संस्कृत-साहित्यस्य धुरन्धरौ विद्वांसौ स्तः। प्रकाशकस्तु परमप्रसिद्धो महामहोपाध्यायो महामहोपदेशकः श्रीगिरिधरशर्मा चतुर्वेदो व्याकरणाचार्य्यो विद्यते। जयपुरान्निःसरति। वार्षिकं मूल्यं २) रूप्यकद्वयं विद्यते।

अत्र बहूनां विज्ञानां देशकालात्मविदां विदुषां वर्तमानप्रगतिपरिचायकाः प्राचीनशास्त्रीयगवेषणात्मका विचारपूर्णाः प्रबन्धाः प्रकाश्यन्ते। समाचार संग्रहोऽपि ज्ञातव्यविषय-विशिष्टो भवति। मुद्रणप्रकाशनादिकृत्यं स्वच्छं शुद्धं दृश्यते। कर्गजमपि मसृणं दृढं विद्यते। "डिमाईज" इत्याकारस्य चत्वारः स्फारा भवन्ति। इत्थं सर्वथाऽपि गुणसम्भृतस्यास्य पत्रस्य विषये किं वक्तव्यम् यदि लेखेषु इतोऽप्यधिकः प्रसादगुणः प्रसञ्जितश्चेत्तर्हि सुवर्णे सुगन्ध-समवायः समापन्नः स्यादिति सम्पादकौ समभ्यर्थ्य, संस्कृतज्ञान् विदुषो विद्यार्थिनश्चा-नुरुन्धे यत्तैरवश्यमेवंविधो रत्नाकरो मुद्राद्वयेनैव संगृहेलिम इति।

---

## त्रिपादनीतिनयनम् ।

मीमांसाशास्त्रस्य निबन्धात्मकं लघुपुस्तकम् म० म० मुरारिमिश्रविरचितम् पीयूषपत्रिका-कार्य्यालय, नडियाद, गुजरात, इति सङ्केतादुपलभ्यते। पुस्तक-मिदं अर्थवादस्य विध्यैकवाक्यत विचारे श्रुतिलिङ्ग-वाक्यादीनां बलाबलादि विचारे शब्दशक्त्यादि विचारे अनुमानाद्यपेक्षया श्रुते र्बलवत्त्वबोधने नामार्थादि परिष्कारे शास्त्रार्थपद्धत्या निबन्धरूपेण लिखितमस्ति। 'सुपररायल' इत्याका-रस्य षट् स्फाराः सन्ति। पुस्तक-सम्पादक-प्रकाशकमहाशयास्तु किमपि स्वकर्तव्यं नानुष्ठितवन्त इति विषीदति चेतः। ते महोदया न विषयविभागं विहि-तवन्तो नापि मुखबन्धोपन्यासेन ग्रन्थविषयाणां संक्षेपतोऽपि पाठकानां कृते सूचनैव निबद्धाऽन्यविषयस्य तु कथैव का। मुद्रणेऽपि बहवोऽशुद्धयः सन्ति। अस्तु, दिदृक्षुभिरष्टौ आणकान् दत्वा उपर्य्युक्तस्थानाद् ग्राह्यमिदं पुस्तकम्।

समालोचकः—दर्शनकेशरी श्रीगोपालशास्त्री।

---

सया श्रवणेन मननेन वा तटस्थ-ज्ञानस्य श्रेष्ठा दशाविर्भवति, नेयं भक्ति स्तादृशी। ज्ञानसाधकमुद्दिश्योक्तं भगवता श्रीमद्भगवद्गीतायाम्—

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥

एवमन्यत्रापि शास्त्रे समुदीरितम्—

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येयः एते दर्शनहेतवः॥

भक्तौ तु नैतानि साधनानि गण्यन्ते। सा तु श्रीमतः परमदयालो-र्भगवतो दययैवाधिगम्यते।

इह हि सूत्रे ज्ञानशब्देन तटस्थज्ञानमेव गृह्यते। गुरुपादपद्मप्रणत्या, गुरुशुश्रूषया, श्रीगुरुदेवानुयोगेन, मननेन निदिध्यासनेन, सत्सङ्गेन स्वाध्या-येनैवमादि-सत्पुरुषार्थेन यथा शनैः शनैः तत्त्वज्ञानमुदेति, तथैव पुरुषार्थ-साध्यया रागात्मिकया भक्त्या सह तथा परया भक्त्या सार्धमपि अन्तःकरणीया-वस्थाविशेषस्य सम्बन्धस्तु विद्यते परन्तु तस्य परानुरागमूलकत्वादितो वैलक्षण्यमेव।

यद्यपि वैध्या भक्तेः साधनसमयेऽनुष्ठानापेक्षा भवत्येव तथापि वैधीतो रागात्मिकायाः सन्धौ रागात्मिकातश्च परभक्तेरित्येवमुभयोर्भक्त्योः सन्धौ केवलं भगवदनुकम्पाया एवालौकिकः सम्बन्धो विद्यते। फलतो वैध्या भक्तेरवस्थायां विधीनामनुष्ठानेनैव रागात्मिका भक्तिरुदेतीति तथा रागात्मिकाया भक्तेः साधन-पूर्णतायामेव परा भक्तिराविर्भवतीति नास्ति नियमः। तत्र तु वैधीतो रागात्मिकावस्थायामागमनेऽपेक्ष्यत एव परमेशितुरनुग्रहम्। विना तदनुग्रहं न साधकस्तत्रोपस्थातुं समर्थः तथैव रागात्मिकातः परस्यां भक्तावुपस्थातुं भगवदनुग्रहेणैव भक्तः समर्थो भवति। अत एवाभिहितं श्रुतौ—

नाऽयमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्य—
स्तस्यैष आत्मा विवृणुते तनुं स्वाम्॥ ३१॥

पात्रापात्रविचारणाया अनावश्यकत्वात् भक्तेर्वैशिष्ट्यमभिधत्ते।

**ज्ञाननिष्ठेतरयोस्तल्लाभः सर्वाश्रयत्वात्॥ ३२॥**

सर्वेषामाश्रयो यत्र सा तथोक्ता, तस्या भावः सर्वाश्रयत्वम् तस्मात्

ज्ञाने निष्ठा यस्य स तथोक्तश्च इतरश्चेति तयोः ज्ञान्यज्ञानिनोरितियावत् । तस्या लाभः तल्लाभो भवतीति सूत्रार्थः ।

ज्ञानी भवतु अज्ञानी वा भवतु सर्वोऽपि भक्तिं द्वारीकृत्य उन्नतिमधिगन्तुमर्हति । यतो हि भक्तिः सर्वेषामाश्रयस्थलं विद्यते ।

कर्मकाण्डे यथा आर्य्यानार्य्ययोः चातुर्वर्ण्य-चातुराश्रम्ययोः स्त्रीपुरुषयो र्भेदानुसारमधिकारिनिर्णयापेक्षा विद्यते । यथा च ज्ञानकाण्डेऽधिकारं लब्धुं प्रथमम्—

"शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वा ।
श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपतिष्ठेदिति"

श्रुत्याज्ञया साधनचतुष्टयसम्पत्त्यपेक्षा भवति, तथा कोऽपि विधिरिह भक्तौ नास्ति । समदर्शिनः करुणासिन्धो र्भगवतश्चरणारविन्दगन्धघ्राणे सर्वेऽपि स्त्रीपुरुषा बालवृद्धा, आर्य्यानार्य्या ज्ञान्यज्ञानिनः समाना अधिकारिण इति । अतिसरलो हि भक्तेः पन्थाः । तथा हि धर्मसाधनानामितरेषामङ्गानां साफल्यलाभाय ये ये विषया अपेक्षिताः सन्ति भक्तौ तु न तेऽपेक्ष्यन्ते । यथा दातृत्वे धनैश्वर्य्याद्यपेक्ष्यते । तपस्वित्वे तद्योग्यशरीरस्य शक्तेश्चापेक्षा, कर्मयज्ञे च द्रव्य-मन्त्र-क्रियादीनामपेक्षा । योगित्वे योगकौशलावश्यकता । ज्ञानित्वे साधनचतुष्टयाकांक्षा न तथा भक्तत्वे कस्यापि योग्यताविशेषस्यापेक्षा । केवलं चेतसा द्वेषवृत्तिविरुद्धाया रागवृत्तेरेवाश्रयणेन स्वचित्तवृत्तिप्रवाहस्य च श्रीमद्भगवन्तं भक्तमनोमन्दिरविहारिणं जगन्नाथं प्रत्युन्मुखीकृत्य प्रवाहणेनैव भक्तरुद्रेको भवति । न सा भक्तिः कञ्चनापि प्रासङ्गिकमानुषङ्गिकं वा विषयमपेक्षते । यतो हि श्रीमद्भगवद्रसतरङ्गिणी भक्तिः स्वयं सिद्धस्वरूपैवोच्यते । उदीरितञ्च स्मृतावप्येवमेव—

बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः ।
प्रायः प्रगल्भया भक्त्या विषयैर्नाऽभिभूयते ॥
भक्त्याऽहमेकया ग्राह्यः श्रद्धयाऽऽत्मा प्रियः सताम् ।
भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवात् ॥

भक्तौ तु सर्वेषामेव मानवानां समान एवाधिकार इति सर्वेषां परमाश्रयीभूता भक्तिः । प्रत्युत भक्तिभाजामग्रे न वर्णाश्रम-लिङ्ग-वयो-विद्याप्रभृति-विशिष्टयोग्यताऽपेक्षितेति स्फुटमुक्तं भक्तशिरोमणिना व्यासेन श्रीमद्भागवते—

नालं द्विजत्वं देवत्वमृषित्वं वाऽसुरात्मजाः ।
प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ।
न दानं न तपो नेज्या न शौचं न व्रतानि च ।

प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् ॥
दैतेया यक्षरक्षांसि स्त्रियः शूद्रा व्रजौकसः ।
खगा मृगाः पापजीवाः सन्ति ह्यच्युततां गताः ॥

भक्तिमतः श्वपचस्यापि गरीयस्त्वमुक्तं वर्णाश्रमिभ्यस्तद्भक्तिरहितेभ्यः ।

अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्तते नाम तुभ्यम् ।
तेपुस्तपस्ते जुहुवुः सस्नुरार्य्या ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥
यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित् ।
श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन्नु दर्शनात् ॥
विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्द विमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति स कुलं नतु भूरिमानः ।

इत्यादि विस्तरभयान्न प्रपञ्च्यते ॥ ३२ ॥

सर्वेषां साधनानां भक्तिरेव मूलमिति तद्विशेषमाह—

**सा पराध्यो निखिलसाधकापेक्षितत्वात् ॥ ३३ ॥**

सा भक्तिरेवैका पराध्यो सर्वश्रेष्ठा उच्यते निखिलानां साधकानां अपेक्षितत्वात् अभीष्टत्वात् इति सूत्रार्थः ।

कस्मिन्नपि अधिकारेऽन्तर्भाक् साधकः साधनमार्गे यदि द्रुतमग्रेसरो भवितुमिच्छति चेद्भक्तिमाश्रित्यैव सोऽग्रेसर्तुमर्हति । अतएव भक्तिः सर्वश्रेष्ठतमोच्यते ।

अभिहितञ्च स्मृतौ—

यथा समस्तलोकानां जीवनं सलिलं स्मृतम् ।
तथा समस्तसिद्धीनां जीवनं भक्तिरिष्यते ॥

कर्मासक्तोऽज्ञो वा स्यादाहोस्वित् तत्त्वदर्शी ज्ञानी वा भवेत्, प्रवृत्तिमार्गसेवी गृही वा स्यादथवा निवृत्तिपथपथिकः सन्यासी वा स्याद्, यो वा स्यो वा साधको भवेत् साधनमार्गे धैर्य्यं स्थिरधारणां तीव्रसंवेगं वा प्राप्तुं सर्वेऽपि तामेव कामदुहं भगवद्भक्तिमाश्रयेयुरिति सर्वतन्त्रसिद्धान्तसिद्धोऽयमर्थः ।

अस्य सूत्रस्यार्थं स्पष्टीकर्तुमिदमत्रोचितं प्रतिभाति प्रतिपादयितुम् । तथाहि—आत्म-चैतन्यप्रकाशिकानां साधनप्रणालीनां चतुर्धा हि विभागो विहितोऽस्ति योगतत्त्ववेदिभिर्विद्वद्भिः । प्रथमं तावत्—( १ ) स्थूलध्यानमूला मन्त्रयोगप्रणाली । ( २ ) ज्योतिर्ध्यानमूला हठयोगप्रणाली । ( ३ ) बिन्दुध्यानमूला लययोगप्रणाली । ( ४ ) ब्रह्मध्यानमूला राजयोगप्रणाली चेति ।

चतसृष्वप्येतासु साधनप्रणालीषु अनुरागात्मिका गुरुभक्तिरिष्टदेवभक्तिश्चे-त्युभे अपि भक्ती प्रथमतश्चरमावस्थां यावदपेक्षिते एव स्तः। अतश्च सर्वा-स्वपीदृशीषु साधनप्रणालीषु भक्तिः प्राणरूपोच्यते। उक्तञ्च योगाचार्य्येण पतञ्जलिना महर्षिणा योगदर्शने—

"तीव्रसंवेगानामासन्नतमः" ॥ इति ।

तीव्रसंवेगो हि स्वरूपोपलब्धौ आसन्नतम उपायः कथ्यते । उक्तञ्च स्मृतिषु—

अजातपक्षा इव मातरं खगाः
स्तन्यं यथा वत्सतराः क्षुधार्त्ताः ।
प्रियं प्रियेव व्युषितं विषण्णा;
मनोऽरविन्दाक्ष ! दिदृक्षते त्वाम् ॥

साधकस्य हृदि एवं तीव्राकांक्षा तु भक्तिद्वारैवोदेति। अतश्च भक्तिरेव सर्वश्रेष्ठेति निर्विवादसिद्धम् ॥ ३३ ॥

उक्तञ्चान्यदपि—

**सर्वधर्म्माङ्गप्रपन्ना च ॥ ३४ ॥**

भक्तिर्हि सर्वेषामेव धर्मस्य अङ्गानां सहायिकोच्यते। अभिहितञ्चैव-मेव स्मृतौ धर्मस्याङ्गानां स्वरूपनिरूपणं विभागश्चेत्युभयमपि ।

अहमेवास्मि भो देवाः धर्म्मकल्पद्रुमस्य च ।
बीजं मूलं तथाऽऽधारो नात्र कश्चन संशयः ॥
स्कन्धस्तस्य द्रुमस्यास्ते धर्मो वै विश्वधारकः ।
मुख्यं शाखात्रयञ्चास्य यज्ञो दानं तपस्तथा ॥
ब्रह्मार्थाभयदानानि देवाः ! त्रैगुण्ययोगतः ।
दानस्य प्रतिशाखाः स्युर्नवधा नात्र संशयः ॥
तपोऽपि त्रिविधं ज्ञेयं कायवाणीमनोभवम् ।
त्रैगुण्ययोगेनास्यापि प्रतिशाखा नवासते ॥
प्रतिशाखा अनेकाः स्युर्यज्ञशाखासमुद्भवाः ।
काम्याध्यात्माधिदैवाधिभूतनैमित्तनित्यकाः ॥
कर्म्मयज्ञप्रशाखाया भेदात्त्रैगुण्ययोगतः ।
त एवाष्टादशास्या हि प्रतिशाखा मनोहराः ।
पितृदेवर्षिवृन्दानामवतारगणस्य च ।
पञ्चानां सगुणब्रह्म-रूपाणां निर्गुणस्य च ॥
ब्रह्मणश्चासुरौघाणामुपास्तेः पञ्च भक्तितः ।
मन्त्रो हठो लयोराज एते योगेन च ध्रुवम् ॥
अस्या भेदाश्च चत्वारो भेदा एवं नवासते ।

एते भेदा नवैवाहो देवाः त्रैगुण्ययोगतः ॥
उपास्तेः प्रतिशाखा स्युः षड्रूपाः सप्तविंशतिः ।
श्रवणं मननञ्चैव निदिध्यासनमेव च ।
त्रयोऽमी ज्ञानयज्ञस्य भेदास्त्रैगुण्ययोगतः ।
नवधा संविभक्ता हि प्रतिशाखा नवात्मते ॥
द्विसप्तत्या प्रशाखाभिः शाखाभिश्चैवमेव भोः ।
निजानां ज्ञानिभक्तानां धर्मकल्पद्रुमात्मना ॥

कर्मोपासना ज्ञान-यज्ञ-तपोदानादीनां सर्वेषामेव धर्माङ्गानां पूर्तये भगवद्भक्तिरेवापेक्षिता विद्यते । विनाऽनुरागं कस्यापि धर्मानुष्ठाने प्रवृत्तिर्न भवति । प्रथमतो गुरुभक्तिं विना कर्मोपासनाद्यनुष्ठाने कस्यापि योग्यता नोदेति । शास्त्राचार्य्यपुरोहितेषु विनानुरागकरणं तेषामाज्ञापालनात्मक-धर्मानुष्ठाने कदापि प्रवृत्तिर्नोदेति ।

अन्यतश्चेदमपि विचारणीयम् यत् दान-तपः कर्माहङ्कारदम्भाद्यो ये उन्मादाः कतुश्चेतसि उत्पद्यन्ते । उपासनायां चालस्यं ज्ञानेऽहङ्काराद्यश्च ये समुत्पद्यन्ते तान् निराकृत्य धर्माभ्युदयमार्गं सरलयितुमनुरागात्मक-विश्वासस्य श्रद्धाया भक्तेश्च सदैवावश्यकता विराजते । एतादृशस्यैवानुरागस्य वृद्धिं विधाय धार्मिकाणां मानवानां चेतसि धर्मदार्ढ्यञ्चसम्पादयितुं भगवद्भक्तिरेव प्रधानतः साहाय्यमर्पयति । अयमपि भक्तेरेकोऽसाधारणो महिमा ॥ ३४ ॥

अपरमपि गीयते—

**लघूदितायामपि महाकल्मषहानम् ॥ ३५ ॥**

लघुश्चासौ ( भक्तिः ) उदिता । राजदन्तादित्वात् परनिपातः । अथवा लघु यथा स्यात्तथेति क्रियाविशेषणम् , तस्यां सत्यामपि महान् चासौ कल्मषः पापः, तस्य हानम् नाशो भवतीति सूत्रार्थः । स्वल्पमात्रमपि यदि भक्तिरुदिता भवति चेत्तदा महतोऽपि पापस्य विनाशो भवतीत्यर्थः । भक्तेरयमपूर्वो महिमा विद्यते यद्भक्तिर्यदि समभ्रिगता भवति चेन्महापापिनोऽपि पापविमुक्ताः सन्तः पुण्यमयस्याध्यात्मराज्यस्याधिकारिणो भूत्वा तत्राग्रेसरत्वमाश्रयन्ति । स्मृतिष्वभिहितोऽयं विषयः । तथा हि—

सङ्कीर्त्यमानो भगवाननन्तः
श्रुतानुभावो व्यसनं हि पुंसाम् ।
प्रविश्य चित्तं विधुनोत्यशेषं
यथा तमोऽर्कोऽभ्रमिवातिवातः ॥

अविस्मृतिः कृष्णपदारविन्दयोः
क्षिणोत्यभद्राणि शमं तनोति च ।
सत्त्वस्य शुद्धिं परमात्मभक्तिं
ज्ञानञ्च विज्ञानविरागयुक्तम् ॥
यथाऽग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात् ।
तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥
तथाऽग्निना हेम मलं जहाति
ध्मातं पुनः स्वं भजते च रूपम् ।
आत्मा च कर्म्मानुशयं विधूय
मद्भक्तियोगेन भजत्यथो माम् ॥
कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनाऽऽनन्दाश्रुकलया शुद्ध्येद्भक्त्या विनाशयः ॥

विज्ञानमिदमिदं तात्पर्य्यं विभर्ति--यद् वस्तुतो हि आध्यात्मिकस्थिते-रनुरूपे अवस्थे द्वे समुदीरिते स्तः। तत्रैका भगवद्भावमयी ऊर्ध्वगामिनी अवस्था, द्वितीया तु इन्द्रियविषयभावमयी अधोगाऽवस्था सा हि नरकादि पातकप्रयोजिका। उर्ध्वगामिनी तु अभ्युदयहेतुर्भूत्वा विराजते इति। तत्रैवं सति भक्तो हि कस्यामप्यवस्थायां भवेत्तस्य हृदि भगवद्भक्तिरुदेति चेत्तदा तत्क्षण-मेव तदधोगति निरुद्धा भवति। तदीयचेतसः सम्बन्धस्तु भगवद्भावमयो-र्ध्वगामिन्यावस्थया भवतीति भगवद्भावप्रभावतस्तच्चित्तं निर्मलतां पवित्रतां चासादयति।

यथा प्रकाशोदयेनान्धकारनाशो भवति, तथैव सर्वकल्मषशून्येन परम-पवित्रेण भगवद्भावेन सम्बद्धा याऽवस्था विद्यते तस्यां समुदितायां सत्यां सर्व-कल्मषापचयः स्वाभाविक एव। फलतः विषयिणां जीवानामन्तःकरणेन भगवद्रा-ज्यस्य सम्बन्धोदये सति तस्य चित्तनद्या वेगो योऽधोगामी पूर्वमासीत्सोऽधु-नोर्ध्वगो भवति। तत्र भगवज्ज्योतिषश्चाविर्भावोऽवश्यं दरीदृश्यते। तच्च ज्योतिर्दिनंदिनं वर्द्धत एव, न कदापि ह्रासमुपैति।

यदि चिरकालतोऽभ्यस्तविषयरसास्वादोऽपि महापातकी जीवः स्वचित्त-वेगं सत्यानुरागेण सकृदपि भगवच्चरणारविन्दसन्निधौ प्रापयितुमर्हेत चे-त्तदा श्रीमद्भगवतो नित्यायाः स्थिराया विकारहीनायाः पवित्रताया आश्रयः शाश्वतिकस्तेनासादयितुम्पार्य्यते। यतो हि चित्तगतेः सकृदपि परिवर्तः

शाश्वतिक एव भवति । सकृदपि भगवत्प्रेमसंस्कार-संस्कृतमन्तःकरणं न पुनः कदापि कथमपि विषयमललिप्तं भवितुमर्हति । सत्यवसरे बहिर्मुखमपि भगवदुन्मुखं भवत्येव ।

यथा हि ज्ञानावस्थायामज्ञानस्य लेशमात्रमपि न तिष्ठति । सत्त्वगुणस्योदयेन तमोगुणस्यापि विलयो भवति, तथैव श्रीभगवन्तं प्रति पवित्रस्यानुरागस्योदये सोऽपि पापराशि मूलत एव विनष्टो भवति । स्मृत्यन्तरेऽपि निगदितं विद्यते प्रकारान्तरेण पूर्वोक्तमेव तत्त्वम्—

यथैन्धांसि समिद्धोऽग्निर्भस्मसात् कुरुते मुने ।
तथैव भगवद्भक्तिः पापराशीन्व्यपोहति ॥
यथाग्नौ तापितं हेम स्वमलं प्रविमुञ्चति ।
तथैव भगवद्भक्ति र्जीवान् पापाद्विमोचयेत् ।

यावन्न जीवस्य भवेन्महेश्वरे
भक्तिर्दृढाऽऽनन्दकरो विमुक्तिदा ।
रोमाञ्चकृन्नेत्रजलाप्लुता तनु-
स्तावन्न शुद्धिं प्रवदन्ति चेतसः ॥ इत्यादि ।

यथा हि—समाधिना चित्तसाम्यमधिगम्यते तदुदये च चेतसो वैषम्यं व्यपगच्छति, तथैव भक्त्या सह परमानन्दपदस्य सम्बन्धभागित्वात् तस्याः साधारणाया अभ्युदये निरानन्दरूपस्य पापराशे विलयोऽवश्यम्भावीति क्षुण्णतरोऽध्वा ।

इह, सूत्रे 'अपि' शब्दो विशिष्टस्वारस्यं बिभर्ति । तथा हि कर्म्ममीमांसाशास्त्रस्यायं प्रतितन्त्रसिद्धान्तसिद्धोऽर्थो विद्यते यत् यावद्धि परिमाणं प्रावल्ये संख्यायां वा पापकर्मणोऽस्ति, तावदेव प्रवलं प्रायश्चित्तं तत्परिमाणकं च पापं व्यपहन्तुमर्हति न ततो न्यूनमिति । अत एव स्मृतिषु महापातकातिपातकोपपातकादि-विशिष्टाः श्रेणयः तदीय-प्रायश्चित्तविधिप्रकाराश्चापि स्वातन्त्र्येण तदनुरूपा एव प्रतिपादिताः । भक्तिस्तु साधारणापि तूलराशीनग्निरिवोग्रात्युग्रमपि पापराशिं क्षणेनैव विदहतीति भक्तेरलौकिकः सर्वाभ्यर्हितो महिमा न विस्मरणीयः । अस्यैवालौकिकस्य महिम्नो द्योतनायेहापिशब्दप्रयोगः सूत्रे विहितः ॥ ३५ ॥

अन्यदप्युक्तम्—

**अन्त्यजोऽप्यधिकारी तत्र साम्यात् ॥ ३६ ॥**

भक्तौ तु अन्त्यजोऽन्त्यावसायी चाण्डाल इति यावत् अधिकारी

अधिकारवान् तत्र भक्तौ ( सर्वेषां ) साम्यात् समानत्वात् ( भक्तौ सर्वेऽपि प्राणिनः समानाधिकाराः ) इति सूत्रार्थः ।

भक्तेरेष विशिष्टो महिमा यदत्रान्त्यजादयोऽप्यधिकारिणो भवितुमर्हन्ति । एतत्सिद्धान्तानुरूपं सर्वेऽपि भक्ताः सामानतामेवाश्रयन्ति । भगवद्भक्तिलाभाय नापेद्यते आचारानुष्ठान-काठिन्यम् । नासाद्यते योगपरिशीलनप्रयासः । नोपाश्रीयते ज्ञानकाण्डपरिशीलनपरिश्रमः । केवलं तत्र भक्तिसमाश्रयेण श्रीमन्तं भगवन्तं प्रति स्वचित्तवृत्तेरविरतमौन्मुख्यमेवापेद्यते । अतश्चेदं सर्वतः सर्वथा स्वतःप्रमाणीभवति यद्भगवद्भक्तौ यः कोऽपि जाति-श्रेणि-विभागविरहितोऽधिकारमर्य्यादाशून्योऽपि मानवो भगवद्भावभावुकश्चेत्स आश्वेव भगवत्कृपापात्रं भवितुमर्हति । भगवदनुरागसम्वलितचेतो-विचारणया तु सर्वेऽपि भक्ता भगवतोऽग्रे समाना एव न तत्र जातिवर्णावस्थादिभेदविचारणा भवति ।

इह "अपि" शब्दो विशेषमभिधत्ते तथा हि कर्मकाण्डे पात्रापात्रविचारो भवति । योगेऽप्यधिकारिभेदव्यवस्थाऽस्ति । ज्ञानकाण्डेऽपि साधन-चतुष्टयादि-विचारापेक्षास्त्येव । परन्तु इह भक्तिमार्गे तु नापेक्षास्ति कीदृशस्याप्यधिकारस्येति काण्डत्रयेऽप्युपासनाकाण्डस्यालौकिको महिमाऽविस्मरणीय एवेति दर्शयितुमेवेहापिशब्दप्रयोगः सूत्रे समुपन्यस्तः ।

अन्यच्च—नीचयोनिजस्यापि कस्यचन मानवस्य चेतसि जन्मजन्मान्तरसञ्चित-पुण्य-पुञ्ज-प्रभावतो भगवन्तं प्रति प्रबलानुरागोदयो भवेच्चेत्तदेह नास्ति कापि शक्ति र्या तं परस्या भक्तेः पथः च्योतयितुं समर्था स्यादिति समीरितं भगवता श्रीमद्भगवद्गीतायाम्—

> अपि चेत्सुदुराचारो भजते मामनन्यभाग् ।
> साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥

समदर्शी परमदयालुः श्रीभगवाँस्तु सर्वानपि स्वभक्तान् समदृष्ट्यैव पश्यति । अत एवादर्शात् सर्वे भक्ता अपि परस्परं साम्येनैव व्यवहरन्ति । भक्तानां चेतसः समदर्शित्वं जगत्प्रख्यातमेवास्ति । तदेव साम्यं भक्तेर्वैधावस्थायां शीलव्यवहारादिना, रागात्मिकावस्थायां च प्रेम्णः साम्यतया, परस्यामवस्थान्तु बुद्धिसाम्यद्वारा, सर्वत्रैव स्फुटतया भक्तचेतसि एकरूपेणैव स्फुटी भवति ॥ ३६ ॥

महाराजनरिष्यन्तजीवने सर्वथा दृश्यते, अपि च तपस्विभिरन्तकालपर्यन्तं कथङ्कारं संयतेन्द्रियै रागद्वेषशून्यैश्च भवितव्यम्, अस्य सर्वस्यालौकिको दृष्टान्तश्च महाराजनरिष्यन्तजीवनचरिते जाज्वल्यमान उपलभ्यते। द्वितीयतो राजमहिष्यः किंविधाः पतिसहधर्मिण्योऽभवन् तपश्चर्यां प्रकुर्वाणाश्च ता अन्तावधि शरीरवाङ्मनसैः कथङ्कारं तपोऽरक्षन्, एतन्महाराज्ञीजीवने समुज्ज्वलमुदाह्रियते। आर्यराजा आर्यराजमहिष्यश्च समुन्नतमधिकारमाप्नुवाना अपि किंविधं त्रिलोकपावनं धार्मिकजीवनं निर्वहन्तो निर्वहन्त्यश्च स्वीयमाश्रमत्रयं कीदृगपालयन्, इत्यनया मधुरगाथया स्पष्टं प्रकाशते। एतादृक् क्षत्रियराजाचरणं सर्वेषां क्षत्रियनरेन्द्राणामनुकरणीयमास्ते ॥ ३४-३७ ॥

## षट्त्रिंशदुत्तरशततमाध्याये सतीधर्मरहस्योद्घाटनम् ।

सतीचरित्रं त्रिलोकपावनमास्ते, सतीधर्मश्च लोकत्रयाभ्युदयस्य हेतुरस्ति, नात्र कश्चित् संशयः। तपस्याबलेन देहाध्यासराहित्यं सात्त्विकधृत्या स्थूलदेहसम्बन्धत्यागं धर्मावलम्बनेन यावदिन्द्रियसुखविस्मरणम् पतितन्मयत्वेन समाधियोगं विना काऽपि स्त्री सतीव्रतपालनतः पत्या सह चितायां दग्धदेहा प्राणान् परित्यक्तुं नार्हति। सती यां योगशक्तिमाविर्भावयति तां महायोगिनोऽपि प्रकाशयितुं नैव प्रभवेयुः। सतीतपस्यायाः सादृश्यं न भवितुमर्हति। यद्यपि सतीनां सतीत्वपालननिमित्तं मार्गद्वयं वर्त्तते, एकमाजीवनब्रह्मचर्यव्रतपालनम्, द्वितीयं चितायां पत्या सह गमनम्। किन्तु द्वितीयः पतिसहगमनतपस्यामार्गोऽस्मिन् मृत्युलोकेऽनुपम आस्ते, सतीधर्मस्य च सर्वोत्तमः समुज्ज्वलो दृष्टान्तो विद्यते। सतीधर्मो वर्णाश्रमधर्मस्याधारो वर्त्तते। वर्णाश्रमधर्मो देवलोकाभ्युदयकरः, दैव्याः शृङ्खलायाः चतुर्दशभुवनानाञ्च रक्षक आस्ते। तस्मात् सतीधर्मः त्रिलोकीरक्षको ब्रह्माण्डपवित्रकारी च विद्यते, नात्र संशयलेशः। अत्र मृत्युलोकभूमण्डले केवले भारतवर्ष एव सतीधर्मस्यादर्शभूतं पुण्यमयं महिलामण्डलमाविर्बोभवीति ॥ २१-२१ ॥

## सप्तत्रिंशदुत्तरशततमाध्याये फलश्रुतिविवेचनम् ।

अस्य महापुराणस्य फलश्रुतिमधीत्य सामान्यपाठकानां शङ्का न भवेत् तस्मात् संक्षेपतः समाधीयते। तथा हि पुराणशास्त्रं पूर्णज्ञानमयस्य वेदस्य भाष्यमयमस्ति। आत्मज्ञानलब्धये कर्मयोग्यताप्राप्तये उपासनाया लक्ष्यसिद्ध्ये च पुराणशास्त्रं सर्वतोऽधिकमवलम्बनीयमास्ते, द्वितीयतः पुराणशास्त्रं सर्वजीवहितकरं वर्त्तते। तृतीयतः श्रद्दधतां पुराणपाठकानां तच्छ्रोतॄणां वा

आत्मसाक्षात्काराय सात्त्विकबुद्ध्या दैवजगत्सम्बन्धस्थापनाय चैतत्पुराण-शास्त्रतो यादृक् सौकर्यमुपलभ्यते न तथाऽन्यशास्त्रसमूहात्। तस्मात् पुराण-शास्त्रस्य फलश्रुतौ यत् किञ्चिद् व्याह्रियेत तत् सर्वं नातिशेते। आत्मसाक्षात्कारं यदि क्षणमात्रमपि कश्चित् कर्त्तुं शक्नुयात् तर्हि तस्य कोटिकोटिजन्मकृतपापा-पनोदनस्य तु कथैव का, एष आत्मज्ञानी सर्वपापविनिर्मुक्तस्त्वरितं ब्रह्मसारूप्य-माप्नुयात्। एवंविधमात्मज्ञानप्राप्तिबीजं पुराणशास्त्रस्य स्थले स्थले निहितं विद्यते। किं बहुना, विभिन्नधर्माणां तत्क्रियासिद्धांशानाञ्च पुराणं खनिरेवास्ते। दैवजगत्सम्बन्धसाहचर्यसत्त्वे सत्येव साधको दैवशक्तिसम्पन्नो भवति। तत्स्व-रूपवर्णनं पुराणेषु कीदृग् वर्त्तते तस्य जाज्वल्यमानो दृष्टान्तः श्रीमत्सप्तशती-गीताऽऽस्ते ॥ १-३६ ॥

इति श्रीमार्कण्डेयपुराण-रहस्योद्घाटिनी टीका समाप्ता ।



## श्रीमहामण्डलके मेम्बर होनेसे—क्या क्या लाभ हैं ?

( १ ) इस अखिल भारतवर्षीय महासभाका अङ्ग बनके एक अतिमनोहर मानपत्र लाभ कर सकेंगे।

( २ ) केवल २) दो रुपये वार्षिक चन्दा देने पर तीन रुपये मूल्यकी एक सामयिक पत्रिका विना मूल्य मिलेगी।

( ३ ) अपने आत्मीय तथा परिवारोंमें कन्याओं या पुत्रोंके लिये—'शादी-फण्ड' और अन्योंके लिये 'गमीफण्ड' से समाजहितकारीकोषके द्वारा विवाह या गमीपर यथेष्ट रुपये सहायतामें पा सकेंगे।

नियमादिके लिये निम्नलिखित पतेपर पत्र लिखें।

सेक्रेटरी,—समाजहितकारीकोष,
श्रीमहामण्डल भवन, जगत्‌गंज, बनारस।

## जातीयमहायज्ञसाधन।

इस ग्रन्थमें सात अध्याय हैं। यथा—आर्य्यजातिकी दशाका परिवर्त्तन, चिन्ताका कारण, व्याधिनिर्णय, औषधिप्रयोग, सुपथ्यसेवन, बीजरक्षा और महायज्ञसाधन। यह ग्रन्थरत्न हिन्दूजातिकी उन्नतिके विषयका साधारण ग्रन्थ है। प्रत्येक सनातनधर्मावलम्बीको इस ग्रन्थको पढ़ना चाहिये। द्वितीयावृत्ति छप चुकी है, इसमें बहुतसा विषय बढ़ाया गया है। इस ग्रन्थका आदर सारे भारतवर्षमें समानरूपसे हुआ है। धर्मके गूढ़तत्त्व भी इसमें बहुत अच्छी तरहसे बताये गये हैं। इसका बंगला अनुवाद भी छप चुका है। मूल्य १।)

## व्रतोत्सव-चन्द्रिका।

अर्थात्

हिन्दु-त्यौहारोंका शास्त्रीय विवेचन।

[ लेखक—महामहोपदेशक पं० श्रवणलाल शर्मा। ]

रायल आठपेजी आकारके लगभग पौने चारसौ पृष्ठोंकी सजिल्द पुस्तकका मूल्य ३) मात्र है। शीघ्र खरीदिये, अन्यथा विलम्ब करनेपर द्वितीय आवृत्तिकी प्रतीक्षा करनी पड़ेगी।

---

## एक वर्ष तक आर्यमहिला मुफ्त कैसे पढ़ सकते हैं ?

( १ ) आर्यमहिला महापरिषद्‌का सदस्य बनकर।
( २ ) आर्यमहिलाके चार ग्राहक बनाकर।
( ३ ) वाणीपुस्तकमालाकी २०) रु० मूल्यकी पुस्तकें खरीदकर या खरिदवाकर।
( ४ ) आर्यमहिलामें १ वर्षमें १२ कालमोंका विज्ञापन छपवाकर।
( ५ ) आर्यमहिलामें ४ अच्छी पाठ्य निबन्ध देकर।

# ग्रन्थमालाएँ।

## श्रीभारतधर्ममहामण्डल और उससे सम्बन्धयुक्त संस्थाओं द्वारा निम्नलिखित ग्रन्थमालायें प्रकाशित होती हैं:—

( १ ) निगमागमग्रन्थमाला। ( २ ) धर्मकल्पद्रुम-ग्रन्थमाला। (३) वाणी-पुस्तक-माला। ( ४ ) आर्यमहिला पुराणमाला। ( ५ ) सूर्योदय-संस्कृत-ग्रन्थ-माला। ( ६ ) बंगला-ग्रन्थमाला। ( ७ ) अंग्रेजी ग्रन्थमाला। ( ८ ) महामण्डल-पुस्तिका-माला।

## स्थिर ग्राहकोंके नियम।

( १ ) इन मालाओंकी जो कमसे कम ४) मूल्यकी पुस्तकें पूरे मूल्यमें खरीदेंगे अथवा स्थिर ग्राहक होनेका चन्दा १) भेज देंगे, उन्हें प्रकाशित और आगे प्रकाशित होनेवाली सब पुस्तकें ¾ मूल्यमें दी जायंगी।

( २ ) स्थिर ग्राहकोंको मालाओंमें प्रकाशित होनेवाली हर एक पुस्तक खरीदनी होगी।

( ३ ) हर एक ग्राहक अपना नम्बर लिखकर या दिखाकर हमारे कार्यालयसे अथवा जहां वह रहता हो वहां हमारी शाखा हो तो वहांसे, स्वल्प मूल्य में पुस्तकें खरीद सकेगा।

## धर्मकल्पद्रुम।

यह हिन्दूधर्मका अद्वितीय और परमावश्यक ग्रन्थ है। हिन्दुजातिकी पुनरुन्नतिके लिये जिन जिन आवश्यकीय विषयोंकी जरूरत है, उनमेंसे सबसे बड़ी भारी जरूरत एक ऐसे धर्मग्रन्थकी थी कि, जिसके अध्ययन अध्यापनके द्वारा सनातनधर्मका रहस्य और उसका विस्तृत स्वरूप तथा उसके अङ्ग उपाङ्गोंका यथार्थ ज्ञान प्राप्त हो सके और साथही साथ वेद और सब शास्त्रोंका आशय तथा वेदों और सब शास्त्रोंमें कहे हुए विज्ञानोंका यथाक्रम स्वरूप जिज्ञासुको भलीभांति विदित हो सके। इसी गुरुतर अभावको दूर करनेके लिये भारतके प्रसिद्ध धर्मवक्ता और श्रीभारतधर्ममहामण्डलस्थ उपदेशक महाविद्यालयके दर्शनशास्त्रके अध्यापक श्रीमान् स्वामी दयानन्दजी महाराजने इस ग्रन्थका प्रणयन किया है। इसमें वर्तमान समयके आलोच्य सभी विषय विस्तृतरूपसे दिये गये हैं। इसके आठ खण्ड प्रकाशित हो चुके हैं। प्रथम खण्डका मूल्य २), द्वितीयका १॥), तृतीयका २), चतुर्थका २), पंचमका २), षष्ठका १॥), सप्तमका २), और अष्टमका २॥) है। इसके प्रथम दो खण्ड बढ़िया कागजपर भी छापे गये हैं। और दोनों ही एक बहुत सुन्दर जिल्दमें बांधे गये हैं। मूल्य ५) है।

## राष्ट्रभाषा हिन्दीमें नयी चीज।

सिर्फ यही एक पुस्तक—
पासमें रखनेसे सर्वसाधारणके सालभरके सब काम निकलेंगे। बड़े बड़े राजा-महाराजा, सरदार, सेठ-साहूकार, रानी-महारानी तथा प्रतिष्ठित विद्वानों द्वारा प्रशंसित—

# अंग्रेज़ी ग्रन्थमाला।

## इण्डियाज़ इटर्नल रिलिजन।

सनातनधर्मका रहस्य-प्रकाशक इससे बढ़कर अंग्रेज़ी भाषामें कोई दूसरा ग्रन्थ नहीं है। हालमें अमेरिकामें जो सर्वधर्मपरिषद् हुई थी, उसमें सनातनधर्मकी ओरसे पढ़नेके लिये पूज्यपाद श्रीस्वामीजी महाराजने यह ग्रन्थ-रत्न लिखकर प्रकाशित किया है। मूल्य ॥) डाक व्यय पृथक्।

इस ग्रन्थके अतिरिक्त महामण्डलकी अंग्रेजी ग्रन्थमालाके "वर्ल्डस् इटर्नल रिलिजन" और "श्रीमद्भगवद्गीता" ये दो ग्रन्थ भी बिक्रीके लिये प्रस्तुत हैं।

## प्रवीण दृष्टिमें नवीन भारत।

इस ग्रन्थमें आर्यजातिका आदि निवासस्थान, उन्नतिका आदर्श निरूपण, शिक्षादर्श, आर्यजीवन, वर्णधर्म आदि विषय वैज्ञानिक युक्ति तथा शास्त्रीय-प्रमाणोंके साथ वर्णित हैं। यह ग्रन्थ धर्मशिक्षाके अर्थ बी० ए० क्लासका पाठ्य है। इसके दो खण्ड हैं। प्रत्येकका मूल्य २)

## नवीन दृष्टिमें प्रवीण भारत।

भारतका प्राचीन गौरव और आर्यजातिका महत्त्व जाननेके लिये यह एक ही पुस्तक है। इसका द्वितीय संस्करण परिवर्द्धित और सुन्दर होकर छप चुका है। यह ग्रन्थ भी बी० ए० क्लासका पाठ्य है। मूल्य १)

## श्रीरामगीता।

श्रीमहर्षि वशिष्ठकृत तत्त्वसारायणमें कथित यह श्रीरामगीता है। श्रीरामचन्द्रजीके मर्यादापुरुषोत्तम अवतारकी लीलाओंका विशद रहस्य प्रकाशित किया गया है। श्रीरामचन्द्र सीता और हनुमान आदिके कई त्रैवर्णिक चित्र भी दिये गये हैं। कागज छपाई तथा जिल्द आदि उत्कृष्ट हैं। एक धर्म्मफण्डकी सहायताके लिये यह ग्रन्थ बिकता है। प्रस्तुत पुस्तकका मूल्य केवल २॥)

## कहावतरत्नाकर।

न्यायावली और सुभाषितावली सहित। हिन्दी भाषाका यह एक अद्वितीय ग्रन्थ है। इसमें हिन्दीभाषाकी प्रधानता रखकर पांच भाषाओंमें कहावतें दी गई हैं। हिन्दी और उसीकी संस्कृत कहावत, अंग्रेजी कहावत, फार्सी कहावत, उर्दू कहावत और अरबी कहावत। ये कहावतें प्रत्येक भाषाके प्रधान प्रधान विद्वानों द्वारा संग्रहीत और संशोधित हुई हैं। इसी प्रकार संस्कृत न्यायावली और उसका अंग्रेजी अनुवाद और विस्तृत अंग्रेजी विवरण तथा हिन्दी अनुवाद और हिन्दी विवरण दिया गया है। अन्तमें संस्कृत सुभाषितावली हिन्दी अनुवाद सहित दी गई है। हिन्दी कहावत, संस्कृत न्यायावली

और संस्कृत सुभाषितावली अकारादि क्रमसे दी गयी है। इसके प्रारम्भमें अंग्रेजी और हिन्दी भाषाका महत्त्व प्रतिपादन करनेवाली एक भूमिका दी गई है। पुस्तक सर्वाङ्गसुन्दर है, सुन्दर जिल्द बंधी हुई है। एक धर्मफण्डकी सहायताके लिये यह ग्रन्थ बिकता है। रायल एडीशन १०) साधारण संस्करण ७)

## संस्कृत ग्रन्थमालाके ग्रन्थ।

### सप्तगीताएँ।

पञ्चोपासनाके अनुसार पांच प्रकारके उपासकोंके लिये पांच गीताएं—श्रीविष्णुगीता, श्रीसूर्य्यगीता, श्रीशक्तिगीता, श्रीधीशगीता और श्रीशम्भुगीता एवं संन्यासियोंके लिये संन्यासगीता और साधकोंके लिये गुरुगीता भाषानुवाद सहित छप चुकी है। इन सातों गीताओंमें अनेक दार्शनिक तत्त्व, अनेक उपासनाकाण्डके रहस्य और प्रत्येक उपास्य देवकी उपासनासे सम्बन्ध रखनेवाले विषय सुचारुरूपसे प्रतिपादित किये गये हैं। ये सातों गीताएं उपनिषद्रूप हैं। विष्णुगीताका मूल्य १), सूर्य्यगीताका मूल्य ॥), शक्तिगीताका मूल्य १), धीशगीताका मूल्य ।॥), शंभुगीताका मूल्य १), संन्यासगीताका मूल्य १), और गुरुगीताका मूल्य ।) है। इनमेंसे पञ्चोपासनाकी पांच गीताओंमें एक एक तीनरंगा विष्णुदेव, सूर्य्यदेव, भगवती और गणपति देव तथा शिवका चित्र भी दिया गया है। शम्भुगीतामें वर्णाश्रमबन्ध नामक चित्र भी देखने योग्य है।

### पुराणरहस्यम्।

श्रीस्वामी जी महाराजका पुराण सम्बन्धी यह अपूर्व संस्कृत ग्रन्थ है। इसके पाठसे पुराणोक्त किसी विषयमें शंका नहीं रह जाती। मूल्य १॥) मात्र

### कर्ममीमांसादर्शन।

महर्षि भरद्वाजकृत यह दर्शनशास्त्र अनुसन्धान द्वारा प्राप्त हुआ है, जिसके प्रथम दो धर्मपाद, तथा संस्कारपाद प्रकाशित हुए हैं। सूत्र, सूत्रका हिन्दीमें अर्थ और संस्कृत भाष्यका हिन्दी अनुवाद इस प्रकार इसको छापा गया है। केवल हिन्दीभाषामें भी यह दर्शन छपा है, मूल्य १॥), संस्कृत भाष्यका मूल्य है २)।

### स्तोत्रकुसुमांजलि।

इसमें पंचदेवता, अवतार और ब्रह्मस्तुति तथा धर्मस्तुति, गंगादि पवित्र तीर्थोंकी स्तुति, वेदान्तप्रतिपादक स्तुतियां और काशीके प्रधान देवता श्रीविश्वनाथादिकी स्तुतियां हैं। मूल्य ।) आना।

### उपदेशपारिजात।

यह संस्कृत गद्यात्मक अपूर्व ग्रन्थ है। सनातनधर्म क्या है, धर्मोपदेश किसको कहते हैं, सनातनधर्मके सब शास्त्रोंमें क्या २ विषय हैं, धर्मवक्ता होनेके लिये किन २ योग्यताओंके होनेकी आवश्यकता है इत्यादि अनेक विषय इस

ग्रन्थमें हैं। संस्कृत विद्वान्मात्रको पढ़ना उचित है और धर्मवक्ता, धर्मोपदेशक, पौराणिक पण्डित आदिके लिये तो यह ग्रन्थ सब समय साथ रखने योग्य है मूल्य ॥) आना।

### हठयोगसंहिता।

भाषानुवाद सहित। योगविषयक ऐसा अपूर्व ग्रन्थ आजतक प्रकाशित नहीं हुआ है। इसमें हठयोगके ७ अंग और क्रमशः उनके लक्षण, साधनप्रणाली आदि सब अच्छी तरहसे वर्णन किये गये हैं। गुरु और शिष्य दोनों ही इससे पूरा लाभ उठा सकते हैं। मूल्य ।॥)

### तत्त्वबोध।

भाषानुवाद और वैज्ञानिक टिप्पणीसहित। यह मूल वेदान्त ग्रन्थ श्रीशंकराचार्य्यकृत है। इसका बंगानुवाद भी प्रकाशित हो चुका है। मूल्य =)

### मन्त्रयोगसंहिता।

भाषानुवाद सहित। मन्त्रयोगविषयक ऐसा अपूर्व ग्रन्थ आजतक प्रकाशित नहीं हुआ है। इसमें मन्त्रयोगके १६ अङ्ग और क्रमशः उनके लक्षण, साधनप्रणाली आदि सब अच्छी तरहसे वर्णन किये गये हैं। मूल्य १) रु०

### दैवीमीमांसादर्शन।

वेदके तीन काण्ड हैं। यथाः—कर्मकाण्ड, उपासनाकाण्ड और ज्ञानकाण्ड। ज्ञानकाण्डका वेदान्तदर्शन, कर्मकाण्डका जैमिनीदर्शन और भरद्वाजदर्शन और उपासनाकाण्डका यह अङ्गिरादर्शन है। इसका नाम दैवीमीमांसादर्शन है। यह ग्रन्थ आजतक प्रकाशित नहीं हुआ था। मूल्य १॥)

### श्रीमद्भगवद्गीता प्रथम खण्ड।

श्रीगीताजीका यह अपूर्व हिन्दीभाष्य प्रकाशित हो रहा है, जिसका प्रथम खण्ड, जिसमें प्रथम अध्याय और द्वितीय अध्यायका कुछ हिस्सा है, प्रकाशित हुआ है। गीताका अध्यात्म, अधिदैव, अधिभूतरूपी त्रिविध स्वरूप, प्रत्येक श्लोकका त्रिविध अर्थ और सब प्रकारके अधिकारियोंके समझने योग्य गीताविज्ञानका विस्तारित विवरण इस भाष्यमें मौजूद है। मूल्य १) रु०।

### योगदर्शन।

हिन्दी भाष्यसहित। इस प्रकारका हिन्दीभाष्य और कहीं प्रकाशित नहीं हुआ है। सब दर्शनोंमें योगदर्शन सर्ववादिसम्मत दर्शन है। मूल्य २) रु०

### संस्कृतविश्वविद्यालय।

अखिल भारतीय संस्कृत विश्वविद्यालयके समस्त पाठ्यग्रन्थ भारतधर्मसिण्डिकेट लिमिटेड, काशीमें मिलते हैं। जिन्हें आवश्यकता हो, मंगालें।

सब पुस्तकें मिलनेका पता—

मैनेजर—निगमागम-बुकडिपो,

भारतधर्मसिण्डिकेट लिमिटेड,

स्टेशन रोड, बनारस सिटी।

भावानामस्ति गीतायां सन्निवेश इति मे बलवान् विश्वासः । इदानीमहं गीतोक्तं त्रिगुणमनुसृत्य पाठकमनोविनोदाय किमप्यधो निवेदयामि—

एकमेव परमात्मानं भक्ता अनेकरूपेण समुपासते । स एव शिवो, विष्णुः, सूर्यः, शक्तिः, गणपतिश्चेत्यादिभेदतो गीयते । स ईश्वरः, यः किल प्रकृतिं निजाधीनां कृत्वा चराचरं सृजति । उक्तं चापि गीतायां "मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्" इति । सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, वैषम्यावस्था विकृतिरित्युच्यते । प्रकृतावेव सत्त्वं रजस्तम इति त्रयो गुणाः सन्ति । तेषां स्वरूपविषये चतुर्दशाध्याये गीतायामेव प्रतिपादितं, यथा—

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥
तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसंगेन बध्नाति ज्ञानसंगेन चानघ ! ॥
रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसंगेन देहिनम् ॥
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥

× × ×

सत्त्वं सुखे संजयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥
रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥
सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद् विवृद्धं सत्त्वमित्युत ॥
लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥
सत्त्वात् संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ इत्यादि ।

जीवो हि त्रिगुणाधीनः । यदा खलु जीवस्त्रिगुणमतिक्रामति त्रिगुणं स्ववशं करोति वा, तदैव स परमात्मस्वरूपो निःश्रेयसमधिगतो ब्रह्मभूयाय

कल्पते। "द्विधाकृत्वाऽऽत्मनो देहमर्धेन पुरुषोऽभवत्। अर्धेन नारी तस्यां स विराजमसृजत् प्रभुः" इति मनुस्मरणात्, "ये चैव सात्त्विका भावा राजसास्तामसाश्च ये। मत्त एवेति तान् विद्धि नत्वहं तेषु ते मयि" इति गीतोक्त्या च परमात्मन एव प्रकृति र्गुणत्रयं वा प्रादुर्भवतीति सिध्यति।

अहं ममेतिवत् शक्तिशक्तिमतोरभेदात् भगवतः शङ्कराचार्यादयोऽद्वैतवादिन एकमेव ब्रह्म न द्वितीयं किञ्चिदित्यामनन्ति। सिद्धान्तमिमं "सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन" "एकमेवाद्वितीयम्" इत्यादिना श्रुतिरपि समर्थयति।

इदमेवमवधेयं यत् ब्रह्मणः स्वरूपद्वयं—निर्गुणं सगुणं चेति। गुणानामस्तित्वाभावात् निर्गुणं ब्रह्म निर्विकल्पं निरीहं निर्विकारं निराकारमित्याद्युच्यते। त्रिगुणाविर्भावदशायां तदेव सगुणमित्युदीर्यते। सगुणं ब्रह्मैवेश्वरः परमात्मा। अस्यैवेश्वरस्य परमात्मनः शक्तिः प्रकृतिरिति।

विद्या अविद्या वा, माया विद्या वा चेति ब्रह्मणो द्विविधा शक्तिः। शुद्धसत्त्वप्रधाना माया, विद्या वा गीयते। मलिनसत्त्वप्रधाना अविद्येति कथ्यते। शुद्धसत्त्वप्रधानमायोपाधिरीश्वरः, मलिनसत्त्वप्रधानाऽविद्योपाधिर्जीव इतीश्वरजीवयोरुपाधिरेव भेदं जनयति, उक्तं च पञ्चदश्याम्—

मायाऽविद्ये विहायैवमुपाधी पर-जीवयोः।
अखण्डं सच्चिदानन्दं परं ब्रह्मैव लक्ष्यते॥

इत्यादिना ईश्वरजीवयोरभेद एव सिध्यति। "श्लोकार्द्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः। ब्रह्मसत्यं जगन्मिथ्या जीवो ब्रह्मैव नाऽपरः" इति साधूक्तं केनचित् सुधीधौरेयेण।

गीतायामपि अन्याद्वशरूपा परमात्मनः शक्तिद्वयी प्रदर्शिता। तथाहि—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत्॥

एवमत्रावधेयं यत् यस्याः प्रकृतेरष्टौ भेदाः प्रदर्शिताः, सा किल मूलप्रकृतिः, या किल जीवभूताऽखिलं ब्रह्माण्डं बिभर्त्ति, सा दैवी प्रकृतिः। इयं दैवी प्रकृतिः मूलप्रकृतेः सत्त्वरजस्तमोगुणान् प्रेरयन्ती निखिलं जगत् सृजति। इदं हि गुणत्रयमनुसृत्य प्राणिनः सात्त्विकाः राजसिकाः, तामसिकाश्च जायन्ते। यथा चोक्तं गीतायामेवाष्टादशाध्याये—

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते॥
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः।
हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः॥
अयुक्तः प्राकृतस्तब्धः शठो नैष्कृतिकोऽलसः।
विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते॥

सत्त्वं रजस्तम इति त्रिगुणेषु रजोगुणो हि नितरां प्रबलो भवति। आत्मनो हितमिच्छता पुरुषेण स्वस्मिन् प्रवर्द्धमानो रजोगुणः सर्वथा प्रशमयितव्य एव। नान्यथासौ मोक्षमार्गेऽग्रेसरिष्यति। तथा हि गीतं गीतायां तृतीयेऽध्याये—

काम एष क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥
धूमेनाऽव्रियते वह्निर्यथाऽऽदर्शो मलेन च।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम्॥
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च॥
इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम्॥
तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम्॥

सत्त्वगुणः प्रकाशस्वरूपः, तमोगुणश्चान्धकाररूपः, अनयोरुभयोरेव स्वतन्त्ररूपेण क्रियासामर्थ्यं न विद्यते। रजोगुण एव क्रियाशालित्वं तिष्ठति। रजोगुणो हि यदा सत्त्वगुणाभिमुखो भवति तदा दैवकार्याणि कुरुते। यदा च तमोगुणमाश्रयति तदा तामसिकमासुरकृत्यजातं विदधाति। इममेव सिद्धान्तमभिलक्ष्य गीतायां षोडशाध्याये भगवता आनन्दकन्देन श्रीकृष्णचन्द्रेण दैव्या आसुर्याश्च सम्पदो भेदो निरूपितः। तथाहि—

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥
अहिंसासत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।
दयाभूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता।

भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥
दैवीसम्पद् विमोक्षाय निबन्धायासुरी मता ।
माशुचः सम्पदं दैवीमभिजातोऽसि भारत ॥
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद् गृहीत्वाऽसद्ग्राहान् प्रवर्त्तन्तेऽशुचिव्रताः ॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥
इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्ये इत्यज्ञानविमोहिताः ॥
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु ॥

---

## कर्णेषु तैलं दत्वा सुखं शेरते ।

—०*०—

इदानीं काले भारते बलीयसा रंहसा वर्णसंकरप्रचारको विवाहः प्रव-द्धर्धते । ब्राह्मण्या सह वैश्यस्य, वैश्यया सह ब्राह्मणस्य, शूद्रया क्षत्रियस्य, क्षत्रियया शूद्रस्य च सम्पद्यमानोद्वाहो यत्र तत्र श्रूयते । आधुनिका नेतृमा-निनो विवाहमेतादृशं समीहन्ते, प्रचारयन्ति, कुर्वन्ति च । किमन्यत्, अस्माकं देशवासिनः कियन्त एव पाश्चात्यशिक्षादीक्षाप्रणयिनः पुरुषपुङ्गवाः आङ्गल-

देशीययुवतीभिः सह विवाहं कुर्वन्ति। परिणय एतादृशः प्रबलेन वेगेन समेधते। पूर्वस्मिन् समये एतादृशस्य विवाहस्य कुत्रापि, कदाऽपि, चर्चाऽपि न श्रूयते स्म। यदि कश्चन महामोहमलीमसान्ध एतादृशं परिणयनं करोतिस्म, तदासौ समाजबहिष्कृतो बभूव। यूरोपे अमेरिकायामपि एतादृशो विवाहो निषिद्धः। आमेरिकः कश्चित् निग्रोजातीययोद्वाहं न कर्त्तुं पारयति। शार्मण्य ( जर्मन ) देशे तादृशविवाहप्रतिषेधात्मकः प्रस्ताव एव समुपस्थापितो वर्त्तते स्म। मन्ये स हि स्वीकृतो जातः। शार्मण्यदेशमन्त्रिणा एकदा स्वकीये व्याख्याने समुद्घोषितं यत्—"वर्णसंकरो नितरां भयावहः। केचनैतेन दाम्पत्यसुखसमेधनं पश्यन्ति, किन्तु नैवम्, एतेन राष्ट्रिया समुन्नतिस्तु न कदापि कथमपि भाविनी। घोटकधावनप्रतिद्वन्दिताविजयसम्पादनार्थम्, समीचीनघोटकवंशसंरक्षणार्थमस्माभिः अश्वतर-( खच्चर ) संयोगो निषिध्यते। एतन्निषेधवत् मानवसमाजेऽपि वर्णसंकरता निषेधव्यैवेत्यादि" भारतवर्षवासिनस्तु वर्णसंकरकरस्योद्वाहस्य सर्वदैव निषेधका अभूवन्। भगवान् मनुर्वदति—

> यत्रैते हि परिध्वंसा जायन्ते वर्णदूषकाः।
> राष्ट्रिकैः सह तद् राष्ट्रं क्षिप्रमेव प्रणश्यति॥

गीतायामपि प्रतिपादितम्—

> संकरो नरकायैव कुलघ्नानां कुलस्य च।
> पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः॥
> दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः।
> उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः॥
> उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन!
> नरके नियतं वासो भवतीत्यनुशुश्रुमः॥

चेखिद्यते चेतो यत् गीतां बहुमन्यमाना अपि गान्धी-नेहरूप्रभृतयो नेतृमानिनो वर्णसंकरविवाहस्य नैव केवलं समर्थकाः, प्रचारकाः, अनुमोदकाः, प्रत्युत कारकाः संजाताः। नितरां सन्तपामो यत् धर्मज्ञानलवलेशतोऽपि विहीना मोहान्धाः समाजेषु निरन्तरमत्याचरन्ति! सामाजिकास्तु कर्णेषु तैलं दत्त्वा सुखं शेरते!

## आङ्गलशिक्षाया दुर्दशा।

सहयोगिना 'लीडर' पत्रेण प्रकाशितसमाचारमाश्रित्य 'आज' पत्र-सम्पादकेन सौर मार्गशीर्षस्य सप्तविंशतमे अङ्के एका टिप्पणी लिखिता। तामवलोक्य आङ्गलशिक्षितानां कीदृशी दुर्दशा साम्प्रतं वर्त्तत इति स्फुटं भवति। श्रूयते—प्रयागवास्तव्यः बी० ए० पर्यन्तमधिगताङ्गलभाषाशिक्षः कश्चित् पुमान् स्वकीय 'कोट पाकिटे' 'पालिश' पिटिकां मार्जनीं ( बुरुश ) च कृत्वा जीविकोपार्जनार्थम् उपानत्सम्मार्जनं ( बूट पालिश ) कर्त्तुं गृहाद्गृहान्तरमाहिण्डते। एतदपि कार्यं स्वल्प न प्राप्येतेति हेतोः स हि सज्जनः उपानद्युगलमार्जनीकरणपारिश्रमिकं केवलम् अर्धपणकमेव गृह्णाति। एकस्मिन् समये सज्जनोऽयं सर-तेजबहादुरसप्रूमहोदयस्य गृहमुपस्थाय तदीयमुपानद्युगलं सम्मार्जितवान्। ततः सप्रूमहोदयस्तस्मै पञ्चरूप्यकाणि प्रदातुमैच्छत्। सज्जनोऽसौ निश्चयादधिकमादातुं न स्वीकृतवान्। अनन्तरं सप्रूमहाशयः स्वकीयगृहसम्मार्जनं कारयित्वा तस्मै पञ्चरूप्यकाणि दत्तवान्! युक्तप्रान्तीये 'पुलिस' विभागे बी० ए० परीक्षां समुत्तीर्णः एको ग्रेजुएटमहोदयः 'कांस्टेबल' पदे विराजते। हन्त भो इदानीन्तनीयमाङ्गलशिक्षा कथमिव व्यर्थेति संवादेनैतेन ज्ञायते। तथापि लोका आङ्गलभाषाशिक्षालयेष्वेव स्वपुत्रान् प्रेषयन्ति किं बहुना, संस्कृतविद्वांसोऽपि गतानुगतिकतामापन्ना निजान् शिशून् आङ्गलभाषापाठशालासु असंख्यमुद्रा व्ययीकृत्यापि प्रवेशयन्ति। सर्वस्वं सञ्चितमपि स्वाहाकुर्वन्ति। स च विद्यार्थी एम्० ए० पर्यन्तमुत्तीर्णो जीविकामलभमानो रजककुक्कुरवद्दुर्दशामनुभवति, आङ्गलशिक्षामधिकृत्य साधु वर्णितं केनापि कविना —

> पाश्चात्यसभ्यता रम्या शिक्षा चार्थकरी भृशम्।
> एतादृशो महामोहः पण्डितेष्वपि दृश्यते॥
> वस्तुतस्तु महाभ्रष्टा शिक्षा पाश्चात्यचालिता।
> आरब्धा सेवकान् लब्धुं दास्यवृत्तिप्रसारिणी॥
> चातुर्यं चाकरीमात्रे कौशलं बूटपालिशे।
> भाले लिखति चैतावत् शिक्षा पाश्चात्यचालिता॥
> विक्रीयतु पितुर्गेहं बन्धकीकृत्य भूषणम्।
> मातुर्वापि स्त्रिया वापि बी० ए० पर्यन्तमागतः॥
> अधिकां स तु नाप्नोति भ्रामं भ्रामं भृतिं क्वचित्।
> करालजठरज्वालाविकलीकृतमानसः॥

एम्० ए० पर्यन्तमुत्तीर्ण इतिहासे प्रतिष्ठितः ।
छात्रो न वक्तुं शक्नोति भीष्मः कस्य सुतोऽभवत् ॥
आङ्गलानां तु को राजा कतिवारं व्यमूत्रयत् ।
इति सर्वं विजानाति न जानाति स्वकं गृहम् ॥
पाश्चात्यचाकचिक्यान्तर्दोषान् प्रच्छन्नपातकान् ।
प्रपश्यन्तो विमुह्यन्ति प्राच्या विद्वद्वरा अपि ॥ इत्यादि ।

## विश्ववैचित्र्यम् ।

लन्दननगरे ससमारोहं सम्पत्स्यमाने गोप्रदर्शनीमहोत्सवे समानीतासु गोषु एका तादृशी आसीत् यया १६८ पौण्डपरिमितम् ( ९९ सेटकमितम् ) दुग्धं दिनद्वयेनैव प्रदत्तम् । एतेन ज्ञायते यदियमेकस्मिन् दिवसे सार्द्धैकोनपञ्चाशत्सेटकपरिमितं दुग्धं ददाति ! गौरियं प्रशियनजातीया श्रूयते । एतस्याः प्रतिपालकेनैव सर्वोत्कृष्टं प्रथमं पारितोषिकमधिगतम् । गोभक्षकाणां गोरण्डजातीयानामीदृशीं गौसेवां यदि गाः मातॄर्मन्तारो हिन्दवोऽनुकुर्युस्तदा शोभनं स्यात् ।

× × × × ×

अमेरिकायां यूरोपे च सम्प्रति पूर्वापेक्षया महिलानां तत्रत्यानामुच्चता ( लम्बाई ) 'इञ्च' त्रयमधिकायितेति ज्ञायते । तासां स्वास्थ्यमपि पूर्वापेक्षया नितरां समीचीनं विद्यते । विषयेऽत्र प्रश्ने जाते शिकागोचिकित्सकसंघभवने डाक्टर रीडमहोदयेन कथितम् यत् 'एतादृश परिवर्तने समीचीनं भोजनमेव प्रथमं निदानमास्ते' । भारतवर्षवासिनस्तु बहुना कारणकलापेन निरन्तरं दरिद्रति । पातिव्रत्यधर्मावलम्बिन्यो नैजसन्ततीश्च प्राणाधिकां मन्यमाना पतिपुत्रभोजनावशिष्टं यत् किमपि भुञ्जते । समृद्धेष्वपि गृहेषु कदाचित् द्विदलाभावः, कदाचन शाकाभावः, कदाचिदुभयोरभाव इति सततं श्रूयते । जननीनां स्वास्थ्ये एव सन्ततीनां स्वास्थ्यं निर्विभर्त्ति । भगवन् ! भारतस्य दरिद्रावस्था त्वयैवापसारयितुं शक्यते । परिरक्ष दीनं भारतवर्षम् ।

× × × × ×

पश्चिमाफ्रिकासरोवरे उड्डयनपरायणा मत्स्या दृश्यन्ते ! १६२६ ईशवीयवर्षादारभ्य १६३२ ईसवीयवर्षाभ्यन्तरे अमेरिकादेशे ६३,२०६ संख्यकानां नरनारीणां हत्या जाता ! गत महासंग्रामसमये केवलं गुप्तचरविभागे इङ्गलैण्डदेशेन १५ लक्षपौण्डमितं द्रव्यमेकस्मिन्नेव मासे व्ययितमिति श्रूयते । पञ्चदशरूप्यकाणामेकं पौण्ड नामधेयं भवति ।

# धर्म्मदुर्गत्राणायाऽस्मत्पूर्व्वजनानां दूरदर्शित्वम् ।

## प्रणेता—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री शुजाबादाऽभिजनः ।

( 'मुलतान' स्थ-श्रीसनातनधर्मसंस्कृतकालेजाऽध्यापकः )

( क्रमागतम् )

सानातनिका देशिकचर्म्मकारनिर्म्मिता उपानह उपयुञ्जते-सुधारकास्तु वैदेशिक-'बूटानि' उपयुज्य एतेषामुदरं-कृन्तन्ति । प्रथमे(१)मलवाहकेभ्यो मलापकर्षणार्थं वृत्तिं ददति; इतरे स्वविष्ठामपि स्वयमुत्थाप्य मलवाहकानां गृहे स्वधनगमनमपि न सहन्ते । पूर्व्वे ग्रहणाद्यवसरे निम्नजातीयेभ्यो गोधूमादिकं ददति; परे तु तेषां परे ( शत्रव ) इव गोधूमस्यैककणमपि तेभ्योऽमुष्मिन्नवसरे न दित्सन्ति । अस्मदीया अधमजातिनिर्म्मितानि क्रीडनकानि स्वबालकानां कृते क्रीत्वा तद्-व्याजेन तेभ्य आर्थिकसाहाय्यं प्रयच्छन्ति; सुधारकास्तु तेषां क्रयणे स्वापमानमिव मन्वानास्तेभ्यो धनमदित्सन्त इव 'जापाना' दिप्रणीतक्रीडनकानि क्रीत्वा स्ववित्तं विदेशे प्रहिण्वन्ति । प्राचीनाःकूपादिकस्थं पङ्कं निम्नजातीयैश्शोधयित्वा(२)तदपदेशेन तानूत्तन्ति; नवीनास्तु 'नलका' सेवनं वितन्वाना अस्पृश्येभ्यःकपर्द्दिकैकतयीमपि नाऽर्पयिपन्ति । धार्म्मिका विवाहादिसमये तेभ्योऽवशिष्टं भोजनादिकं प्रयच्छन्ति; सुधारका अल्पव्ययं प्रचार्य्याऽधिकभोजनादिकं निर्म्मापयन्त्येव न । शीतलाद्यवसरे निम्नजातीया धार्म्मिकगृहेभ्यो विविधमधुररोटिकाःप्राप्नुवन्ति; सुधारकाणां गृहेषु तु तादृशाऽवसराणामेव अत्यन्ताऽभावः । निम्नजातीयैर्निर्म्मितानि वस्तुस्थापनार्थानि शिक्यानि ( छिक्का ) शोधनाय मार्ज्जनीर्वस्त्रावलम्बनार्थांश्च नागदन्तान् ( खूंटी ), वस्त्रादिस्थापनार्थं पेटकान् ( टोकडे ), गोधूमादि शोधनार्थं शूर्पाणि ( छज्ज ), निषदनार्थं कटान् ( चटाई ), उलूखलमुसलादीनि च परश्शतानि वस्तूनि क्रीत्वा वयं तेषामाजीविकां निर्म्मिमीमहे; परं सुधारकाणां गृहे एषामत्यन्ताऽभावः; सन्त्यपि कानिचिद्वस्तूनि विदेशनिर्म्मितान्येव भवन्ति । अस्मदीयपूर्व्वजास्तन्तुवायादिनिम्नजातिनिर्म्मितानि

---

( १ ) प्रथमे—'प्रथम चरमे'ति जसि वा सर्व्वनामता । ( सनातनधर्म्मणः ) । इतरे—सुधारकाः ।

( २ ) एवं कृत्वा पश्चाद् गाङ्गजलेन कूपशुद्धिर्विधीयते ।

वासांसि(१)विवाहसमये समयान्तरे वा उपयुयुजिरे; परमेभिराङ्गलाद्यनुयायिभिः सुधारकैरेव आङ्ग्लानां दासैर्भूत्वा वैदेशिकवस्त्राणि विविधवेषभूषाश्च प्रसारिताः। किं भूयसा—वयं तृणकाष्ठ-रज्जु-पर्य्यन्तान्यपि वस्तूनि निम्नजातीयेभ्यः क्रीत्वा तदपदेशेन तेषां साहाय्यमेव कुर्म्मः; परन्तु इमे सुधारका एव-ये आत्मनोऽस्पृश्यानां बन्धून् मन्वते-विदेशनिर्म्मितानि चुल्ल्यादियन्त्राण्यानाय्य अस्पृश्यानां वृत्तिं छित्वा विदेशोदरे प्रहिण्वन्ति। सनातनधर्म्माणस्तानस्पृश्यता सीमायामाबध्य तदीयसन्तोषवृत्तिसमेधने सहाया भवन्ति; सुधारका एव तान् स्पृश्यान् कृत्वा, तदीयोच्चाकाङ्क्षा प्रवद्धर्य्य तेषां सन्तोषवृत्तिमप्यसारयितुम्, अथ च स्वेषामिव तेषामप्याशापिपासासमुपबृंहणेनाऽशान्तिमुत्पादयितुञ्च व्यग्रास्सन्ति। अधुना प्रियपाठका विमृशन्तु, यत्सनातनधर्म्माणोऽमीषां रक्षकास्सुधारका वा? सुधारकास्तु तेषामुदरविदरङ्कृत्वा तेषां सहायकान् सनातनधर्म्मणोऽपि(२)तेभ्यः पृथक् कृत्वा,(३)स्पृश्यतामात्रमेव कतिपयदिवसपर्य्यन्तं तेभ्यो वाङ्मात्रेण वितीर्य्य, 'इतो भ्रष्टस्ततो नष्ट' इति न्यायनिदर्शनायमानान् वितत्य, तान् समूलमेव जिघांसन्ति; इति स्पष्टमेव प्रतीयते; यत एते किञ्चित् समयोत्तरं स्वस्वभावाऽनुसारमिदमान्दोलनमपि विस्मृत्यान्दोलनान्तरेषु-मग्ना एतान् द्रक्ष्यन्त्यपि नहि; कुत एतेषां त्राणवार्त्ता।

पाठकमहाभागाः! सनातनधर्म्माणो यदमीषां स्पर्शादिकं न कुर्व्वन्ति; तदमूलकं नाऽस्ति; किन्तु समूलकमेव। तेषां सिद्धान्तोऽयम्—'शब्दप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणम्' (महाभाष्य १ आ०)। भाष्ये 'किञ्च भोः! श्लोका अपि प्रमाणम्' इत्याशङ्क्य—'किञ्चातः' इत्युत्तीर्य्य 'अनुन्मत्तगीतस्य प्रामाण्यं समर्थितम्। एको धर्म्मशास्त्रकर्त्ता कश्चिदुन्मत्तो भवितु' शक्नोति; परमस्मिन् विषये तु भिन्नभिन्नानामप्येकवाक्यताऽवलोकनाद् अस्पृश्यताऽऽदेशः स्पष्टमनुन्मत्तगीतः प्रतीयते; तेनैव च तस्य प्रामाण्यं सिद्ध्यति, अधुनैतत्सम्बन्धे प्रमाणानि सङ्गृह्यन्ते। तथाहि—

'शूद्राणामनिरवसितानाम्' २।४।१० इति सूत्रयतः श्रीपाणिनेः, 'यैर्भुक्तं पात्रं क्षारोदकप्रक्षालनेन संस्कारेणाऽपि न शुद्ध्यति, ते निरवसिताः, इति

(१) विवाहसमये समयान्तरे वा कुम्भकारादिनिर्मितवस्तून्युपयुज्यन्ते धार्म्मिकैः; सुधारकास्तानि समुपेक्षन्ते, स्वविवाहञ्च वैदिकमाचक्षते।

(२) सनातनधर्म्मणः (शसि रूपम्) 'न संयोगाद्वमन्ता'दिति 'अल्लोपोऽनः' निषिद्ध्यते।

(३) केवलस्पृश्यता तेषां बुभुक्षां दवयिष्यति तु न, प्रत्युत वर्द्धयिष्यत्येव।

निरवसिताँल्लक्षयतोऽनिरवसितप्रत्युदाहरणे 'चाण्डालमृतपाः' इत्युदाहरतश्च भाष्यकृतः श्रीपतञ्जलेरप्यभीष्टाऽस्पृश्यता।

अस्पृश्यानाञ्च योनिः प्राक्-कृतकर्म्मभिरेव प्राप्यते अत एव जन्मनैव। तदुक्तं मनुना—

'मानसैरन्त्यजातिताम्' १२।९। अन्यत्राऽपि—

'चाण्डालपुक्कसानाञ्च भ्रूणहा योनिमृच्छति'

—मनुः १२।५५

छान्दोग्येऽपि—'य इह कपूयाचरणा। अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्, श्वयोनिं वा, सूकरयोनिं वा, चाण्डालयोनिं वा' ( छान्दो० ब्रा० उप० प्र० ५ ख० १० )।

याज्ञवल्क्योऽपि—'वितथाऽभिनिवेशी च जायतेऽन्त्यासु योनिषु'। तेन, प्राग् जातीनामुल्लेखात्तत्तश्च तत्कर्म्मणामुल्लेखादासां जातीनां जन्ममूलकत्वं सिद्धं नतु कर्म्ममूलकत्वम्। अत एव 'सति मूले तद्विपाको जात्यायुर्भोगाः' इति योगदर्शनसूत्रं सङ्गच्छते।

अस्पृश्यानां स्पर्शे शुद्धिरुक्ता; तथा च—

'चर्म्मके रजके वैश्ये धीवरे नटके तथा।
एतान् स्पृष्ट्वा द्विजो मोहादाचमेत् प्रयतोऽपि सन्।'
वैश्ये-वेश्यापुत्रे इत्यर्थः। —अत्रिः २८४

'चाण्डालदर्शने सद्य आदित्यमवलोकयेत्।
चाण्डालस्पर्शने चैव सचैलं स्नानमाचरेत्।'

पराशर० अ० ६ श्लो० २४

'चाण्डालं पतितं स्पृष्ट्वा शवमन्त्यजमेव वा।
उदक्यां सूतिकां नारीं सवासाः स्नानमाचरेत्।'

—संवर्त १८४

अन्यत्राऽपि स्मर्य्यते—

'न संवसेच्च पतितैर्न चाण्डालैर्न पुक्कसैः।
न मूर्खैर्नाऽवलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः।'

मनुस्मृतौ यथा—

'दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुद्ध्यति।' ५।८५

उदक्या—रजस्वला । दिवाकीर्तिश्चाण्डालः, तथा चाऽमरः–'चण्डाल प्लवमातङ्गदिवाकीर्तिजनङ्गमाः' शूद्रवर्गे ॥ १६ श्लो० ॥

'चाण्डालश्वपचैः स्पृष्टे निशि स्नानं विधीयते ।
न वसेत्तत्र रात्रौ तु सद्यः स्नानेन शुध्यति ।' —यम० ६४
'चाण्डालेन तु संस्पृष्टे स्नानमेव विधीयते'
—अत्रिः । ७३

'यस्तुच्छायां श्वपाकस्य ब्राह्मणस्त्वधिगच्छति ।
स च स्नानं प्रकुर्व्वीत घृतं प्राश्य विशुद्धयति ।'
—अत्रिः ।

श्वपाकश्चाण्डालः, तथा चामरः—'निषादश्वपचावन्तेवासिचाण्डाल-पुक्कसाः' शूद्रवर्गे २० श्लो० । केवलं स्पर्शेनैव न पापसङ्क्रमणम् ; प्रत्युता-ऽऽलापादिभिरपि शास्त्रेषु परकीयपापसङ्क्रमणं मतम् । तथा च देवलः—

'आलाप-स्पर्शनिःश्वासात् सहयानासनाशनात् ।
याजनाऽध्यापनाद् यौनात् पापं सङ्क्रमते नृणाम्' ।(१)

वैखानसधर्म्मप्रश्ने चाण्डालानां कर्म्मादिवर्णनमित्थमुपलभ्यते—"चण्डालः सीसकालायसाभरणो वर्ध्री वद्धकण्ठः कक्षे झल्लरीयुक्तो यतस्ततश्चरन्, सर्व्वधर्म्मबहिष्कृतः, पूर्व्वाह्णे ग्रामादौ वीथ्यामन्यत्राऽपि मलान्यपकृष्य बहिरपोहयति, स्वजातीयैर्निवसेत् । मध्याह्नात् परं ग्रामे न विशत्ययम्" । ( ३।१४।७-६ ) ।

औशनसस्मृतौ तत्कर्म्मादिविषये इत्थमभिहितम्—

"वर्ध्रीं कण्ठे समाबध्य मल्लरीं कक्षतोऽपि वा ।
मलापकर्षणं ग्रामे पूर्वाह्णे परिशुद्धिकम् । ६ ।
न पराह्णे प्रविष्टोऽपि, बहिर्ग्रामाच्च नैर्ऋते ।
पिण्डीभूता भवन्त्यत्र नो चेद्वध्या विशेषतः । १० ।"

इति मलापकर्षणादिकर्म्मकीर्त्तनाद् 'भङ्गी' पदव्यपदेश्या एव चाण्डाला इति स्फुटञ्जातम् । न च चाण्डालो मलापकर्षणादिकं कर्म्माचरन् कथम्परलोक उन्नतिं प्राप्स्यतीति वाच्यम्—

'स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्म्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥

(१) न केवलमस्पृश्यता धर्म्मशास्त्रेष्वेव, प्रत्युत आयुर्व्वेदशास्त्रेऽथ च विज्ञानशास्त्रेऽप्यस्पृश्यता समादृतैव । अत एव स्त्रीणां पतिव्यतिरिक्तपुरुषस्पर्शनिषेधोऽप्युपपद्यते एव ।

यतः प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततम्।
(१)स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥
सहजं कर्म कौन्तेय ! सदोषमपि न त्यजेत्।
सर्व्वारम्भा हि दोषेण धूमेनाऽग्निरिवावृताः ॥ ४८ ॥'

गीता० अ० १८

"आत्मीये संस्थितो धर्म्मे शूद्रोऽपि स्वर्गमश्नुते।
परधर्म्मो भवेत्त्याज्यः सुरूपपरदारवत्॥"

—अत्रिः

'यो लोभादधमो जात्या जीवेदुत्कृष्टकर्म्मभिः।
तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत्॥"

—मनुः १६।६६

इति शास्त्रसिद्धान्तात् तस्य स्वकर्माचरणमेव सद्गतिजनकमिति प्रमाणितमेव। मनुस्मृतौ चाण्डालादीनां निवासविषये इत्थङ्कीर्तितम्—

'चाण्डालश्वपचानान्तु बहिर्ग्रामात् प्रतिश्रयः।
(२)अपपात्राश्च कर्त्तव्या धनमेषां श्वगर्द्दभम्॥ ५१ ॥
(३)नतैः समयमन्विच्छेत् पुरुषो धर्म्ममाचरन्।
व्यवहारो मिथस्तेषां विवाहस्सदृशैः सह ॥ ५३ ॥
अन्नमेषां पराधीनं(४)देयं स्याद् भिन्नभाजने।
रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ॥ ५४ ॥
दिवा चरेयुः कार्य्यार्थं चिन्हिता राजशासनैः ॥ ५५ ॥

दशमेऽध्याये।

एषां बहिराश्रयोल्लेखादिकं तेषामस्पृश्यतामेवोपोद्वलयति। भगवद्गीताऽपि—'येऽपि स्युः पापयोनयः। स्त्रियो वैश्या(५)स्तथा शूद्राः' ६।३२ इति पद्यांशेन शूद्राणां पापयोनित्वमाचष्टे, चाण्डालाश्च तदन्तर्गता एव। एतस्यैव शेषांशो—'मां हि पार्थ ! व्यपाश्रित्य × × × × तेऽपि यान्ति परां गतिम्'

(१) स्वकर्म्मणा—स्वकर्म्माचरणेनेत्यर्थः। तमभ्यर्च्य—इत्यनेन स्वकर्म्माचरणं परमात्मनोऽर्च्चनमिति विज्ञुनितम्।

(२) अपपात्राः—पात्ररहिताः, तैर्भुक्तं पात्रं संस्कृत्याऽपि न व्यवहर्त्तव्यमित्यर्थः।

(३) 'न तैः समय—' इदं पद्यं सुधारकैरवश्यमवधेयम्।

(४) पराधीनम्—अन्नमेषां परायत्तं कार्य्यम्, साक्षादेभ्यो न देयम् इत्यर्थः।

(५) वैश्याः—वेश्यापुत्रा इत्यर्थः।

६।३२ इति तु 'स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' ( १८।४६ गी० ) इत्यस्याऽनुवादभूतः ।

(१) एषां स्त्रीभिर्यौनसम्बन्धे प्रायश्चित्तमपि कीर्त्तितम्—

'गुरुतल्पव्रतं कुर्य्याद् रेतः सिक्त्वा स्वयोनिषु ।
सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च ॥'

—मनुः ११।१७०

'चाण्डालाऽन्त्यस्त्रियो भुक्त्वा गत्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति ॥'

—मनुः११।१७५

अत्र यमोऽप्याचष्टे—

'रेतः सिक्त्वा कुमारीषु चाण्डालीष्वन्त्यजासु च ।
सपिण्डाऽपत्यदारेषु प्राणत्यागो विधीयते ॥'

श्रीयास्कोऽपि निरुक्ते ३।८।१ 'चत्वारो वर्णा निषादः पञ्चम' इत्यौपमन्यवमतम् 'अप्रतिषिद्धमनुमतम्' इति न्यायेन मन्वानो निषादजातेरस्तित्वं स्वीचकार, निषादशब्दञ्च 'निषण्णमस्मिन् पापकम्' इति नैरुक्तनाम्ना निरुवाच च। यजुर्वेदेऽपि—'ऋक्षीकाभ्यो नैषादम्' १० ८ इति निषादजातिसङ्केतो 'वायवे चाण्डालम्' ३०.२१ इति चाण्डाल जातिसङ्केतश्च विद्यते ।

न केवलमेषां स्पर्शादिरेव प्रत्युत शास्त्र एषां कूपादिजलमपि न्यषेधि, तथा च—

'अन्त्यजैः स्वकृते तीर्थे तडागेषु नदीषु च ।
शुद्ध्येद्धि पञ्चगव्येन पीत्वा तोयमकामतः'

—संवर्त्त० १८९

'चाण्डालखातवापीषु पीत्वा सलिलमग्रजः ।
अज्ञानादेकनक्तेन त्वहोरात्रेण शुद्ध्यति ॥ २४ ॥
चाण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् ।
गोमूत्रयावकाहारस्त्रिरात्राच्छुद्धिमाप्नुयात् ॥ २५ ॥

—पराशरः, अ० ६

(१) एषां स्त्रीभिः—स्त्रीभिस्सहेत्यर्थः । 'वृद्धो यूना' इत्यादिनिर्देशाद् विनाऽपि सहयोगं तृतीया ।

अन्यच्चाऽपि—

'चाण्डालघटसंस्थन्तु यत्तोयं पिबति द्विजः
तत्क्षणात् क्षिपते यस्तु प्राजापत्यं समाचरेत्॥ २६॥
यदि न क्षिपते तोयं शरीरे यस्य जीर्य्यति।
प्राजापत्यं न दातव्यं कृच्छ्रं सान्तपनञ्चरेत्॥ २७॥
भाण्डस्थमन्त्यजानान्तु जलं दधिपयः पिबेत्।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः॥ २८।
ब्रह्मकूर्चोपवासेन द्विजातीनान्तु निष्कृतिः
शूद्रस्य चोपवासेन तथा दानेन शक्तितः॥ ३०॥

—पराशर अ० ६

अत्र अन्त्य जजलपाने शूद्रस्य अर्थात् सच्छूद्रस्याऽपि प्रायश्चित्तम्प्रकीर्त्तितम्। अधुना तेषामन्नग्रहणे शास्त्रमत श्रूयताम्—

'अन्त्यानामपि सिद्धान्नं भक्षयित्वा द्विजातयः।
चान्द्रं कृच्छ्रं तदर्द्धन्तु ब्रह्मक्षत्रविशां विदुः"

—अङ्गिराः।

'सर्व्वान्त्यजानां गमने भोजने संप्रवेशने
पराकेण विशुद्धिः स्याद्भगवानत्रिरब्रवीत्।

अत्रि० १७०।

'चाण्डालान्नं यदा भुङ्क्ते चातुर्व्वर्ण्यस्य निष्कृतिः।
चान्द्रायणं चरेद् विप्रः क्षत्रः सान्तपनञ्चरेत्।
षड्रात्रमाचरेद्वैश्यः पञ्चगव्यं तथैव च
त्रिरात्रमाचरेच्छूद्रो दानं दत्त्वा विशुद्ध्यति।
संस्पृष्टं यस्तु पक्वान्नमन्त्यजैर्वाऽप्युदक्यया।
अज्ञानाद् ब्राह्मणोऽश्नीयात् प्राजापत्याद्धर्माचरेत्।

—अत्रिः

अत एव वाल्मीकिरामायणे निषादराज 'गुह' प्रदत्तवस्तुषु मर्य्यादापुरुषोत्तमो भगवान् राम आचचक्षे—

"यत्त्विदं भवता किञ्चित् प्रीत्या समुपकल्पितम्।
सर्व्वं तदनुजानामि, नहि वर्त्ते प्रतिग्रहे"

—अयोध्याकाण्ड० ५०।४३

'ततश्चीरोत्तरासङ्गः सन्ध्यामन्वस्यपश्चिमाम्।
जलमेवाददे भोज्यं लक्ष्मणेनाहृतं स्वयम्।',
अयो० ५०।४८।

इति निषादराजवस्तूनि अप्रतिगृह्य लक्ष्मणाहृतं जलमेव पपौ श्रीरामचन्द्रः। अत एव भरतम्प्रति आचचक्षे गुहः—

'अन्नमुच्चावचं भक्ष्याः फलानि विविधानि च
रामायाऽभ्यवहारार्थं बहुशाऽपहृतं मया। १५
तत्सर्व्वं प्रत्यनुज्ञासीद्रामः सत्यपराक्रमः
नहि तत्प्रत्यगृह्णात् स क्षत्रधर्म्ममनुस्मरन्। १६।
लक्ष्मणेन यदानीतं पीतं वारि महात्मना
औपवास्यं तदाकार्षीद्राघवः सह सीतया। १८।
अयो० ८७ सर्गः।

अथ च शबर्य्या अपि वन्यफलान्येव स स्वीचकार, न खलु सिद्धान्नम्। अत एव शबर्य्याचष्ट—

'मया तु सञ्चितं वन्यं विविधं पुरुषर्षभ!
तवार्थे पुरुषव्याघ्र! पम्पायास्तीरसम्भवम्।
अरण्य० ७४।१७

अथ च शबरीति तु नामविशेषो वर्त्तते, नतु जातिनिर्देशः अत एव तत्रैव लिखितम्—'तामुवाच ततो रामः श्रमणीं धर्म्मसंस्थिताम्'। अरण्य ७४।७ 'श्रमणीम्' इत्यनेन च तस्याश्शबरजातित्वं न सिद्ध्यति। अस्तु।

अधुना तेषां(१)मन्दिरप्रवेशविषये प्रकाश्यते—

"तथान्यैर्मागधाद्यैश्च प्रतिलोमैश्च गर्हितैः
प्रथमादि प्रविष्टश्चेद्‌ धामावरणभूतलम्।
धामस्पर्शे तथाऽन्यस्य बलिपीठादिकस्य च
स्पर्शं कृत्वा यथापूर्व्वं शान्तिहोमं समाचरेत्।
सहस्रकलशैर्देवं स्नापयेत्तस्य शान्तये।"
—पाञ्चरात्रे पाद्मतन्त्रे चर्य्यापादे १८ अध्याये

(क्रमशः)

---

(१) सिद्धान्तचन्द्रशेखरे यथा—"चौरचाण्डालपतितश्वोदक्यास्पर्शने सति। शवाद्यपहृते चैव प्रतिष्ठां पुनराचरेत्" इति पुनः प्रतिष्ठाविधायकशास्त्रम्।

# शोचनीया शरणिः ।

विहारोत्कलसंस्कृतसमितौ कन्वोकेशनाभिधाना पण्डितसभा विद्यते । तत्र प्रवेशस्तु पूर्वं प्रधानाधिकारिणामनुमत्याऽऽसीत्तदानीं योग्यतमानां पण्डितानां समवायेन समन्ताद्विभूषितैव सा । साम्प्रतन्तूपाधिपरीक्षोत्तीर्णानां अदत्तोपाधिपरीक्षाणामपि पञ्चवर्षाणि यत्र कुत्राऽपि समाध्यापयतां सम्मत्या प्रवेशोऽवधारितः । एवंविधप्रवेशस्य द्वितीयोऽवसरोऽवसन्नः । तत्र प्रवेशाय एक एव सम्मतिप्रद एकैकशस्त्रयाणां तस्याः सभ्यत्वपदमभिलषतां विदुषां कृते सम्मतिं प्रदातुं प्रभवति । तत्र स्वस्मै सम्मतिवितरणाय सम्मतिप्रदं महता कपटप्रपञ्चेन मिथ्यावाग्जालञ्च वितत्य प्रतारयितुं चिरात्सञ्चितामपि शास्त्राध्ययनसम्पन्नां शक्तिं क्षणात्क्षपयन्ति, महान्तो विद्वांसो महामहोपाध्याया वा किन्न भवेयुः । अहो महापण्डितेष्वपि काचमूल्येन चिन्तामणिविक्रय इव व्यवहारः सर्वेषां तत्त्वविदामात्मानमखेदयत् । न केवलेन पण्डितमानितां प्रकटयता मया स्वविचारत एवैवं व्यवस्था पण्डितानां पुरः समुपस्थापिता, किन्तु परमविवेकसम्पन्नानामादेशमनुसृत्यैव पाठकानां सर्वेषां पण्डितानाञ्च पुरस्तादेवमभिधातुं सर्वतोभावेन सयत्नः न च तादृशः समितिव्यवहारः पण्डितानां श्रेयस्करः, न च तेषां गौरवप्रदो न च भविष्णूनामप्यन्तेवसतामन्तरात्मनि सद्भावं समुद्भावयति, नाऽपि प्रस्तुतानां सम्भावितानामपि सम्भावनां त्रायते । अपि तु महद्भ्योऽपि पण्डितेभ्यो दौर्जन्यमुपादिशदुपदेक्ष्यत्युपदिशति च । पण्डितसमवाये पारस्परिकमालिन्यं लोकोत्तरं जनयति, मिथ्याभाषणाभ्यासपाटवं समभ्यासयति, अकारणमपि वैरभावमुद्भावयति, केवलं साधुजनगर्हितं स्वार्थान्धमार्गं प्रदर्शयति । अहो एवंविधसमितेः सञ्चालकमहोदयानां कृत्यं । यत्ते ऋषिभिः प्रणीतानां शुद्धसंस्कृतग्रन्थानां यावज्जीवनमध्ययनाध्यापनाभ्यां संस्कृतात्मनां शान्तमयं धर्ममयञ्च जीवनं यापयतां स्वपूर्वजानां गौरवं रक्षयतां वृद्धतमानां पण्डितानामपि सज्यधन्वामृगयुः गीतविमुग्धान्मृगानिव तेषां बुद्धिमृगीर्विहन्तुं लोभमयीं गीतिं श्रावयित्वा नितरां संयतन्ते । मयूरनिध्वानेन कामिन इव, कोकिलकीरालीनां काकलीकलकलैः विरहिण इव, सर्वथा लोभमयालापैः विकलयन्ति च पण्डितान् । न केवलं तेषां वैकल्यसम्पादनमेव प्रधानं कर्म अपि तु यत्नात्सञ्चितां वराटिकामपि तेषां हर्तुं प्रधानोद्योगोऽपि । यतः कथं कथमपि जीवनयात्रां यापयद्भ्योऽपि सम्मति-

प्रदेभ्यः शुल्कं गृह्णन्त्येव । भो भोः !! विहारोत्कलप्रदेशस्थाः ! पण्डिताः ! धूम्रयानस्य द्वितीयश्रेण्या भाटकोपलब्ध्या प्रभूतधनप्राप्तिर्भविष्यतीति लोभान्धितधिया महता श्रमेण तत्सदस्यतायै सम्पादिते प्रयासे वैफल्योपलब्धौ यत्नात् सञ्चिताः स्वहस्तस्थिता अपि वो वराटिका नष्टा भवन्ति । अत्र महाकवेरुपदेश एव स्मर्य्यते । तथा हि—

अहो रत्नाकरोऽम्भोधिरित्यसेवि धनाशया ।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः ॥

नात्र केवलं पण्डितानां लाघवं समितेरपि परिहासः । नह्येवं व्यवस्था संस्कृतसमितेः वाराणस्यां कलिकतायां वा श्रूयते दृश्यते वा । ये च शान्तिप्रियास्तत्सदस्यास्ते समितिमेव युद्धक्षेत्रमामनन्ति । यतोहि यस्मिन्कस्मिंश्चिदपि विषये प्रस्तुते विचारे जातिगतो व्यक्तिगतश्च विरोधानलो दीप्त एव भवति । सर्वे च तदधिकृतो निजां कुलक्रमागतां सम्पदमेव तामवगच्छन्ति, यतस्तथाभूतां सम्पदमिव समितिप्रवेशस्य कृते सर्वथा मिथ्याप्रपञ्चं कुर्वन्ति शान्तान् वञ्चयन्ति उद्धतेन युद्धमाचरन्ति स्वगौरवमपि क्षणादुत्क्षिपन्ति ।

एवमनर्थमयीं व्यवस्थां समवेदयोक्तसमितेः सञ्चालकमहोदयान्भृशं सम्प्रार्थये यत् जनसम्मत्या कन्वोकेशनसदःप्रवेशप्रथां स्थगयन्तु । पूर्वंयथायोग्यान्कार्यदक्षाननुभवशीलान् पण्डितान्स्वसम्मत्या प्रवेशयन्तु । एतेनोक्ता समितिः विद्याविलासस्थानं न समराङ्गणम्, विचारविभवसम्पन्ना न जातिव्यक्तिगतपक्षपातसम्भृता योग्यानामभिनिवेशयोग्या न परवञ्चकानां धूर्ततमानाम् । किञ्च तत्र गुणवतां सम्भावनं खलानां निरसनञ्च भविष्यतीति न्याय्यः पन्थाः ।

—विहारप्रान्तस्थः कश्चिदनुभवी ।

---

## ❀सभापतेरभिनन्दनम् ।

—:०❀०:—

( ले०—राजेश्वरप्रसादत्रिपाठी । )

अयि सभाधिप ! धर्म्मदयाकर ! निखिलशास्त्रविचारणतत्पर !
भवत आगमनेन शुभेन मे हृदयमेति परां सुखसन्ततिम् ॥ १ ॥
अयि भवादृशसाधुवरैरियं बुधसमा ह्यधिकाशि विराजते ।
सकलदुःखचयोऽपि सतां नृणां तव प्रभाववशेन विलीयते ॥ २ ॥
अहह भाग्यमिहत्य गुणैषिणां यदयमद्य गृहं समुपागमत् ।
पठनपाठन-शीलनधर्म्मिणां भवभयार्तिहरो वरदो भवान् ॥ ३ ॥

विद्यालताया विटपी विशालः
सौजन्यवृक्षस्य महालवालः।
विज्ञानभानोरुदयाचलोऽयं
श्रीमान् यतीन्द्रोऽच्युत एष भाति ॥ ४ ॥

एतद् गुणानां गणनाविधानम्
धियाल्पया वाञ्छति यः कवीन्द्रः।
हस्तप्लवेनैव परं महाब्धेः
पारं स यातुं व्यवसायमेति ॥ ५ ॥

---

## ❀अच्युताभिनन्दनम्।

—:०❀०:—

( ले०—पं० इन्द्रप्रसादनाथत्रिपाठी ( नव्यन्यायशास्त्री )

यस्य प्रसादेन गुरोः स्वकीयं,
गाढं तमश्छेत्तुमहं क्षमेय।
तस्मै नमो मे गुरुभिः सहायै—
र्देवैः सहास्मै मिथिलोद्भवाय ॥ १ ॥

व्यासोऽथवा वियदुपेत शरच्छशाङ्कः ?,
किम्बा दशावतरणेऽन्यतमो महर्षिः ?।
आहो सभापतिपदं दधदेष काश्यां,
श्रीस्वाम्ययं विजयतेऽच्युतपादपद्मः ? ॥ २ ॥

न्यूनत्वमत्र निजधाम विदन् प्रयातः,
षड्वार्षिकोत्सवकृतौ न कृतावमर्षः।
अस्मिन्नदोष अधिवेश इवावतीर्णः,
तत्त्वक्षमेनमभिनन्द्य वयं नमामः ॥ ३ ॥

स्वर्षाङ् नैव कलौ कलेवरवती तिष्ठेन्नृशंसे नृपे,
धर्मो वा न सनातनोऽपि मनुजैः सम्मंस्यते खल्विति।
संशय्येश्वर एव सर्वविदयं प्रत्यक्षमागत्य नः,
गौरीशङ्करदीक्षया प्रतिफलद् विद्यालयं प्रास्रवत् ॥ ४ ॥

---

❀ मार्गकृष्णतृतीयायां काशीस्थ जो० म० गोयनका संस्कृतमहाविद्यालयीय-ससमाब्दि-काधिवेशने सभापति पदभाग्भ्योऽच्युतस्वामिभ्योऽर्पितेषु अभिनन्दनद्वयमिदम्।

सोऽयं कल्पतरुस्तरुः सुमनसां दीदयेण संसेव्यते,
आचार्याञ्जनयन्नयन् विनयतो धर्माध्वराराधनाम् ।
येनाऽऽशास्ति समस्तभारतभुवं धर्म्यां धियं वैदिकीं,
जीव्याच्छ्रेष्ठि महोदयः स शरदां नूनं शतँय्युञ्ज्महे ॥ ५ ॥
काशी-गोयनका स्वसंस्कृतमहाविद्यालये तेन च,
चण्डीशक्तिमुपास्य योऽत्र सुधियामग्रेसरः सत्कृतः ।
छात्राणां त्रिशतीं विधाय विदुषीं चण्डीप्रसादो वरः,
सोऽयञ्चेदभिनन्द्यतामिह मया शेषावशेषो भवेत् ॥ ६ ॥
अधिसभं वयमद्य सभासदां,
सुखदसूक्तिपरिग्रहकाङ्क्षया ।
त्वदुपदेश-विशेषनिशामका
अवहिता अयमञ्जलिरिष्यताम् ॥ ७ ॥
इन्द्र प्रसादनाथोऽयमुपकण्ठमुपागमत् ।
अच्युतेनानुकम्प्येताऽभ्युदीयात्तत्सरस्वती ॥ ८ ॥

---

## शोकतरङ्गः ।

—०:✿:०—

( ले०— श्रीहरिकान्तमिश्रः, वाराही सं० विद्यालयस्थः )

शास्त्रे पण्डितमण्डलीः परिजयन् कर्णं जयन् दानतः
धर्मे धर्मसुतं जयन् परिजयँश्चन्द्रं यशोभिः शुभैः ।
यातो माधवधामधामनिकरं हित्वा स्वकीयं वपुः
"देवीकान्त" महोदयो गतदयो नेतुं गुरोरासनम् ॥ १ ॥
हा हा हन्त ! नितान्ततापतमसा व्याप्तीकृताः पण्डिताः
सर्वे लोका विरहाग्निदुःखदलिताः क्रन्दन्ति शोकाकुलाः ।
पृथ्वी रोदिति पुत्र ! कुत्र गतवानित्यातुरं निर्भरम्
संसारात्त्वयि निर्गते कविवरे शून्या दिशा भासते ॥ २ ॥
छात्रा यस्य रुदन्त्यनन्यशरणा वाचोऽपि यामो वयम्
क्वेति प्रौढजनं नवाप्य† सहसा चीत्कारमाकुर्वते ।
नूनं दैव ! त्वमेव दुष्टहृदयेनादर्शिता क्रूरता
"देवीकान्त" बुधं त्वया जितबुधं नीत्वा मणिं विष्टपात् ॥३॥

---

† आप्येति आङ्पूर्वकाप्नोतेः स्विरूपम् ।

# शोकोच्छ्वासः ।

—:०*०:—

( ले०—श्रीहरिनारायणमिश्रः सं० वि० वराही )

"देवीकान्ते" प्रयातेऽमरवरसदनं पूरिता दिक् समस्ता ।
हा हाकारैरत्यजस्रं प्रतिरवनिचयैर्देहिनां हन्त ! तारैः ॥
विद्यन्ते केऽधुनेलावलय इह जनाश्चेतनाहीनदीनाः ।
पारावारं शुचां ये विरहकलुषिता नाश्रिताः साश्रुनेत्राः ॥ १ ॥

वेदा हा ! विलपन्त्यहो ! त्वयि गते कानाश्रयामोऽधुना ।
वेदाङ्गान्यपि खेदतो मुहुरहो ! संप्राप्नुवन्मूकताम् ॥
अन्ये चापि पुराणशास्त्रनिवहाः स्मृत्यादय श्चाऽनिशं ।
दुःख्यन्तः प्रवदन्ति कं च शरणं यामो वयं हा ! विधे ! ॥ २ ॥

अहो ! "देवीकान्ते" मतिमति नितान्ते बुधवरे ।
दिवं याते शान्ते सकलजनप्रान्तेषु रुदती ॥
लसद्विद्युत्कान्तापि च मलिनकान्ता विधुरिता
गिरा शोकाऽऽक्रान्ता विलपतितरांताररवतः ॥ ३ ॥

निराधाराधारा प्रचुरतरभारा हतरमा ।
दराऽऽकारासारा विगतविधुतारासितनिशा ॥
इयारं विद्वन् ! त्वद्भरविधुरतोन्तस्त्वयि गते ।
प्रदृष्टा ही ! लोकै रतिजनितशोकैरविरतम् ॥ ४ ॥

पुरा जातेयं यातिशयितशुभं या प्रमुदिता ।
समुद्दीव्यद्विद्या परमनिरवद्याद्य मिथिला ॥
शुचा सैवा* एषा लिखति भुवि लेखा वत ! नखै-
रिते "देवीकान्ते" कृतसमकृ† तान्तेऽतिशिथिला ॥ ५ ॥

मिथिलासुमणिः क नु ! हन्त ! गतो भववारिधितुङ्गतरङ्गमितम् ॥
सुजनं स्वजनं विजहन्निटिलं विधुनानमतीव रुदन्तमितः ॥ ६ ॥
सुरनायकमन्दिरमन्त्रिपदं रहितं सचिवेन विलोक्य चिरम् ॥
अमरोऽपहरन्नु ! गतः किमु हा ! द्रुतमेव तमेव सुदक्षतरम् ॥ ७ ॥

———

* अत्र ( आः ) इत्यनेन सह दीर्घः । † सिद्धान्ता वाचकः कृतान्तशब्दः ।

# समालोचना ।

—०*०—

**सिद्धान्त-लक्षणम्**—ग्रन्थोऽयं न्याय-शास्त्रस्य सिद्धान्तव्याप्तिलक्षणक इति विदन्त्येव तत्त्ववेदिनः । रघुनाथशिरोमणि-जगदीशभट्टाचार्य्यादिभिः परिष्कृतः परिवर्द्धित आसीदेव । इदानीं च न्यायाचार्य्य-तर्कतीर्थ-पण्डित-वामाचरणभट्टाचार्य्यमहोदयेन, व्याकरणाचार्य्य-पण्डित गुरुप्रसादशास्त्रिणा च जागदीश्या उपरि विवृत्ति-दीपिकाभ्यां परिष्कृत्य सम्पादितः सम्यक् महिमानं बिभर्ति । तदुपरि च कालीशङ्कर्य्या क्रोडपत्रिकया समुद्भासित इति सुवर्णे सुगन्ध-समवायः सञ्जातः । प्रकाशकेनापि कर्गजमुद्रणादौ साधु औदार्य्यं प्रकटित-मिति अतिमनोहरतासादयति । इत्येवं सर्वथा प्रशंसनीयस्य दीधिति-जागदीशी-विवृत्तिदीपिका-कालीशंकरी सहितस्यास्य ग्रन्थस्य मूल्यं १।॥) पादोनरूप्यकद्वयम् ।

प्राप्तिस्थानम् ।

**मास्टर खेलाड़ीलाल, कचौड़ीगली, बनारस ।**

**हर्षचरितम्**—महाकवि श्रीबाणभट्ट-विरचितम् । प्रथमोच्छ्वासमात्रम् । राजलक्ष्मी टीकोपेतम् मू० १) प्राप्तिस्थानम मास्टर खेलाड़ीलाल कचौड़ीगली बनारस इति । पुस्तकमिदम् प्राचीनं गद्यमयकाव्यात्मकमिति जानन्त्येव संस्कृता-ध्यायिनो विद्यार्थिनो विद्वांसश्च । एतस्य रचना काठिन्येनापि सन्त्येव सर्वे परि-चिताः । परन्तु सम्प्रति तत्र श्रीगुरुप्रसादशास्त्रिणा व्याकरणाचार्य्येण 'राजलक्ष्मी' टीकां विधायातिसारल्यं सम्पादितम् । येन छात्राणामनायासगम्यं तज्जातमिति तदवलोकनत एव भविष्यति ज्ञानम् । कर्गजमुद्रणादि सौष्ठवं तु द्रष्टुर्नेत्रे आव-र्जयत्येवेति तदपेक्षया नास्ति मूल्याधिक्यं, तथापि संस्कृतच्छात्राणामकि-ञ्चनानां प्रथमोच्छ्वासमात्रस्यैकरूप्यकम् मूल्यं अधिकं प्रतिभाति ।

समालोचकः—दर्शनकेशरी श्रीगोपालशास्त्री ।

**नीतिमञ्जरी**—श्रीद्याद्विवेद-विरचिता, श्रीसीतारामजयरामजोशिना सम्पादिता मूल्यम् ४॥) रूप्यकम् ।

प्राप्तिस्थानम्—घाणेकर प्रेस नं० १६, हाथीगली, बनारस सिटी ।

पुस्तकमिदं चतुःशत-पृष्ठात्मकं मसृणदृढकर्गजमुद्रितं लोकोपयोगिनीति-पद्यानां संग्रहात्मकं विद्यते । वैशिष्ट्यमस्य ग्रन्थस्य सर्वेभ्योऽपि नीतिग्रन्थेभ्य इदं विद्यते यदस्य प्रणेता महापण्डितः श्रीद्याद्विवेदमहोदयः सर्वत्रैव प्रतिनीति-पद्यं तदर्थसमर्थनरूपेण ऋग्वेदीयमन्त्रान्सव्याख्यानान् उपन्यस्य तदीयर्षिदैव-तच्छन्दांस्यपि दत्तानि । येन स्वर्णे सुगन्धसमवायः संजातः । एवमीदृग्वैदिक-

साहित्यमयो ग्रन्थो भारतीय संस्कृतिपरिचयपर्य्युत्सुकानां कृते महानुपकारी। नीतिज्ञानेन सहैव वेदार्थज्ञानमपि सम्पादयतीति संस्कृताऽध्यायिनोऽनुरुन्धेऽनुशीलयितुमिदं पाण्डित्यपूर्णं ग्रन्थरत्नम्। अत्र नीतिपद्यानां सन्निवेशप्रकारोऽपि साधु विद्यते। किम्बहुना बहुशोऽन्विष्यापि न कोऽपि दोषः समुपलभ्यते। इति ग्रन्थकृत्सम्पादक प्रकाशकेभ्यः साधुवादान् वितरन् विरमति—

समालोचकः—श्रीगोपालशास्त्री, ( दर्शनकेशरी )

**संस्कृतकविचर्चा**—लेखकः पण्डितश्रीबलदेवोपाध्यायः एम० ए० साहित्याचार्यः प्रोफेसर हिन्दूविश्वविद्यालय काशी। प्रकाशको—

**मास्टर खेलाड़ीलाल एण्डसन्स, संस्कृत बुकडिपो, कचौड़ीगली, काशी।**

पुस्तकमिदं हिन्दीभाषायां लिखितं विद्यते। अत्र कविकुलमुकुटमणीनां कालिदास—भारविभवभूति—भासाश्वघोष-श्रीहर्ष—माघदण्डि—शूद्रकबाणभट्ट प्रभृतीनां सुप्रसिद्धानां महाकवीनां जीवनचरितं, तेषां समयनिरूपणं विरचितग्रन्थानाम् उदाहरणानि च बहुविधानि संगृह्य लेखकेन महानुपकारो विहितः सुरसरस्वती सेवकानां छात्राणाम्। राष्ट्रभाषायां लिखितस्य पुस्तकस्यास्य लेखनशैली, अनुप्रासप्रयोगः, ऐतिहासिकानुसन्धानपरम्परा प्रमाणिकता च लेखकस्य प्रौढ़-पाण्डित्यं पुस्तकस्योपयोगित्वं महत्त्वं च प्रकटयन्ति। प्रायशः संस्कृतपरीक्षार्थिन एतादृतस्य पुस्तकस्याभावात् परीक्षायां काठिन्यमनुभवन्तिस्म। साम्प्रतं संस्कृतज्ञैः छात्रैर्नूनं पठनीयमेतत्। मुद्रणादिकं सर्वं मनोहरमस्ति। मूल्यं २) रूप्यकद्वयम्। प्रकाशादुपलभ्यते।—

अवधेशप्रसादशर्मा ( काव्यतीर्थः )

## प्राप्तपत्र-प्रतिध्वनिः।

मार्गशीर्षशुक्लप्रतिपदि तिथौ शनिवासरे "विद्याधर्मवर्द्धिनी सरयूपारीणसंस्कृतपाठशालायाः" विशेषाधिवेशनं (ता० १८।११।३३) चतुर्थदिनावसरे सायंकाले ज्ञानवाप्यां श्रीमतां "विरलासंस्कृतपाठशालायाः प्रधानाध्यापकानां पण्डित श्रीसभापति उपाध्यायमहोदयानां सभापतित्वेऽभवत। तत्र च काशीस्थाः सरयूपारीणो विद्वांसश्छात्रा स्तथा चैवमन्ये सज्जनाः श्री पण्डित अनन्तरामशास्त्री रणवीरपाठशालाध्यक्षः तथा च श्रीपण्डिततारादत्तपन्त प्रभृतयो महानुभावा उपस्थिता आसन्। श्री पं० रामनारायणशास्त्रिकृतवैदिकमङ्गलाचरणानन्तरं श्रीपण्डिततारादत्तपन्त-श्रीपण्डितपूर्णचन्द्राचार्य्य

श्रीपण्डित गोपालशास्त्रि-"दर्शनकेसरि", श्रीपण्डित रामावधि, पं० विन्ध्येश्वरीप्रसादशास्त्रिणां, तथा श्रीस्वामिचन्द्रशेखरगिरिसन्न्यासिमहोदयानां संस्कृत विद्यायाः महत्त्वविषयमवलम्ब्य, तथा सरयूपारीणजातीयमहत्त्वविषयमवलम्ब्य छात्राणाञ्च तथाऽन्यसज्जनानां संघट्टनादिविषयमवलम्ब्य विनिश्चितार्थं भाषणमभूत्। तन्मध्ये श्रीपण्डितकाशीनाथपाण्डेयेन स्वरचितकवितापाठोऽपि कृतः। श्रीपण्डित रामदेवद्विवेदिभिः पदाधिकारिणां सूची श्राविता या सर्वैः स्वीकृतेति। अन्यनियमादीन् विधातुमेका समिति निश्चिताभवत्, तदन्ते श्रीमतां सभाध्यक्ष महोदयानां प्रभावशालिभाषणानन्तरं धन्यवादपुरस्सरं सभा विसर्जितेति।

विश्वनाथपाण्डेयः व्यवस्थापकः

---

स्वामी रामेश्वरानन्दयतिः सूचयति—परमकारुणिकस्य परमेश्वरस्य कृपयाऽद्यमार्गशीर्षकृष्णत्रयोदश्याम् (ता० १५-११-३३) उपदेशकमहाविद्यालस्योद्घाटनमहोत्सवः श्रीमतां परमहंसपरिव्राजकानां श्री १०८ स्वामीभगवतानन्दसंन्यासिमण्डलेश्वरमहोदयानां सभापतित्वे महता समारोहेण श्रीलक्ष्मीकुण्डस्थपरिव्राजकमहामण्डलीय-कार्य्यालयभवने सुसम्पन्नम्। यत्र सर्वप्रथमं श्री० पं० शिवकुमारशास्त्रिणां मङ्गलाचरणानन्तरं दर्शनकेशरि श्री० पं० गोपालशास्त्रिणां काश्यामुपदेशक-महाविद्यालयस्यावश्यकतायां तेजस्वि प्रभावशालि गम्भीरं व्याख्यानमभूत्। तदनन्तरञ्च श्रीमतां सनातनधर्मभूषणस्वामि जगदीश्वरानन्दभारती महोदयानां काशीस्थसंस्कृतविद्यार्थिमण्डले उपदेशकलाशिक्षणपद्धतिप्रचाराय साशीर्वादं होरां यावल्ललितं सारगर्भितं भाषणमभूत्। श्रीमतां रायसाहबस्वामिरामपुरीमहोदयानां महाभारतादिग्रन्थाध्ययनपूर्वकोपदेशकलायाः प्रचारणाय भाषणमभूत्। ततश्चोपदेशकमहाविद्यालयीय समिति संस्थापनविषयकः प्रस्तावो महोपदेशक पं० सुरेश्वरप्रसादमिश्र पं० श्रीरामदेवद्विवेदि-व्याकरणाचार्य्य श्री पं० रुद्रदेवशास्त्रिवेदाचार्य्याणाम् समर्थनाऽनुमोदनात्मकभाषणानन्तरं सर्वसम्मत्या स्वीकृतोऽभूत्। अवसाने पं० श्रीसरयूप्रसादपाण्डेय-'द्विजेन्द्र, महोदयानां, उपदेशक विद्यालयीयपाठ्यपद्धतौ हिन्दीभाषायाः प्रवेश आवश्यक इति संशोधनानन्तरं श्रीमतां सभापतिमहोदययानां संक्षिप्तं पाण्डित्यपरिपूर्णं सारगर्भितं व्याख्यानं काशीस्थविदुषां व्याख्यानपद्धत्या सनातनधर्ममर्यादासंरक्षणस्वगौरव-प्रख्यापन-संस्कृत-विद्याप्रचारादि—सौकर्य्यसम्पादनार्थमभूत्। अन्ते स्वामिचन्द्रशेखरगिरिमहोदयद्वारा धन्यवादप्रदानानन्तरं सानन्दं सोत्साहं सभाविसर्जनमभूदिति।

अन्यदप्याह—

विधिनिषेधागोचरत्वमनुभवे ॥ ३७ ॥

विधिश्च निषेधश्च तौ तथोक्तौ तयोरगोचरत्वम् अविषयत्वम् अनुभवे सतीति सूत्रार्थः ।

भक्तिभूमिमारुह्याग्रेसरन् भक्तोऽवसाने यदा परां भक्तिमधिगतो भवति तदा विधिनिषेधातीतो भूत्वा स्वतन्त्रः परिभ्रमति । उक्तञ्च केनापि भक्तेनैव—

"निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः" इति ।

किम्बहुना रागात्मिकाया भक्तेस्तीव्रदशायामेव विधिनिषेधयो र्विलयो भवितुमारभते । वैधावस्थायाञ्च भक्ते र्विधिनिषेधस्थितिरस्त्येव । यतो हि— विधिर्निषेधो वा कर्त्तव्यमकर्त्तव्यं वा त्रिगुणात्मिकायाः प्रकृतेः परिधिमध्यान्तर्गतो विषयः, यश्च तटस्थज्ञानदशायामेवापेक्ष्यते । यदा तु साधकः परां भक्तिमासाद्य निस्त्रैगुण्योदयमुपेत्य प्रकृतिसाम्राज्यमेवातिक्राम्यति तदा तस्य जीवन्मुक्तत्वात् तस्यामवस्थायां धर्माधर्मौ विधिनिषेधौ वा न स्वसत्तामावहतः। उक्तञ्चैवमेव स्मृतिषु—

त्यज धर्म्ममधर्म्मञ्च तथा सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ।
त्यज धर्म्ममसङ्कल्पादधर्म्मञ्चाप्यलिप्सया ।
उभे सत्यानृते बुद्ध्या बुद्धिं परमनिश्चयात् ॥
रजस्तमश्च सत्त्वेन सत्त्वञ्चानशनेन च ।
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥
सर्व्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ।

अन्यत्रापि स्मृतिशास्त्रे प्रतिपादितं यज्ज्ञानी जीवन्मुक्तो भक्तः स्वान्तःकरणे भेदभावनाविहीनोऽपि लोकशिक्षायै द्वैतभावानुरूपमेव यत्र तत्र व्यवहरति । यथा हि—

बाले बाला विदुषि विबुधा गायके गायकेशाः,
शूरे शूरा निगमविदि चाम्नायलीलागृहाणि ।
सिद्धे सिद्धा मुनिषु मुनयः सत्सु सन्तो महान्तः,
प्रौढे प्रौढाः किमिति वचसा तादृशा यादृशेषु ॥
मौने मौनी गुणिनि गुणवान् पण्डिते पण्डितोऽसौ,
दीने दीनः सुखिनि सुखवान् भोगिनि प्राप्तभोगः ।

मूर्खे मूर्खो युवतिषु युवा वाग्मिषु प्रौढवाग्मी
धन्यः कोऽपि त्रिभुवनजयी योऽवधूतेऽवधूतः ॥ ३७ ॥

अन्यदपि—

**क्रमानपेक्षा च ॥ ३८ ॥**

तत्र भक्तिप्राप्तौ क्रमस्य साधनानामिति शेषः, न अपेक्षा अनपेक्षा अनावश्यकत्वं चेति सूत्रार्थः ।

भक्तिलाभाय साधनानां कोऽपि क्रमोऽपि नास्ति नियतः। इदमपि भक्तेरेकं वैशिष्ट्यं यदन्यत्र सर्वत्रैव साधनमार्गे क्रमविधानं विद्यते, परन्तु भक्तिमार्गे तस्याप्युपेक्षैव भवतीत्यद्भुतं महत्त्वमस्याः सर्वविलक्षणम् ।

यद्यपि गौणी भक्तिस्तु क्रियासाध्यैवास्ति । उपासनाकाण्डस्य शरीरात्मकयोगेन च भक्तेः साहाय्यमातन्यत एव। एवञ्च कर्मकाण्डस्य क्रियया ज्ञानकाण्डस्य तत्त्वविचारेण च परम्परया भक्तिभावोद्रेको भवत्येव, तथापि कर्मकाण्डे, योगमार्गे, ज्ञानाध्वनि च यथा साधनानां विधानक्रमो विद्यते, न तथा भक्तिमार्गे, इति सर्ववादिसम्मतः पन्थाः। आनन्दकन्दस्य भगवतः कृपापात्रीभूतो भक्तोऽलौकिकभावाद् विधिनिषेधबन्धनमतिक्रम्यानन्दसागरे निमग्नो भवति ।

गौण्यां भक्तौ क्रमस्यास्ति कियत्यपेक्षा, यतो हि तस्यां गुरुदेवद्वारा परीक्षितस्याधिकारनिर्णयस्यापेक्षा भवति । परन्तु रागात्मिकायां पराभक्तौ वा नास्ति कियन्तोऽपि क्रमस्यावश्यकत्वमिति स्वतःसिद्धो विषयः ॥३८॥

भक्तेर्विविधं महत्त्वं प्रतिपाद्य तत्र वैफल्याभावप्रतिपादनाय चोपक्रमते—

**अविपक्वभावानामपि तत्सालोक्यम् ॥ ३९ ॥**

विशिष्टः पक्वो विपक्वो न विपक्वोऽविपक्वो भावो येषां तेषामपि तस्य स्वेष्टदेवस्य सालोक्यम् । समानो लोको येषां ते सलोकास्तेषां भावस्तत्त्वम्, स्वेष्टदेवसमानलोकाधिवास इति यावद्, भवतीति सूत्रार्थः ।

भक्तिमार्गे प्रविष्टः साधकः तद्दार्ढ्यमप्राप्तोऽपि सालोक्यमुक्तिमधिगच्छत्येव । तथा हि भगवद्भक्तिमधिगतोऽपि प्रारब्धवशाद्वा कारणान्तरतोऽपि वा यदि परां भक्तिं नासादयति चेत्तथापि सोऽपूर्णोऽपि पतितो भवितुन्नार्हति यतो हि भक्तिमार्गस्यैतादृश एव विशिष्टो महिमोपस्तूयते । स हि अपूर्णतां प्राप्तो भक्तः स्वेष्टदेवलोके गत्वाऽनन्दाप्लुतो भवतीत्यपि शब्दस्य स्वारस्यम् ।

शास्त्रेषु आध्यात्मिकोन्नतेः प्रधानतया द्वे गती विद्येते* । एका

* शरीरपातानन्तरं सर्ववादि-सम्मताश्चतस्रो गतयः शास्त्रेषूपदिष्टा दृश्यन्ते । नामतो

सहजा गति र्द्वितीया क्रमोर्ध्वगतिश्चेति। तत्र यो हि भगवति समर्पितचित्तः क्रमश उन्नतिमधिगच्छन्नवसाने परां भक्तिमुपेत्य ज्ञानलाभेन सहजां गतिमाश्रयति। फलतोऽत्रैव जगति तस्य जीवन्मुक्तिर्भवति, श्रुतावप्युदीरितोऽयमर्थः।

"न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते"।

एवमेवोक्तं स्मृतावपि—

त्वं प्रत्यगात्मनि तदा भगवत्यनन्त-
आनन्दमात्र उपपन्नसमस्तशक्तौ।
भक्तिं विधाय परमां शनकैरविद्या-
ग्रन्थिं विभेत्स्यसि ममाऽहमितिप्ररूढम्॥
इहैव यस्य ज्ञानं स्याद्धृद्गतप्रत्यगात्मनः।
मम संवित्परतनोस्तस्य प्राणा व्रजन्ति न॥
ब्रह्मैव संस्तदाप्नोति ब्रह्मैव ब्रह्म वेद यः।
कण्ठचामीकरसममज्ञानात्तु तिरोहितम्॥
ज्ञानादज्ञाननाशेन लब्धमेव हि लभ्यते।

घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम्।
सततं मन्थयितव्यं मनसा मन्थानभूतेन॥ इति।

किन्तु प्रारब्धवशाद्यस्य भाग्ये सहजगत्युपलब्धिर्न भवति। स हि स्वदेहावसानसमये निजभावदार्ढ्यानुरूपं श्रेष्ठं देवलोकमन्यलोकं वोपसर्पति एतामेव गतिं केचन सालोक्य-सामीप्य-सारूप्यादि-शब्दैर्मुक्तिभेद-पर्य्यायैर्बहुधा वदन्ति। समुदीरितं भगवता श्रीमद्भगवद्गीतायाम्—

---

यथा—कृष्णगतिः, शुक्लगतिः ऐशगतिः, सहजगतिश्चेति। तत्र गतागतचक्रमेव दृढी कुर्वतो जीवस्य प्रेत-नरक-देवासुरादिलोकतः मृत्युलोके पौनःपुन्येनागमनं कृष्णगतिरुच्यते। यथा चात्युत्कटपुण्यकर्माणस्तपस्विनः स्वोग्रपुण्यकर्मप्रभावतो गतागतचक्रं भित्वा सूर्य्यमण्डलं भिन्दन्तः सप्तमं लोकमुपेत्य मुक्ता भवन्ति, तामेव शुक्लगतिं ब्रुवन्ति। एवं तपःश्रद्धाजुषो जीवाः स्वविशिष्टसंस्कारवशाद् उन्नतं देवपदमधिकुर्वन्तोऽवसाने ब्रह्मादिमूर्तित्रयपदारूढाः यथा क्रमशो ब्रह्मलीना भवन्ति सैशगतिरुच्यते। ये च शरीरधारणवेलायामेव स्ववासनानाशेन मनोनाशं कुर्वन्तः स्वस्वरूपोपलब्धिं कृत्वा शरीरपातात्पूर्वमेव जीवन्मुक्ता भवन्ति तेषामेव गतिः सहजगतिरभिधीयते।

इह हि सहजगतिक्रमोर्ध्वगत्योरेवोल्लेखो विहितस्तत्रायमेव हेतुर्विद्यते यत् परस्या भक्तेरधिकारिजीवन्मुक्तगतिभिन्ना या हि गतयो विद्यन्ते ताः सर्वा अपि क्रमोर्ध्वगत्यामेवान्तर्भूता भवन्ति। यतो हि तासु सर्वास्वेव गतिषु मुक्तये देशकालव्यवधानमपेक्ष्यत इति।

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्
तं तमेवैति कौन्तेय सदा तद्भावभावितः ।

इमामेव गतिं शास्त्रेषूत्तरायणगत्यन्तर्गतामप्यभिदधति पण्डिताः । एतद्गत्यनुसारेण कोऽपि भक्तः शिवलोके कोऽपि ब्रह्मलोके एवमेवान्यलोकेष्वपि निवसन्ति । ब्रह्मलोकावाप्तौ श्रुत्याऽभिहितम्—

तपः श्रद्धे ये ह्युपवसन्त्यरण्ये
शान्ता विद्वांसो भैक्ष्यचर्यं चरन्तः ।
सूर्य्यद्वारेण ते विरजाः प्रयान्ति
यत्राऽमृतः स पुरुषो ह्यव्ययात्मा ॥
एह्येहीति तमाहुतयः सूर्य्यवर्च्चसः
सूर्य्यस्य रश्मिभिर्यजमानं वहन्ति ।
प्रियां वाचमभिवदन्त्योऽर्च्चयन्त्य
एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥
तस्य हैतस्य हृदयस्याग्रं
प्रद्योतते तेन प्रद्योतेनैष आत्मा
निष्क्रामति चक्षुषो वा
मूर्द्ध्नोवाऽन्येभ्यो वा शरीरदेशेभ्यः ।
अथ यत्रैतदस्माच्छरीरा-
दुत्क्रामत्यथैतैरेषो रश्मिभिरूर्द्ध्वमाक्रमते ।

उर्ध्वगति-क्रमश्चाद्भुतो विहितः श्रुतौ तथा हि—

स एतं देवयानपन्थानमासाद्य अग्निलोकमागच्छति
स वायुलोकं स वरुणलोकं स आदित्यलोकं
स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं तस्य ह वा
एतस्य ब्रह्मलोकस्य अयोह्रदो मुहूर्त्तो येष्टिहा विरजा
नदील्यो वृक्षस्तत्र स आगच्छति विरजां नदीं
तां मनसैवाऽत्येति स एष विसुकृतो विसुष्कृतो
ब्रह्मविद्वान् ब्रह्मैवाऽभिप्रैति ।
ब्रह्मणा सह ते सर्व्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इत्थमेव स्मृतिषु देवलोकानां विष्णुलोकानां च यथेष्टं वर्णनमुपलभ्यते । देवीलोकविषये चैवमुपलभ्यते—

भक्तौ कृतायां यस्याऽपि प्रारब्धवशतो नग !।
न जायते मम ज्ञानं मणिद्वीपं स गच्छति ॥
तत्र गत्वाऽखिलान् भोगाननिच्छन्नपि चार्च्छति।
तदन्ते मम चिद्रूपज्ञानं सम्यग् भवेन्नग ! ॥
तेन मुक्तः सदैव स्याज्ज्ञानान्मुक्तिर्न चाऽन्यथा।

इत्थं हि विष्णुलोकविषयेऽपि वर्णनमुपलभ्यते—

वसन्ति यत्र पुरुषाः सर्व्वे वैकुण्ठमूर्त्तयः।
येऽनिमित्तनिमित्तेन धर्म्मेणाऽऽराधयन् हरिम् ॥
यत्र चाऽऽद्यः पुमानास्ते भगवाञ्छब्दगोचरः।
सत्त्वं विष्टभ्य विरजं स्वानां नो मृडयन्वृषः ॥
यत्र नैःश्रेयसं नाम वनं कामदुघैर्द्रुमैः।
सर्व्वर्तुश्रीभिर्विभ्राजत् कैवल्यमिव मूर्त्तिमत् ॥
वैमानिकाः सललनाश्चरितानि शश्वद्
गायन्ति यत्र शमलक्षपणानि भर्तुः।
अन्तर्जलेऽनुविकसन्मधुमाधवीनां
गन्धेन खण्डितधियोऽप्यनिलं क्षिपन्तः ॥
पारावतान्यभृतसारसचक्रवाक-
दात्यूह-हंसशुकतित्तिरिबर्हिणां यः।
कोलाहलो विरमतेऽचिरमात्रमुच्चै-
र्भृङ्गाधिपे हरिकथामिव गायमाने ॥
मन्दारकुन्दकुरवोत्पलचम्पकार्ण-
पुन्नागनागबकुलाम्बुजपारिजाताः।
गन्धेऽर्च्चिते तुलसिकाऽऽभरणेन तस्या-
यस्मिँस्तपः सुमनसो बहुमानयन्ति ॥
श्रीरूपिणी क्वणयती चरणारविन्दं
लीलाम्बुजेन हरिसद्मनि मुक्तदोषा।
संलक्ष्यते स्फटिककुड्य उपेतहेम्नि
सम्मार्ज्जतीव यदनुग्रहणेऽन्ययत्नः ॥

एवं हि त्रैलोक्यमोहने विष्णुधामनि प्रलयावधि निवसन्भक्तोऽन्ते च परमपदे विलीनो भवति। अयमेवाविपक्वभक्तिभावस्य साधकस्य सालोक्यादिलाभः।

अतश्चेदं हि भक्तेर्वैशिष्ट्यं यद् भक्तो यदि भक्तेश्चरमसीमानमुपेत्य परा भक्तेः साम्राज्ये कैवल्य-प्राप्तिं कर्तुं सर्वथाऽसमर्थश्चेत्सालोक्यादिगत्यासिन्तु साधयत्येव । अन्यथापीदं विज्ञानं स्पष्टयितुं शक्यते, तथा हि—

भक्त्या यदि निःश्रेयसावाप्तिर्न भवति तदाऽभ्युदयस्य चरमां सीमानन्तु भक्त्याऽऽसादयत्येवेत्यसन्दिग्धम् । तथा चाभ्युदयान्तिमकाष्ठायाऽवसाने निःश्रेयसाधिगतिरपि निश्चितैव । इदं हि भक्तेः सर्वाभ्यर्हितं वैशिष्ट्यं सर्वैः सर्वदा सर्वथा स्तूयते ॥ ३९ ॥

सम्प्रति भक्तिविषयकमात्मानन्दपरायणानां महर्षीणां मतभेदं वर्णयितुं प्रक्रमते—

केचिदैश्वर्य्यपरां भेदात् ॥ ४० ॥

केचिन्महर्षयः भेदात् द्वैतत्वात् ( भक्तौ भक्तेश्वरयोर्भेदसत्त्वात् ) ऐश्वर्य्यपरां भक्तिं प्रवदन्ति इति सूत्रार्थः ।

केचन भक्तशिरोमणयो महर्षयो भक्तौ श्रीमता भगवता सह भक्तस्य भिन्नतया सत्त्वात् अद्वैतज्ञानवदभेदनिर्देशाभावात् भक्तिम् ऐश्वर्य्यपराभिधानां कथयन्ति । भृगु-कश्यप-नारदादयो महर्षयोऽत्र प्राधान्यमाश्रयन्ति ।

भक्तेरुन्नतावस्थायां श्रीमता भगवता सह तन्मयतामुपेत्यापि बहवो भक्ता भेदबुद्ध्यैव तमुपासितुं ततश्चाविरतामानन्दधारामास्वादयितुमीहन्ते । ते हि तस्य भगवतोऽलौकिके षड्विधेऽप्यैश्वर्ये बद्धदृष्टयस्तद्भावभावितस्वान्तःकरणाः श्रीमद्भगवद्गुणवर्णनयैव विमुह्यन्त आनन्दसागरे मज्जोन्मज्जमातन्वन्ति । भगवल्लीलाविचारणया मुक्तिदशायामपि सांख्यविज्ञानानुरूपमवस्थाद्वितयं प्रतिभासते । यतो हि सांख्यसिद्धान्तभूमौ सिद्धिलाभमधिगतस्य पुंसः परमपुरुषसाक्षात्कारे जातेऽपि प्रकृतेरनपायिन्या विद्यमानत्वात् व्यष्टिज्ञानं नापैति । तेन च प्रकृति-पुरुषात्मकभेदज्ञानन्तु चरमावस्थायामपि तिष्ठत्येव ।

इत्थं भेदभावमवलम्बमानाः पूर्णा भक्ता भगवत ऐश्वर्य्यं प्रशंसन्त आनन्दमहार्णवे निमग्ना आत्मानं धन्यं मन्यन्ते । इयं हि भक्तिरैश्वर्य्यपरेत्युच्यते । पराभक्तेरद्वैतावस्थामस्वीकुर्वन्तः सर्वेऽपि द्वैतप्रतिपादका मुनयोऽस्यामेव कक्षायामन्तर्भवन्ति ॥ ४० ॥

मतान्तरमाह—

आत्मैकपरामपरेऽभेदात् ॥ ४१ ॥

अपरे महर्षयोऽभेदात् अद्वैतत्वात् ( चरमदशायां ध्यातृ-ध्येय-ध्याना-

त्मिकायास्त्रिपुटेर्विलये भगवद्भक्तयोरद्वैतभावाश्रयणात्) भक्तिम् आत्मैकपराम् आत्मा एव एकः परः प्रधानं यत्र तामात्मप्रधानाम् ब्रुवन्ति इति सूत्रार्थः।

केचन महर्षयः भक्तिम् आत्मैकपरां प्रख्यापयन्ति। यतो हि तेषां शुद्धा बुद्धयो भेदम्परित्यजन्त्योऽभेदमेव गृह्णन्ति। अत्र हि वशिष्ठाङ्गिरोवेद-व्यासादयः प्राथम्यमुपगताः सन्ति। एतेषां सम्मतौ यदा निर्विकल्पकसमाधि-दशायां पराभक्तेरुद्गमो भवति, तदा भक्तोऽद्वैतभावोदयेनाद्वितीयस्य सच्चिदानन्दस्वरूपस्यानुभवमास्वादयन्नानन्दसमुद्रे निमग्नो मोदमान-स्तिष्ठति।

पराभक्तेश्चरमदशायां परमात्मानं परित्यज्य नान्यस्य कस्यचनापि तत्त्वस्यानुभवो भक्तस्य तिष्ठति तदा तद्दृष्टौ कारणब्रह्म-कार्य्यब्रह्मणोरुभयोरेवै-क्यानुभवात् उभयोः स्वरूपतोऽभेदात् उभे अपि ब्रह्मणी तत्त्वतः परमात्मैवैकः इति दृढा धारणा तस्योदेति। तस्यां हि श्रेष्ठतमदशायां सर्वस्यापि दृश्यप्रपञ्च-जातस्य परमात्मनि प्रविलापनात् सर्वत्रैवैकस्य परमात्मन एव स्वरूपनिरी-क्षणात् अहमपि परमात्मैवेत्यपि स्वानुभवः स्फुरत्येव। इत्थञ्च सर्वगस्यापि भेदस्य विलोपात् स्वाभाविकी अद्वैतस्थितिरेवैका जागर्ति। इमामेव परा-भक्तेश्चरमदशां 'ब्रह्मसद्भाव' इत्यभिधयाऽभिदधति तत्त्वविदः। अधुना च भगवतोऽपि भक्तेन सह न भेदभावस्तिष्ठति। परमात्मनोऽद्वैतत्वमेवाविर्भूय विराजते। अत इमामात्मैकपरां भक्तिं प्रख्यापयन्ति ॥ ४१ ॥

सम्प्रति तृतीयं मतमाख्याति—

**उभयपरामितरे भेदाभेदाभ्याम् ॥ ४२ ॥**

इतरे अन्ये महर्षयः भेदश्चाभेदश्चेति तौ भेदाभेदौ ताभ्यां तथोक्ताभ्याम् उभयपराम् उभया, ऐश्वर्य्यपरा आत्मैकपरेति द्विविधापि भक्तिः परा प्रधानं यत्र तथोक्तां भक्तिं प्रवदन्ति इति सूत्रार्थः।

केऽपि महर्षयः कार्य्यकारणविचारणया भेदाभेदसम्बन्धतो भक्तिमुभय-परामभ्यामनन्ति। इह हि याज्ञवल्क्य-वाल्मीकि-शाण्डिल्यप्रभृतयो महर्षयो मुख्या आचार्य्या निगद्यन्ते। तथा हि—कार्य्यदशायां यदा भेदभावो जागरू-कस्तिष्ठति, तदा ऐश्वर्य्यपरया भक्त्या, कारणावस्थायाञ्च यदा भेदभावो विलीनो भवति, तदा केवलं सच्चिदानन्दात्मना ब्रह्मभावमद्वैतात्मकमाश्रित्या-नन्दमग्ना इमे आचार्य्या आत्मैकपरां भक्तिमाश्रित्य नन्दन्ति, इति नास्ति कोऽपि विरोधो भक्तेरुभयात्मकत्वेऽपि।

कार्य्यकारणयोर्भेदानुरूपमुभयदशायामेवेमे महर्षय आनन्दानुभवं कुर्वन्ति, इत्यस्य विज्ञानस्यावगतये किंयन्त्यपि उदाहरणान्यत्र संगृह्यन्ते। येनैश्वर्य्यपराया आत्मैकपरायाश्च भक्तेरुभे अपि अवस्थे बुद्धिमूलमारोढुं प्रभवतः। तथाहि—

सृष्टिदशायाम् ऐश्वर्य्यपराया जीवन्मुक्तावस्थायाञ्चात्मैकपराया भक्तेः सद्भावः समुचितो युक्तिसंगत एव प्रतिभाति। अन्यथापि बोद्धुमपार्य्यते यद् रागात्मिकाया भक्तेरन्तिमायां काष्ठायां यदा साधको भक्तो रससागरे मज्जन्नुन्मज्जन्नन्तस्तले एव निमग्नो भवति, तत एवैश्वर्य्यपराया अवस्थायाः पूर्णतया विकाशो भवति। इयं हि प्रथमा दशा भक्तेरुच्यते। इतः परं यदा पराभक्तेरन्तिमायां स्थितौ ब्रह्मसद्भावात्मिकाया अद्वैतस्थितेरुदयो भवति सैवात्मैकपरावस्था भक्तेर्द्वितीया दशोच्यते।

इममेव विषयं प्रकारान्तरेण बोधयितुमभिदधाति, तथाहि भक्तेरुन्नतायां स्थितौ यदा भक्तस्य चेतो व्युत्थानकाष्ठामधिगतं भवति तदा ऐश्वर्य्यपरायाः भक्तेरवसरः। यदा च सर्वतो विरक्तं चेतः संहृत्य स्वस्वरूपावस्थां समाश्रितो भक्तो ब्रह्मानन्दाप्लुतो भवति तदैवात्मैकपरावस्था समुदेति, इति सर्वभक्ताभ्यरतः पन्थाः।

इह ऋषीणां परस्परमतभेदमुपलक्ष्य कश्चिदाशङ्केत चेत्तस्योत्तरमुपदिशति। बद्धदशा मुक्तदशेति द्वयोरपि दशयोर्भेदेनापि ऐश्वर्य्यपरा आत्मैकपरेति भक्तेरपि भेदद्वयं सयुक्तिकं स्थास्यत्येव। भक्तो यदोन्नतामवस्थामारोहति तदा तस्य प्रकृति-प्रवृत्ति-संस्कारानुगुण्येनोपरि-प्रतिपादित-विज्ञानानुसारम् ऐश्वर्य्यपराया आत्मैकपरायाश्चेति उभयस्या अप्यवस्थायाः सद्भावोऽवश्यमुपस्थितो भवति। एवञ्चावसाने पूर्णजीवन्मुक्तदशायां जीवन्मुक्तः साधको यदा जगत्सम्बन्धतो व्युत्थानावस्थां समाश्रयति तदा ऐश्वर्य्यपराया भक्तेः सम्भव आवश्यकः। भक्तस्य स्वस्वरूपावस्थायान्तु आत्मैकपराया अपि सद्भाव आवश्यक एवेति आपाततो भासमानोऽपि महर्षीणां मतभेदो न तत्त्वतः स्वसत्तां निर्वोढं क्षमः। इत्यत एवेत्थं रससागरे निमग्नस्य भक्तिपरायणस्य भक्तस्य भक्तिरुभयपरेत्युच्यते इति संक्षिप्तमुपसंहरति चरमेणानेन सूत्रेण।

इति महर्षिप्रवराङ्गिरोविरचित-दैवीमीमांसादर्शनभाष्ये

रसपादो नाम प्रथमः पादः समाप्तः।

विषयः— पृष्ठतः—पृष्ठपर्यन्तम्

विषयः— पृष्ठतः—पृष्ठपर्यन्तम्

विषयः— पृष्ठतः—पृष्ठपर्यन्तम्

# सूर्योदयः ।

नवमे वर्षे } पौषस्य पूर्णिमा सं० १९९० { सप्तम-संख्या


## सम्पादकीया अभिप्रायाः ।

### संघे शक्तिः कलौ युगे ।

निखिलभारतवर्षीयाद्वितीयविराड्धर्मसभायाः श्रीभारतधर्ममहामण्डलस्य प्रारम्भकालादेव विधर्मविजातीयमाक्रमणं, बहुविधा विपत्तीः, महीयसीं बाधापरम्परां च सोढं सोढं धैर्यशालिन्याऽनया सभया कथमिव यथाशक्ति देश-कालपात्रमनुसृत्य अबाधमुद्योगमाश्रित्य च वर्णाश्रमधर्मसेवा विहितेति समेषामेव प्रेक्षावतां प्रत्यक्षमेवास्ते। निरतिशयघोरे संकटमये समयेऽत्र समवेतसंघ-शक्तिमन्तरेण आत्मरक्षा न भवितुमर्हतीति सर्वाभिरेव धर्मसंस्थाभिः पारस्परिक सहानुभूतिपूर्वकमेकवाक्यतया सहयोगितया च सनातनधर्मसम्बन्धीयं कार्य-कलापमनुष्ठेयमिति पूर्वं निवेद्यते।

× × × × ×

मदगर्विता अदूरदर्शिनो धर्माधर्मविवेकबहिर्मुखाः पाश्चात्यशिक्षासम्पन्ना भारतवर्षस्य राजनीतिकनेतारो जगत्सु सर्वतोऽपि वृद्धायाः सनातनधर्मावलम्बिन्या आर्यजातेस्तदीयत्रिलोकपवित्रकरवर्णाश्रमशृङ्खलायाश्च मूले बहुवारं कुठाराघातमकार्षुः, किन्तु सम्प्रति दैवदुर्विपाकेन भारतीयराज्यकार्यचारिणोऽपि कार्यमिदं न विरुन्धन्ति, प्रत्युतात्र घृणार्हकर्मणि सह युञ्जन्ति! सर्ववादिसम्मतोऽयं सिद्धान्तो यत् भारतसम्राजः साम्राज्ये सनातनधर्मावलम्बिनीनां प्रजानां सर्वतो गरीयसी संख्या वर्त्तत इति। सनातनधर्मावलम्बिनी प्रजा प्रजारक्षण-परायणं धर्मात्मानं राजानं देवांशसम्भूतं सम्मनुते। सा खलु स्वीयं धर्ममेव सर्वस्वं जानाति। राजद्वारा च तदीयस्वत्वधर्मसंरक्षणं भविष्यतीति तस्याः प्रबलो विश्वासः। विचारेणैतेन सनातनधर्मावलम्बिनी प्रजा व्यवस्थापरि-

षदादिषु स्वजनप्रवेशमुपेक्षमाणा शान्तिप्रिया सदा सन्तिष्ठते। एतया तदीयो-दासीनतयैव एतादृशी विपत्तिपरम्परा परितः समापतति। अवसरेऽत्र सर्वै-रेव सनातनधर्मावलम्बिभिस्तथा प्रयतनीयं, येन भारतीयशासकानां भारतीय-राजनीतिनेतॄणामपि शृंखलाबद्धमस्माकं संघटनं सम्यग् विदितं भवेत्।

× × × × ×

या किल जातिर्देवेषु जगत्सु तदीयसंचालकेषु देवर्षिपितृषु परमं विश्वासं विदधाति, या खलु कर्मणः क्रियां प्रतिक्रियां, जन्मान्तरवादं च स्वीकरोति; या हि देवप्रतिमापूजायां, योगशक्तौ, श्राद्धतत्त्वे, वेदशास्त्रोक्तसंस्कारेषु च श्रद्दधाति; या च वर्णाश्रमशृङ्खलां, शुद्ध्यशुद्धिविवेकं मन्यते; या तु त्रिलोकपवित्रकरं सतीत्वधर्मं पालयित्रीणां निजानां मातॄणां भगिनीनां कन्यकानां च पवित्रता-संरक्षणं समीहते; या तु अध्यात्मलक्ष्यं मन्यमाना सर्वमेव जगत् स्वीयं कुटुम्ब-मामनन्ती स्वीयसदाचारपालनेन निजां रजोवीर्यशुद्धिं संरक्षति, सैव जातिः हिन्दुजातिनाम्ना आर्यजातिनाम्ना वा व्यवहर्त्तुमर्हा, नाऽन्येति। इदानीं कियतः कालादारभ्य धर्मविहीनवैदेशिकशिक्षाकुत्सितपरिणामतो विदेशीय-सभ्यताचाकचिक्यचमत्कारतो गजनिमिलीकामापन्नाः स्वार्थपरतामृगमरीचिका-ग्रस्तमनसो निजसंख्यावृद्धिमभिप्रेत्य नवशिक्षादीक्षाशिक्षितदीक्षिताः ख्रिस्त-माहम्मद-( ईसाई-मुसलमान ) जातिव्यतिरिक्तां सकलामेव जातिं हिन्दुजाति-मार्यजातिं वा समुद्घोषयन्ति। आस्तिकतायां ये खलु ख्रिस्त-माहम्मदजाति-तोऽपि निकृष्टाः, सदाचारदृष्ट्या ये पतितशिरोमणयः, विचारे च ये सर्वत उच्छृङ्खलाः, सनातनधर्मावलम्बिनां वर्णाश्रमशृङ्खलां तदीयप्राणरूपिणीं ये सर्वथा प्रणाशयितुमेव सततं चेष्टन्ते, त एव अधार्मिका जनाः प्रायशो राजनीति-नेतारः सन्ति, ते खलु राजकीयव्यवस्थापरिषदादिषु प्रविशन्तः स्वात्मानं सनातनधर्मावलम्बिनमुद्घोषमुद्घोष्य सनातनधर्मं समूलमुन्मूलयितुं सर्वथा सर्वदा च प्रयतन्ते। एतेनैव दुर्दवसमुज्जृम्भितेन कश्चिद् विपथमनुसरन् नायकायमानः सनातधर्मनामतः स्वकीयं पृथक् सम्प्रदायं ( पन्थ ) संचालयितुं समीहते, कोऽपि धर्मचर्चोद्विग्नमना निजां उच्छृङ्खलराजनीतिकामनां चरितार्थ-यितुं कामयते। अतएवेदानीं काले महदावश्यकमिदं यत् वर्णाश्रमशृङ्खला-प्रिया सनातनधर्मावलम्बिनी प्रजा नैजं स्वतन्त्ररूपेण संग्रन्थनं विधाय हिन्दु-नाम्ना प्रजासंख्यासंवर्द्धनसमीहां स्वधर्मध्वंसिनीं विहाय रागद्वेषतः तटस्था तिष्ठतु। स्वकीयसाधारणधर्मानुसारेण महम्मदान् ख्रिस्तांश्च अन्यानपि भारतवर्षस्य तत्तन्नवीनधर्ममतावलम्बिनो नैजान् भ्रातॄन् मन्यमाना सा सर्वै-

रेव साद्र्धं सहानुभूतिं प्रदर्शयन्ती स्वीयं स्वतन्त्रं संग्रन्थनं समनुष्ठाय स्वकीयं विशेषधर्मं परिपालयन्ती अस्मिन्नापत्काले आत्मरक्षां विदधात्विति।

× × × + ×

इदानीन्तना नवशिक्षिताः स्त्रियः पुरुषा राजकीयकर्मचारिणश्च केचनेद्मामनन्ति यत् सामाजिकै र्लौकिकैश्च विषयैः सह धर्मस्य कोऽपि संबन्धो न संस्थापयितव्यः। ते हि मन्दिरप्रवेशं लौकिकं, विवाहकालनिर्णय-विवाहविच्छेदादिं सामाजिकं च विषयं जानन्ति। अन्यच्च, अनेके राजनीतिकनेतृमानिनो बहवः परे च शक्तिशालिनो निरन्तरमेतदर्थं प्रयतन्ते यत् भारते वर्षेऽपि जातिपङ्क्तिभेदभावध्वंसिनः साम्यवादस्य प्रचारेण भारतं स्वाधीनं विधेयमिति। एतद् विना नैव भवितुमर्हति भारतस्य कल्याणमिति तेषां विश्वासः। केचन नायकाभासास्तु प्रत्यक्षं नियमतः प्रचारयन्ति, केचन तु "अन्तः शाक्ताः बहिः शैवाः सभामध्ये च वैष्णवाः" इति भावं चरितार्थयन्ति। अन्यदेशीयानां कृते भावोऽयं कीदृशोऽपि स्यात् किन्तु भारतीयहिन्दूनां कृते तु नितरां हानिकरः। तेषां धम एव एतद्विरुद्धः।

× × × × ×

समयेऽस्मिन्नात्मरक्षां कामयमानैः सर्वैरेव सनातनधर्मावलम्बिभिः माननीयो भारतसम्राट् तदधिकारिणश्च वारं वारं बोधयितव्या यत् सर्वतोऽधिकसंख्यावती शान्तिप्रिया सनातनधर्मावलम्बिनी जनता इदं समीहते यत् भारतस्य राजनीतिसम्बन्धिनी भविष्यन्ती व्यवस्था यादृशी वा स्यात्; प्रान्तीया सर्वभारतीया वा भवेत्; किन्तु भारते भविष्यता राजनीतेरनुशासनेन कस्मिन् अपि धर्मसिद्धान्ते धर्माचारविचारविषये वा न स्वयं हस्तो निक्षेप्तव्यः, नापि च निक्षेपयितव्यः। एतस्य सुदृढो विचारो निश्चयश्च नूनं सन्तिष्ठेत। अन्यथा धर्मविषये सदाचारविचारसंबन्धे च अन्यैः कैश्चिदपि क्रियमाणं हस्तक्षेपमसहमाना सनातनधर्मावलम्बिनी प्रजा निजान् प्राणान् अपि दातुं सर्वतश्च समुद्युक्ता भविष्यति भविष्यतीति, भावमिमं राज्यशासनकर्तॄणां तदधिकारिणां च हृद्यस्थं विधातुं प्रतिप्रान्तं प्रतिमण्डलं च समवेतशक्तिभिः सनातनधर्मसभाभिः प्रबलः प्रयत्नो महान् उद्योगश्च नूनमनुष्ठेय इति।

× × × × ×

करालकलिकालेऽत्र संघशक्तिमन्तरेण न कोऽपि सदुपायः परिदृश्यते, एतस्याः स्वजातीयसंघशक्तेः केन्द्रभूता स्वधर्मरक्षादृढव्रता श्रीभारतधर्ममहा-

मण्डलाभिधाना सभा बहोः कालात् स्वकर्त्तव्यमनुतिष्ठन्ती सततमेव पुरुषार्थमातनुते । अनेका महासभाः, संख्यातीतानि महासम्मेलनानि, बहुविधाः प्रतिनिधिसभाः, बह्वः परिषदश्च यथासमयं प्रादुरभूवन्, भवन्ति, भविष्यन्ति च, सर्वेषामेव पुरुषार्थः प्रशंसनीयो वर्त्तते । किन्तु श्रीभारतधर्ममहामण्डलः कथमिव दृढव्रतः स्वकर्त्तव्यमार्गे सदा अग्रेसरन् निरलसः स्वीयं धैर्यगाम्भीर्यं समये सर्वस्मिन्नेव प्रादर्शयत् प्रदर्शयति चेति सर्वे सद्विचारशालिनः सहृदयसज्जना जानन्त्येव । अतः किल महामण्डलोऽयं सनातनधर्मनेतॄणां, विभिन्नसमाजपतीनां, धर्मसभापरिषदादिमन्त्रिमहोदयानां, धर्मोपदेशकानां, सनातनधर्मानुयायिसंवादपत्रसंपादकानामन्येषां च सनातनधर्मावलम्बिसज्जनानां सन्निधाने सादरं सविनयमिदमभ्यर्थयते यत् ते परस्परं तादृशीं संघशक्तिमाविर्भावयन्तु, यतः सर्वविधाऽपि विपत् प्रशान्ता स्यादिति ।

× × × × ×

सम्प्रति देवापराधकारी देवस्थानमर्यादाभ्रंशकारी सदाचारसंहारकारी योऽसौ मन्दिरप्रवेशप्रस्तावो व्यवस्थापिकायां महापरिषदि समुपस्थापितो वर्त्तते, स च सनातनधर्मद्रुममूले कुठाराघातकारी एवावधेयः । तत्र सनातनधर्मावलम्बिनः सनातनधर्मविरोधिनश्च सर्वे हि समानरूपेणैव स्वीयां सम्मतिं प्रदातुं समर्थाः ! धर्मभूषण पण्डित रामकृष्ण झा बी० ए० एल्०एल्०बी० एम्० एल्० ए० महाशयो व्यवस्थामहापरिषत्सदस्यः प्रस्तावे तत्र एतादृशं संशोधनमुपस्थापितवान् यत् प्रस्तावेऽत्र तेषामेव सम्मतिदानेऽधिकारः ये मूर्त्तिपूजाप्रणयिनः सनातनधर्मावलम्बिनः सन्ति । तद्व्यतिरिक्तानां सम्मतिदाने नाधिकार इति । किन्तु दुर्भाग्यात् संशोधनमिदं न तत्र स्वीकृतमभूत् । सर्वेषामेव सम्मतिप्रदानाधिकारेण तु कुत्सितः परिणामो नूनं भावी । अतोऽत्र घोरे विपत्काले संघशक्त्या सर्वैरेव सनातनधर्मावलम्बिभिः प्रतिप्रान्तं, प्रतिपत्तनं, प्रतिग्राम, प्रतिखर्वटं, प्रतिपल्लि च सभामनुष्ठाय मन्दिरमर्यादाभ्रंशकरस्य प्रस्तावस्य तस्य ध्रुवं प्रबलो विरोधो विधेयः । तडित्पत्राणि प्रार्थनापत्राणि च द्वारीकृत्य सम्राट्प्रतिनिधिमहोदयमन्त्रिसभासचिवसन्निधाने स्वीयो विरोधभावो नूनं प्रेषणीयः । प्रार्थनापत्राणां तडित्पत्राणां च एकैका प्रतिलिपिः श्रीभारतधर्ममहामण्डलप्रधानकार्यालये, "धर्मभूषण पण्डितरामकृष्णझा बी० ए० एल्०एल्० बी० एम्० एल्० ए० एडवोकेट पटना"—संकेते च नूनं प्रहेलिमेति ।

× × × × ×

एतर्हि विवाहविच्छेद-संयुक्तकुटुम्बविच्छेद-महिलोत्तराधिकारसमर्थका विविधाः प्रस्तावाः प्रान्तीयासु भारतीयासु च व्यवस्थापरिषत्सु समुपस्थिताः सन्ति, भविष्यति भविष्यन्ति च । एतानि सनातनधर्ममर्यादाप्रध्वंसकराणि विधानानि नूनं प्रयत्नशतेन निरोद्धव्यानि । साम्प्रतं नाम्नैव हिन्दूनां, परन्तु विचारेणाहिन्दूनां संख्या व्यवस्थापिकासु सभासु निरन्तरं प्रवर्द्धते । अतः प्राणेभ्योऽपि प्रेयांसं सनातनधर्मं स्वकीयं संरक्षितुं सर्वैरेव सनातनधर्मावलम्बिभिः प्रबलं प्रयत्नं विधाय स्वधर्मप्रतिकूलानां विधानानां तेषां सर्वत्र विरोधोऽवश्यमेव विधेयः ।

× × × × ×

श्रीभारतधर्ममहामण्डलेन आङ्गलभाषात्मकमपि सूचनापत्रमत्र विषये प्रकाशितमास्ते । आङ्गलभाषाभिज्ञैः श्रीमहामण्डलतः सूचनापत्रं तदानाय्य ध्रुवमेव पठनीयम् । निखिलभारतवर्षीयः संस्कृतविश्वविद्यालयः स्वीयानि परीक्षाकेन्द्राणि भारतवर्षस्य तेषु तेषु प्रान्तेषु संस्थापितवान्, भारतवर्षीयेषु विद्यालयमहाविद्यालयेषु चापि ( स्कूल-कालेज ) धर्मशिक्षां विस्तारयितुं प्रयत्नं वितनुते । तत्सम्बन्धे च यानि यानि सूचनापत्राणि निर्गतानि, तान्यप्यानाय्य अवश्यमेवाध्येतव्यानि । संस्कृतविश्वविद्यालयस्य समुन्नत्यै सर्वैरेव महीयसा सदुद्योगेन प्रयत्नो विधातव्यः ।

× × × × ×

विवाहविच्छेद-मन्दिरप्रवेशप्रस्तावादिविषये श्रीमहामण्डलेन पृथक् सूचनापत्राणि विकाशितानि, पुस्तिका अपि प्रकाशिताः, आवश्यकतायां सत्यां तानि ताश्च मूल्यमन्तरेणैव प्रेषयिष्यन्ते । सत्परामर्श-सत्सम्मति-सूचनापत्र-पुस्तिकादीनाम् आदानप्रदानार्थं "सेक्रेटरी, श्रीभारतधर्ममहामण्डल, प्रधानकार्यालय, जगत्गंज, बनारस कैंट", इति संकेतेन पत्राणि व्यवहर्त्तव्यानि-इति निवेद्यते ।

---

## विरोधमाचरामः ।

—०*०—

व्यवस्थापिकायां महापरिषदि तादृशोऽप्येकः प्रस्तावः समुपस्थापितो वर्त्तते, यत्र विधवानां स्त्रीणामपि पतिपैत्रिकसम्पत्तौ सर्वविधोऽप्यधिकारः संभवेदिति । यासां सम्पत्तीनां पतिः सर्वथाधिकारी, तासां तत्पत्नी अपि तथैवाधिकारिणी । यथा पतिः स्थावरजङ्गमसम्पत्तीनां विक्रये प्रभुस्तथैव तत्पत्नी

अपि इति तद्विधानस्याशयः। धर्मशास्त्राणि तु पवित्, पतिपैत्रिकसम्पत्तीनां विक्रये स्त्रीणां नाधिकार इति निर्दिशन्ति। विधवानां स्त्रीणां कृते भोजन-वस्त्रादीनां सौविध्यं करणीयमेव। न केवलं विधवानामेव सर्वासामेव स्त्रीणां स्वधर्मपालनरतानां परिपोषणं नितरामावश्यकमिति शास्त्रसिद्धान्तः। उक्तं च मनुना—

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः॥
जामयो यत्र शोचन्ति विनश्यत्याशु तत्कुलम्।

× × × × ×

वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः।
अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्॥

स्त्रीणां संरक्षणसम्बन्धे तदीयसम्पत्तिसंरक्षणविषये च नारदस्मृताविस्थमुद्दङ्कितम्—तथाहि—

मृते भर्त्तर्यपुत्रायाः पतिपक्षः प्रभुस्त्रियः।
विनियोगेऽर्थरक्षासु भरणे च स ईश्वरः॥
परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये।
तत्सपिण्डेषु चासत्सुपितृपक्षः प्रभुः स्त्रियः॥

केच न कथयन्ति—"सनातनधर्मशास्त्रेषु स्त्रीणां सर्वथा सर्वतश्च बन्धनमेव दृश्यते; यथाऽन्यदेशे धर्मे वा स्त्रीणां समादरो न तथा सनातने धर्मे इत्यादि।" अस्मन्मते इत्थं वादिनो भ्राम्यन्ति, सनातनधर्मशास्त्राणि च ते नांशतोऽपि जानन्ति-पश्यन्तु ते—

सतीनां पादरजसा सद्यःपूता वसुन्धरा।
पतिव्रतां नमस्कृत्य मुच्यते पातकान्नरः॥

× × × × ×

पृथिव्यां यानि तीर्थानि सतीपादेषु तान्यपि।
तेजश्च सर्वदेवानां मुनीनां च सतीषु च॥

किं विश्वसाहित्ये सनातनधर्मशास्त्रातिरिक्तमन्यत्रापि कुत्रचित् एतादृशसमादरसूचकं वाक्यं लभ्यते? भोः! सनातनधर्मशास्त्राणि कदाचारस्यैव निन्दां कुर्वन्ति। कदाचारस्यापि ये समर्थकास्तान् न जानीमः। अस्तु वयं सर्वात्मना एतस्य विधानस्य धर्मविघातकस्य विरोधमाचरामः।

श्रीमान् आत्मविद्यानन्दस्वामी योगिवर्यः काश्याम् असीघट्टसन्निधाने तिष्ठति। सतु सर्वदैव सर्वविधसंग्रहपरिग्रहपरित्यागी, विजने निवसति। ग्रीष्मसमये शीतकाले वा कौपीनातिरिक्तं न किमपि धत्ते। अन्यैर्दीयमानं भिक्षान्नमपि कर-पात्रे एव भुङ्क्ते। करपात्रे एव भोजनात् तस्य करपात्रीति नामधेयमेव समजनि। सेन्ट्रलहिन्दूस्कुलसंयुक्तप्रधानाध्यापकः कविरत्न-पण्डित-श्रीकालीप्रसन्नचक्रवर्त्ती महोदयस्तं नितरांश्रद्दधाति सोऽपि यति स्तं महोदयं सुतरां संमन्यते।

एकदा चान्द्रायणमाचरन् यतिप्रवरश्चलन् निपतितः स्तब्धश्च संवृत्तः। तदवस्थं तमवलोक्य केचन जलमादाय समागताः, तस्य च मुखे शीतलं पानीयं दातुमैच्छन्। किन्तु अस्यां मरणासन्नावस्थायामप्यसौ नियमनिष्ठः पिहितोष्ठः सन् सन्तस्थे। एतादृशी तदीयजीवनसम्बन्धिनी बह्वी वर्त्तते घट-नावली, यां चक्रवर्त्ती महाशयोऽसकृत् कथयति।

कविरत्नमहोदय एकदा अस्वास्थ्यमुपगतवान्। करुणानिधिर्यतिप्रव-रोऽसौ रात्रौ तस्य गृहे समागत्य तदीयास्वस्थताप्रशान्त्यर्थं सदुपायमुपदिदेश। तेनाऽसौ चक्रवर्त्ती महाशयः स्वस्थो जातः। श्रीश्रीमदात्मविद्यानन्दस्तौत्रमिदं निम्ननिर्दिष्टं कविरत्नचक्रवर्त्तिमहाशयेनैव निर्मितमिति—

## श्रीश्रीमदात्मविद्यानन्दस्तोत्रम्।

—:०*०:—

गुरुं चिदम्बरानन्दं साक्षाद्योगीश्वरं शिवम्।
मत्वा यो मतिमान् लोके सेवां चक्रे प्रयत्नतः॥
गुरुणाऽपि प्रसन्नेन प्रेम्णा यस्मै समर्पितः।
शास्त्रसारं समाहृत्य सु "लघुः सारसंग्रहः"॥
चान्द्रायणं सुसंकल्प्य कुर्वन् उग्रं यथाविधि।
क्षीणात्क्षीणतरोजातोऽसितशैवतिथीन्दुवत्॥
मासान्ते चलनासक्तस्तथापि विधिनिश्चलः।
एवं दार्ढ्ययुतं भक्त्या वन्देऽहं करपात्रिणम्॥
अन्तर्हिते गुरौ काश्यां गुहास्थो योगसाधने।
कौपीनवर्ज्जं नो धत्ते वसो दण्डं कमण्डलुम्॥
शौचस्नानादिभिक्षार्थं कञ्चित्कालं विहाय यः।
दिवा मौनव्रतं धृत्वा योगचिन्तनतत्परः॥

सायं काले समापन्ने सान्ध्यकृत्यं समाचरन् ।
रात्रौ निमित्तभाषी यः सहास्यवदनस्तथा ॥
शीते शय्या तृणं यस्य ग्रीष्मे भूमिस्तथोपलम् ।
तं हि योगीश्वरं भक्त्या वन्देऽहं करपात्रिणम् ॥
कुरुक्षेत्रे यथा कृष्णः पार्थं पश्यन् पराजितम् ।
भक्ताय चक्रमादाय भीष्मं हन्तुं समुद्यतः ॥
तथैव भक्तवात्सल्यात् त्यागमूर्त्तिर्महामुनिः ।
दुस्स्थं भक्तं समालोक्य पीडितं प्रबलारिभिः ॥
रात्रावपि सुदूरस्थं भक्तस्य गृहमागतः ।
क्षणं विस्मृत्य वैराग्यं भक्तस्य भूतिमिच्छता ॥
साधीयान् सफलोपायो येनाशु परिचिन्तितः ।
तमेतं करुणाधारं बन्देऽहं करपात्रिणम् ॥

---

## विश्ववैचित्र्यम् ।

—:*:—

पाश्चात्यदेशीयः डाक्टर ह्यूगोमहाशयः सुप्रसिद्ध उपन्यासलेखको वर्त्तते । तस्य सर्वतः कनिष्ठा पुत्री ६५ वर्षपर्यन्तं मौनं धृतवती । सा बाल्यावस्थायामेव एकस्य पुरुषस्य प्रेमपाशे पतिताऽभूत् । निर्दयेन तेन परित्यक्ता ६५ वर्षाणां कृते मौनावलम्बनार्थं तया प्रतिज्ञा कृताऽऽसीदिति ।

× × × × ×

जेनेवास्थाने राष्ट्रसंघस्यैकं सुविशालं भवनं निर्मीयते । भवनमिदं सर्वदेशीयपार्लमेण्टभवनानामपेक्षया सुमहत् वर्त्तते । अर्द्धक्रोशमिदं लम्बायमानम् । भवनस्य निर्मितिः १९३५ ईसवीयवर्षस्य अगस्तमासं यावत् समाप्तिं गमिष्यति । अस्य निर्माणे १॥ कोटिरूप्यकाणां व्ययः । भवनस्यैतस्य निस्तब्धता संरक्षणार्थं लासेनीधूम्रयानमार्गस्तत्रत्योऽपसार्यते । भवनस्यैतस्य सभामण्डपे ३२० प्रतिनिधयः, ३१५ मन्त्रिणः, ४८६ पत्रकाराः, ४१० दर्शकाश्च उपवेष्टुं शक्ष्यन्ति । अत्र राकफेलरग्रन्थालये १० लक्षसंख्यकानि पुस्तकानि स्थास्यन्ति । राष्ट्रसंघद्वारा कृतानां करिष्यमाणानां च सन्धीनां पत्राणि संस्थापयितुं लोहमयीमेकामूर्द्ध्वपेटिकामपि तत्रत्या निर्मास्यन्ति ।

× × × × ×

दोषाऽपवाद उक्तस्तत्राऽपि सम्मर्द्दाऽवश्यम्भाव्यतायां दोषाऽभावः सूचितो नत्व-सम्मर्द्दे ऐच्छिकस्पर्शे दोषाऽभावोऽपि । धर्म्मशास्त्रेषु शूद्रादीनां जातिब्राह्मणाद्यपेक्षया योग्यत्वेऽपि जातिब्राह्मणस्यैवोत्कर्षो मतो न तु शूद्रस्य । तथा चोक्तम्—

"जातिमात्रोपजीवी वा कामं स्याद् ब्राह्मणब्रुवः ।
धर्म्मप्रवक्ता नृपतेर्न तु शूद्रः कथञ्चन ॥"

—मनुः ८.२० ।

एतदेवाऽभिप्रेत्य पाराशर्य्यामप्युक्तम्—

'पतितोऽपि द्विजः श्रेष्ठो न च शूद्रो जितेन्द्रियः ।
निर्दुग्धाऽपि च गौः पूज्या न च दुग्धवती खरी,

इति शास्त्रीयनिष्कर्षः । न केवलं प्राचीना एव; ऐदंयुगीनाः स्वामिदयानन्दप्रभृतयोऽपि लेखेन कर्म्मणा च(१)अस्पृश्यतासिद्धान्तमन्तार आसन् । तथा च स्वामिदयानन्दः सत्यार्थप्रकाशे, एकादशसमुल्लासे, प्रार्थनासमाजादिकमित्थं प्रत्याचष्टे—

"अपने माता पिता तथा पितामह आदिके मार्गको छोड़ कर दूसरे विदेशी मतोंपर अधिक झुक जाना ब्राह्मसमाजी और प्रार्थनासमाजियोंका, एतद्देशस्थ संस्कृतविद्यासे रहित अपनेको विद्वान् प्रकट करना, इंग्लिशभाषा पढ़कर पण्डिताऽभिमानी होकर झटिति एक मत चलानेमें प्रवृत्त होना, मनुष्यों का स्थिर और वृद्धिकारक काम क्योंकर हो सकता है । अंगरेज़, यवन, अन्त्यजादिसे भी खाने पीनेका भेद नहीं रखा । इन्होंने यही समझा होगा कि खाने पीने और जाति भेद तोड़नेसे हम और हमारा देश सुधर जायगा परन्तु ऐसी बातोंसे सुधार तो कहां है उल्टा बिगाड़ ही होता है ।"

( सत्या० द्वितीया वृत्तिः पृ० ३७५ पं० ५ )

पुनरपि स एव सुधारकाणां कण्ठकुण्ठनाय दशमसमुल्लासे स्पष्टमाचष्ट—

"( प्रश्न ) कहो जी मनुष्यमात्रके हाथकी की हुई रसोईके खानेमें क्या दोष है क्योंकि ब्राह्मणसे लेके चाण्डाल पर्य्यन्तके शरीर हाड़ मांस चमड़ेके हैं और जैसा रुधिर ब्राह्मणके शरीरमें वैसा ही चाण्डाल आदिके, पुनः मनुष्य-

( १ ) कर्म्मणा यदि अस्पृश्यतामतं तदीयं दिदृक्षणीयं स्यात्तर्हि सत्यानन्दकृतो दयानन्दप्रकाशो द्रष्टव्यो यत्र 'लाला बाबू' भवनं गोरण्डासकारणादेव स समशोधयत्, कालीमोहनघोषस्य भोजनञ्च तद्गृहे 'भङ्गी' पाचिकाश्रवणमात्रेणैव तत्याज, प्रातः स्नानपि स सर्व्वविधजनसम्मेलनोत्तरं भोजनकाले पुनः स्नाति स्म, इत्यादिं ज्ञातुं 'छुआछूत और आर्यसमाज' पुस्तकं पठन्तु ।

मात्रके हाथकी पकी हुई रसोईके खानेमें क्या दोष है। (उत्तर) दोष है, क्योंकि—जिन उत्तम पदार्थोंके खाने पीनेसे ब्राह्मण और ब्राह्मणीके शरीरमें दुर्गन्धादि दोष रहित रजवीर्य्य उत्पन्न होता है, वैसा चाण्डाल और चाण्डालीके शरीरमें नहीं। क्योंकि—"चाण्डालका शरीर दुर्गन्धके परमाणुओंसे भरा हुआ होता है" वैसा ब्राह्मणादि वर्णोंका नहीं, इस लिये 'ब्राह्मणादि उत्तमवर्णोंके' हाथका खाना, और "चाण्डालादि नीच भंगी चमार आदि"का न खाना। भला जब कोई तुमसे पूछेगा कि, जैसा चमड़ेका शरीर माता सास बहिन कन्या पुत्रवधूका है, वैसा ही अपनी स्त्रीका भी है, तो क्या माता आदि स्त्रियोंके साथ भी स्वस्त्रीके समान वर्तोगे? तब तुमको संकुचित होकर चुप ही रहना पड़ेगा। जैसे उत्तम अन्न हाथ और मुखसे खाया जाता है—वैसे दुर्गन्ध भी खाया जा सकता है, तो क्या मलाऽऽदिको भी खाओगे? क्या ऐसा भी कोई हो सकता है?"

( सत्या० द्वादशावृत्तिः पृ० २८३ पं० १७ )

कीदृशोऽयं सुन्दरः स्पष्टश्च लेखः, सुधारकैरवश्यं द्रष्टव्यः। अन्यत्राऽपि—

"जैसे अन्त्यजोंकी दुर्गन्धके सहवाससे पृथक् रहनेवाले अच्छे हैं, जैसे अन्त्यजोंकी दुर्गन्धके सहवाससे निर्मल बुद्धि नहीं होती, वैसे तुम और तुम्हारे संगियोंकी भी, बुद्धि नहीं बढ़ती।"

( सत्या० अष्टादशावृत्तिः पृ० ४६७ पं० ५ )

अत्रोपमया दृष्टान्तेन वा स्वकीयमभिसन्धिमवाचकटत् स्वामी। स च अन्त्यजादिजातिमपीश्वरकृतामाख्यत्। तथा चैकादशसमुल्लासे—

"मनुष्य पशु पक्षी वृक्ष जलजन्तु आदि जा तेयां परमेश्वर कृत हैं। जैसे पशुओंमें गौ अश्व हस्ती आदि जातिभेद, वृक्षोंमें पीपलवट आम्र आदि जाति भेद, पक्षियोंमें हंस काक वक आदि जातिभेद, जलजन्तुओंमें मत्स्य मकर आदि जातिभेद ईश्वर कृत हैं; वैसे ही मनुष्योंमें ब्राह्मण-क्षत्रिय वैश्य शूद्र अन्त्यज आदि जातिभेद ईश्वरकृत हैं।"

—सत्या० त्रयोदशावृत्तिः पृ० ३६८।

केवलमत्रैव न, प्रत्युत स्वामिदयानन्दो यजुर्वेदभाष्येऽप्यस्पृश्यतामण्डनं व्यदधाद्, यथा—

"वायवे चाण्डालम्" यजुः अध्या० ३० मं० २१ इति मन्त्रांशस्य तत्कृत. भाष्यं यथा—"वायवे ( वायुके स्पर्शके अर्थ ) चाण्डालं ( भंगीको ……दूर

शिशङ्किष्व आसन्। संस्कृतानभिज्ञतया स्वाभिप्रायमपि निवेदयितुमसमर्थाः-प्रार्थनया सभापतिमहोदयाज्ञां लब्ध्वा हिन्दीभाषायामेव प्रश्नमिव्धाय मुखभञ्जक-मुत्तरं प्राप्य तूष्णीभावमासादिताः। ये तत्सामाजिकास्तत्रावस्थिता आसंस्ते-षामधोनामानि निर्दिश्यन्ते-पं० उदितनारायण उपमन्त्री रानीमण्डी, बाबूबरजोर-सिंहवर्म्मप्रभृतय आर्य्यसामाजिका बहवो विराजमानास्तत्रासन्। अन्ते सभा-पतिमहोदयानां सुभाषणं समभवत्। प्रयागस्थ-श्रीसरयूपारीणब्राह्मणसंस्कृतः पाठशालीयप्रधानाध्यापकव्या० आचार्यपण्डित श्रीसीतारामशर्म्मणां धन्यवादपुर-सरं सभाविसर्जनमभवत्। अस्यास्सभाया आर्यसामाजिकैस्सह शास्त्रार्थो भवि-ष्यतीति प्रधानोद्देश्यमासीत्। शास्त्रार्थश्च संस्कृत एव भविष्यतीति नियमोऽप्या-सीत्। अत एवैतन्नियममनुसन्धाय गीर्वाणवाणीवञ्चितान्तःकरणा नागच्छं-स्तदा धार्मिकव्याख्यानैरेवपर्यवसितमासीदिति।

त्रिपाठ्युपनामकसरस्वतीप्रसादश्छात्रः।

श्रीसरयूपारीणब्राह्मणसंस्कृतपाठशाला, प्रयाग।

---

## संस्कृतवादविवादोत्सवः।

श्रीशुभपौषकृष्णामावस्यायां तदनुसारञ्च ता० १७-१२-२३ ई० काश्यां श्रीदिगम्बरजैनस्याद्वादमहाविद्यालये "वर्णव्यवस्था जन्मना कर्मणावेति विषय-मुररीकृत्य विवादः सानन्दं समाप्तिमगात्।

सुरसरित्संसर्गसमीरणसमीरितशैत्येन परिपूरितां विकचितकुसुम-दामभिश्च संशोभितां सभाभूमिं भूयांसो विद्वांसस्तथा गृहेलिमगीर्वाणवाणी-गुणगरिमाणश्च बहुतिथा विद्यार्थिनोऽलङ्कृतवन्तः।

सभास्तारास्तु श्रीमत्पण्डितप्रवरबालकृष्णमिश्रमहोदयास्तथा विद्वत्तल्लज-सभापति उपाध्याया स्तथा वीरमणिमहानुभावा एम० ए० समभूवन्निति।

वाराणसेयविद्यालयेभ्यः पञ्चविंशत्संख्याकाश्छात्राः पक्षविपक्षयोर्व्या-चिख्यासवः समागता आसन्।

तत्र च वक्तृत्वकलाचातुर्येण कर्मपक्षे स्याद्वादविद्यालयीयः श्रीश्याम-लालो जैनस्तथा जन्मपक्षे भारतधर्ममहामण्डलस्य छात्रः श्रीअयोध्याप्रसाद इति द्वौ छात्रौ जैनोपाह्वश्रेष्ठिवर्य्य-श्रीबनारसीदासरामदासमहानुभावैः प्रदत्ताभ्यां रजतपदकाभ्यां विभूषितौ।

तथा भारतधर्ममहामण्डलस्यैव छात्रौ बहुलाङ्कभाजौ स्तः, अतश्च तस्यैव विद्यालयस्य राजती मूर्तिः ता० १-२-३४ ई० मितौ स्थानीय-स्याद्वादमहाविद्यालयस्य वार्षिकोत्सवे प्रदेया भविष्यति ।

सभापति-श्रीबालकृष्णमिश्र महोदया अपि विद्यार्थिभिश्च बहुशः प्रार्थिता गम्भीरमञ्जुलगिरा इत्थं व्याख्यातवन्तः—साम्प्रतिकी हि परीक्षा सुमेधसामपि विद्यार्थिनां न हिताय प्रत्युताधि-व्याधि-विमोहित-बुद्धीन् पल्लवग्राहि-पाण्डित्य मण्डितांश्छात्रान् करोति । किञ्च दरीदृश्यन्ते खलु विहीनकर्माण स्खलच्चारित्रवर्माणः पुरातनधर्माणो विद्यार्थिनः सदाचार-परम्परा-पराङ्मुखा इति । यद्यस्मिन्नपि दुर्लभे मनुष्यजन्मनि प्रशस्तकुले चात्मसाक्षात्कारिणो विद्वांसो न भवेयुश्चेत्तर्हि जन्मान्तरेऽसम्भाव्या एव तेषां कल्याण-परम्परा । अनश्वरात्मकल्याणमेव वैदुष्यस्य मानुष्यस्याभिजात्यस्य च प्रधानं फलमिति । अनन्तरं हि सदस्य-सम्मान- पुरस्सरं सभाविसर्जनमभूत ।

हर्षचन्द्रो जैनः बी० ए० एल० एल० बी० अध्यक्षः ।

---

काश्यां स्थानीये परिव्राजकमहामण्डलीयोपदेशक विद्यालये पौषशुक्ल रविवासरे तदनुसारं ता० ३१-१२-३३ पूर्णिमायाम् 'दर्शनकेसरि' साहित्याचार्याणां श्रीमतां गोपालशास्त्रिणां सभापतित्वे महता प्रयत्नेन अखिलभारतवर्षीयच्छपरास्थ-संस्कृतवादसम्मेलनस्य द्वितीयाधिवेशनमभूत् । तत्र नानादिगन्तागतानां संस्कृतच्छात्राणां मध्ये प्रथमं पदकं गोयनका-महाविद्यालयीय-श्रीराजेश्वरप्रसादशर्म्मणे द्वितीयन्तु बालविद्यालयीय-विश्वेश्वरझाशर्म्मणे तृतीयं गोयनकामहाविद्यालयस्य राजनारायणशुक्लाय चतुर्थं श्रीनृसिंहशर्म्मणे पञ्चमं श्रीवाचस्पति मिश्राय षष्ठं श्रीआनन्दविहारिशर्म्मणे सप्तमं मलहुरामशर्म्मणे अष्टमं श्रीअयोध्याप्रसादाय प्रदत्तमिति-साहित्य रत्न पं० कपिलदेवपाण्डेयः छपरा पण्डितपुरस्थः ।

---

## शोकाश्रुबिन्दवः ।

ले०—श्रीजयनारायणशास्त्री ( सं० वि० वराही )

दिशा शून्या जाता यदवधि गतः सौरिसदनं
 भृशं देवीकान्तो निजनिधनशम्बप्रहरणैः ॥
स नो केषां चेतो दलयति हि भूमौ प्रतिपलम् ।
 अहो वेधः ! कस्मादिह नहि धरायां दययसि ॥ १ ॥
हृतश्रीः संजाता चिरभरतपुष्टा वसुमती
 समाशा संदिश्यैः प्रतिरुदितशब्दैर्विकलति ॥
हते देवीकान्ते विपिनगजधीरध्वनि हरे
 हरौ मूर्त्तौ श्लेषस्य विलपति दीना हि मिथिला ॥ २ ॥
सुतः स्वर्गं यातः सुरकलहवादं शमयितुं

# कार्तिकशुक्लषष्ठीव्रतनिर्णयः।

—०:※:०—

अथ कार्तिकशुक्लसप्तम्यामर्कपूजनविधेरवगमाद्वर्षेऽस्मिन् (संवत् १६८६) यत्रक्वचनैवंविधयोगे उभयदिने सूर्य्योदयकालीनसप्तम्यलाभेन पूर्वत्र परत्र वा कदा विधेयमिति विशयः, एवन्तदङ्गभूतं षष्ठ्यामुपोषणञ्च पूर्वत्र परत्रवेति जिज्ञासायाम्, "षण्मुन्यो" रिति युग्मवाक्याच्छुक्लषष्ठीयं सप्तमीयुतैव ग्राह्येति विमर्शेन परत्रैवानुष्ठानोचितत्वात् षष्ठीस्पृष्टायां सप्तम्यामेवोपोषणं, तत्परदिने, अरुणोदये सप्तमीरहितायामष्टम्यां वा सूर्य्यपूजनमिति प्राप्ते ब्रूमः। कार्तिकशुक्लसप्तम्यधिकरणकार्कार्चन तदङ्गभूत तत्पूर्वदिनीय षष्ठ्यधिकरणकोपोषणव्रतविचारप्रसङ्गेन सामान्यतस्तिथिस्वरूपं, तच्छुद्धत्वविद्धत्वलक्षणञ्च निर्धारयामः। तथाहि—तिथिर्नाम अमासंज्ञकसर्वानुस्यूत-नित्यकालाव्यतिरिक्तानां प्रतिपद्द्वितीयादिसंज्ञानां पञ्चदश चन्द्रकलानां मध्ये एकैकस्याः कलायाश्चन्द्रमण्डलस्य सूर्य्यमण्डलेन सह परमसन्निकर्षानन्तरं परमविप्रकर्षानन्तरं वा सन्निकर्षो यावता कालेन भवति तावान् कालो यथाक्रमं शुक्लकृष्णपक्षगतो लक्षणया प्रतिपद्द्वितीयादिशब्दैः प्रतिपाद्यः। तथा च स्कान्दीय प्रभासखण्डे—"अमाषोडशभागेन देवि प्रोक्ता महाकला। संस्थिता परमा माया देहिनां देहधारिणी। अमादि पौर्णमास्यन्ताः या एव शशिनः कला-स्तिथयस्ताः समाख्याताः षोडशैव वरानने।" इत्युक्तेः। तासाञ्च तिथीनामधिकरणसप्तमी श्रुत्या विधिनिषेधाङ्गत्वं तत्र २ शास्त्रे प्रसिद्धम्, सा च तिथिर्द्विविधा, सम्पूर्णा खण्डा च। तत्राद्या द्विविधा; सम्पूर्णा, तदधिका च; अत्राद्या उभयवेधशून्यत्वेसत्यहोरात्रसत्तावती, द्वितीया च, त्रिमूहूर्तान्न्यूनाहोरात्रव्याप्तिमत्त्वेसतिपरदिनीययत्किञ्चित्सत्तावती। तथा च नारदीयवचनम् "आदित्योदयवेलाया आरभ्य षष्टि नाडिकाम्। सम्पूर्णा इति विख्याता हरिवासरवर्जिता" इति। सूर्य्योदयास्तमयत्वेनापि तिथेः सम्पूर्णत्वम्भवति। तथा चोक्तम् "अहःसु तिथयः पुण्याः कर्मानुष्ठानतो दिवा। नक्तव्रतादियोगेषु रात्रियोगो विशिष्यते" दिवैव कर्मणामनुष्ठानस्यात्सर्गतः प्रवृत्तत्वेन पुण्यथोक्तिसंगतेश्च, अत एव "त्रिसन्ध्यव्यापिनी यत्र सैव पूज्या सदा तिथि" रित्युक्तं संगच्छते। "पूर्वाह्णो देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितृणामिति" श्रुतिभ्यः "पूर्वाह्णे एव कुर्वीत देवतानाञ्च पूजनम्" इति स्मृतिभ्यश्च कालविभागस्योक्तत्वात्, "सूर्य्योदयं विना नैव स्नानदानादिकः क्रमः"

इत्यादि सामान्येन सकलकर्मसु रात्रिनिषेधाच्च । अत एव जैमिनिनापि "उदगयन पूर्वपक्षाहः पुण्याहेषु दैवानि" इत्यादि वचनबलेनाहन्येव कर्मसाफल्यमुक्तम् । तस्मात्तिथ्यन्तरवेधोपि उदयास्तमयान्तराले एव प्रायो व्यवह्रियते, न तूदयात्पूर्वमस्तमयोत्तरं वेति । सम्पूर्णेतरा खण्डा, तत्र सन्दिग्धत्वात् खण्डैव निर्णेतव्या न तु सम्पूर्णा, असन्देहात् । अतो विधिविषयकर्मसु-खण्डा, सन्देहान्निर्णेतव्या । सापि द्विविधा; विद्धा, विद्धाधिका; तत्राद्या पूर्वपरवेधसत्वेन द्विविधा, पूर्वमत्र पञ्चम्यावेधः परत्र सप्तम्यावेधः सामान्यवेधस्वरूपावगत्या प्रातस्त्रिमूहूर्तान्यूनपञ्चम्यां सप्तम्यां विद्यमाना, विशेष वेधस्वरूपावगत्या षण्मुहूर्तान्यून पञ्चम्यां विद्यमाना षष्ठी पञ्चमीविद्धा, सायं त्रिमूर्तान्यूनसप्तम्यां विद्यमानायां तत्पूर्वविद्यमाना षष्ठी त्रिमूहूर्तान्यूनैव सप्तमीविद्धा । "उदये पूर्वया तिथ्या विध्यते त्रिमुहूर्तकै"रिति, "नागो द्वादशनाड़ीभिरिति"—

"सायन्तूत्तरया तद्वन्न्यूनया न तु विध्यते । वेध्यापि त्रिमूहूर्तैव न न्यूना वेधमर्हति" इत्यादि सिद्धान्तात् । अन्त्याचान्यतरवेधवत्वेसत्यपरदिनीययत् किञ्चित्स्पर्शवती । तानि च दैवानि कर्माणि दैवपित्र्यभेदेन द्विविधानि, अत्र-दैवान्येव निर्णेतव्यानि प्रसङ्गात, अनुपयोगाच्चपितृदैवत्यानि न निर्णेतव्यानि । दैवानि यथा—उपवासैकभक्त-नक्तायाचितव्रतदानरूपेण षड्विधानि, उपवासातिरिक्तानि प्रातरादिष्वहोरात्रभागेष्वपि विहितानि । अहश्च पञ्चदशमुहूर्तात्मकस्य बहुसंमतत्वाद्बहुव्यवहारानुगुणत्वाच्च प्रातः, सङ्गव, मध्याह्नापराह्ण, सायाह्नात्मकस्य त्रिमूहूर्तात्मकत्वेन पञ्चधा विभक्तस्यैवोत्सर्गतो ग्रहणात् तत्र तत्र तत्तत्कर्मणां विधानम् । उपवासश्चाहोरात्राभोजनसङ्कल्पपरिपालनरूपोऽहोरात्रसाध्यः, स च सम्पूर्णतिथिव्यापित्वे सन्देह एव न । यत्र कर्मकालानुरोधेन कर्म कर्तुन्न शक्यते तत्रैव विषये सन्देहाच्छास्त्राणि निर्णायकानि भवन्ति, तथा हि-त्रिमूहूर्तानां ततोन्यूनानां वा कर्मकालानां व्याप्तावेकस्मिन्नेव दिने कात्स्न्येनैकदेशेन वा या कर्मकालव्यापिनी सैव ग्राह्या । यदा तिथिरेकस्मिन्दिनेऽहोरात्रयोगिनी अपरस्मिंश्चाहर्मात्रयोगिनी रात्रिमात्रयोगिनी वा तदोपवासेऽहोरात्रसाध्ये उभययोगिन्येव ग्राह्या, नान्यतरमात्रयोगिनी कर्मकालाव्यापित्वात् । तथा च "दिवारात्रौ व्रतं यच्च एकमेकतिथौ गतम्, तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रती" इत्युक्तैः । यत्तु "यां तिथिं समनुप्राप्य उदयं याति भास्करः । सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु" इत्यरोनुधेनोदयकालीनैव तिथिः प्रशस्तेति चेत् तन्न "यां तिथिं समनुप्राप्यास्तं याति च भास्करः । सा तिथिः सकला ज्ञेया स्नानदानजपादिषु" इति देवलवचनानुरोधेन रात्रिक-

र्तव्यतायाम् , दैवेपि कर्मण्यस्तमयनिथेर्ग्राह्यत्वाभिधानात् । यत्तु कश्चित् "युग्मादिवाक्यादेकदेशस्पर्शेपि परयुतैव ग्राह्येति तन्मन्दम् "यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । तिथिर्याभिमता सातु कार्यानोपक्रमोज्झिता", "कर्मोपक्रमकालगातुकृतिभिर्ग्राह्या न युग्मादरः" इत्यादि बौधायनवाक्यानुसारेण कर्मकालव्यापित्वस्यैव प्राधान्यानुगमात् । एकदेशे किञ्चित् स्पर्शस्य साधकबाधकयोरकिञ्चित्करत्वात् । सामान्यतस्त्रिमुहूर्तस्यैव युतापदेन विद्धापदेन च ग्रहणे सर्ववाक्यानामविरोधेन सामञ्जस्यम् । संवादिबहुवचनानामुपोद्वलकत्वाच्च । किञ्च युग्मवाक्यस्य अर्थवादपरत्वात् स्तुतिनिन्दावचनत्वेनोत्पत्तिविधित्वाभावात् । यदपीदं सूर्य्योदयादूर्ध्वमस्तमयात्पूर्वं वा विद्यमानायास्तिथेर्युग्मवाक्यात् ग्राह्यत्वं साकल्यज्ञानञ्च तत् तत्र तत्र त्रिमुहूर्ताधिकसत्त्वे न तु न्यूनसत्वे इति बहुत्रोपलम्भात् । तथाहि "उदिते दैवतं भानौ पित्र्यञ्चास्तमिते रवौ । द्विमुहूर्तंत्रिरन्हश्च सा तिथिर्हव्यकव्ययो"रिति विष्णुधर्म्मोत्तर वचनात्तथैव निर्णयः । "यो यस्य विहितः काल" इति वचनानुरोधेन त्रिमुहूर्तसत्वमेवोदये आवश्यकम् , यत्र त्रिमुहूर्तन्यूनाया अपि ग्रहणं तत्र स्नानदानादिविषयत्वेन विज्ञेयम् । उपवासादौ तु अस्तमयात् पूर्वत्रिमुहूर्तसत्वमेवापेक्षितम् "यां प्राप्यास्तमुपैत्यर्कः सा चेत्स्यात्त्रिमुहूर्तगा । धर्मकृत्येषु सर्वेषु सम्पूर्णान्तां विदुर्बुधाः" इति शिवरहस्यवचनात् ।

यानि तु "व्रतोपवासस्नानादा"विति त्रिमुहूर्तन्यूनाया अपि सम्पूर्णत्वप्रतिपादकानि तानि कैमुतिकन्यायेन वैश्वानराधिकरणन्यायेन वा त्रिमूहूर्तसत्वप्रशंसापराणि एव सन्ति । यश्चायं युग्मवाक्याद्दैवकर्मविषयो निर्णयः स यान्येकभक्तनक्तादीनि त्रिमूहूर्तेन ततो न्यूनेन कालेन वा शास्त्रतः साध्यानि तेषु कालव्याप्तिनिर्णयाविषयेषु पक्षेषु कर्तव्यः । उपवासेतु शुद्धत्रिमूहूर्तन्यूनाधिकायामिव शुद्धत्रिमूहूर्त्ताधिकायामपि सत्युत्तरस्यायुग्मत्वे कालव्याप्तिवशात्पूर्वैव, यापि पूर्वतिथ्याविद्धापि उत्तरदिने नास्त्येव त्रिमूहूर्तन्यूना वास्ति साप्ययुग्मापि पूर्वैव । युग्मवचनोदयवचनाप्रवृत्तेः, उभयत्रापि त्रिमुहूर्तसत्त्वावश्यकत्वस्य बहुशस्तथोक्तत्वात् । ननु "घटिकार्धं त्रिभागं वा स्वल्पं वा दूषयेत्तिथिं, पञ्चगव्यघटं पूर्णं सुराया बिन्दुको यथा "इति वचनात् "सर्वप्रकारवेधोऽयमुपवासस्य दूषक", इति निगमवचनाच्चोपवासे दूषकतिथियोगस्याल्पस्यापि त्याज्यत्वप्रतीतेः, "उदयेतूपवासस्य" "उदये सा तिथिर्ग्राह्या" "आदित्योदयवेलाया" इत्यादिरल्पाया अपि परदिनगताया ग्राह्यत्वप्रतीतेश्चेति चेन्न, घटिकार्धमिति वचनं न सर्वोपोष्यतिथिविषयम् , "उपोष्याः परसंयुक्ताः पराः

पूर्वेण संयुता" इत्यादि विशेषवचनेन पूर्वयुक्तानामपि कासाञ्चिदुपोष्यत्वात्। सामान्येन सर्वत्रत्रिमूहूर्तयोगे एव तिथिदूषकत्वोक्त्या तत्सामान्यनियमेनान्यत्रापि तादृशाभावे अल्पयोगेन दूषकत्वे वैरूप्यापत्तेः। वस्तुतस्तु तादृशानि सर्वाण्येकादशीविषयाण्येव वेधातिवेधवचनवदेकमूलकल्पना लाघवात्। किञ्च, अपिशब्द वा शब्दघटितत्वेन कैमुतिकन्यायेन त्रिमुहूर्तप्रशंसापराण्येव, एतादृशाल्पस्पर्शबोधकवचनमेकादशीमात्रविषयमिति प्रायोग्रहणेन स्पष्टत्वाच्च। त्रिमूहूर्तन्यूनलाभस्याकिञ्चित्करत्वात्, त्रिमूहूर्तसत्वे एव युग्मवचनस्य तदनुग्राहकस्य चोदयसाकल्यवचनस्य प्रवृत्तेर्न्याय्यत्वात् एकादशी तु स्वल्पापि परदिनगता ग्राह्या भवति इत्येतादृशव्यवहारस्याप्युपलब्धेः, अरुणोदयवेधस्यैकादशीमात्रविषयत्वात् अन्यतिथि विषयत्रिमुहूर्तवेधस्तु सूर्य्योदयमारभ्यैव निर्धारणात्, तस्मात् या त्रिमुहूर्तन्यूनया त्रिमुहूर्तया वा निषिद्धया पूर्वया तिथ्यायुक्ताउत्तरदिने त्रिमूहूर्तन्यूनास्ति सा पूर्वैवोपोष्येति निर्विवादत्वेन सर्वसम्मतत्वात्। तथाहि विशेषत उपवासविषये तिथिनिर्णयो विहितः "या शुद्धा त्रिमुहूर्तान्तमपि वृद्धापरेऽहनि। युग्माप्युत्तरतिथ्यासैवोपोष्याकेवला यथा॥ या पूर्वतिथिविद्धापि परेऽहनि न विद्यते। न्यूना वा त्रिमूहूर्तेषु सा पि पूर्वैव संमता। त्रिमूहूर्ताधिकावापि पूर्वविद्धोत्तरेऽह्नि या, पूर्वया परमा वा सा युग्मोपोष्येतिनिर्णयः। वस्तुतस्तु "उदिते दैवतं भानौ पित्र्यञ्चास्तमिते रवौ। द्विमूहूर्तत्रिरह्नश्च सा तिथिर्हव्यकव्ययो", रिति विशेषवचनेन भानावुदिते सत्युत्तरकालेऽह्नो मुहूर्तद्वयं दैवतं, तस्मिंश्चास्तमिते ततः पूर्वकालीनमह्नोमुहूर्तत्रयं पितृदैवत्यमतस्तत्कालव्यापिनी या तिथिर्भवति सैव क्रमेण हव्यकव्ययोर्ग्राह्या। "पौर्वाह्णिका" इति वचनेन दैवे पूर्वाह्णव्याप्त्यभिधानात्, पूर्वाह्णस्य पञ्चधाविभक्तस्य मुख्यत्वादुदिते भानौ त्रिमूहूर्तातिथि ग्राह्या।

यदपि दक्षवचनं "त्रिमूहूर्ता न कर्तव्या या तिथिः क्षयगामिनी। द्विमुहूर्तापि कर्तव्या या तिथिर्वृद्धिगामिनीति" तत् त्रिमुहूर्तव्यासेन बाधकं प्रत्युतोपोद्वलकमेव, त्रिमुहूर्त द्विमुहूर्त्तान्यतरान्यूनकालविशिष्टतिथावेव खर्वादिर्वाक्यस्यापिप्रवृत्तेश्च, विद्धायां विद्धाधिकायाञ्च पूर्वविद्धायामुत्तरवेधे सति पूर्वविद्धामपहायोत्तरविद्धायामेवोपवासः "नागविद्धा न कर्तव्ये"ति वचनात् उत्तरविद्धाया अलाभे तु स्कन्दव्रतवत् पूर्वविद्धैव कार्या, "उत्तरस्या अलाभे तु पूर्वविद्धैव गृह्यतामिति" सिद्धान्तात् सर्वत्र प्रतिषेधः प्रसक्तपूर्वस्यैव भवति प्रसक्तिश्चात्र पौर्वाह्णिकवचनात् त्रिमुहूर्तस्यैव समतिथौ बाधकाभावात्—तिथिक्षयेतु—अधिकव्याप्तिविधित्सया प्रतिषिध्यते। अतस्तत्र चतुर्थमुहूर्तस्पर्शिनी

तिथिर्ग्राह्या, तिथिसाम्यवत् तिथिवृद्धावपि मुहूर्तत्रयमेवमुख्यं मुहूर्तद्वयन्त्वनुकल्पः। एवञ्च कर्मकालव्याप्तिशास्त्रस्यखर्वादिशास्त्रेण विरोधो यत्र तत्र कर्मकालशास्त्रस्य प्राबल्यमुच्यते, प्रकृते तु सूर्योदये मुहूर्तत्रयव्यापिनी तिथिर्दानव्रतयोर्ग्रहीतव्या, एवञ्च सति-उदयमात्रव्याप्तिशास्त्रं घटिकामात्रव्याप्तिशास्त्रं वैश्वानराधिकरणन्यायेनावयुत्पानुवादरूपतया त्रिमुहूर्तव्याप्तिं प्रशंसति। तेन यत्र पूर्वेद्युरुदयकालं परित्यज्योपरि सर्वत्र व्याप्नोति, परेद्युरुदयकालमात्रं व्याप्नोति तदानीमुदयान्तरभाविन्या मुख्याया स्त्रिमुहूर्तव्याप्तेर्दिनद्वयेऽप्यभावेन द्वयोरपि दिनयोर्गौणकालत्वे सति किं ग्राह्यमितिविवक्षायां पूर्वदिने कर्मकालव्याप्तेर्भूयस्त्वात्तस्यैव ग्रहणं न्यायप्राप्तम्, केनापि निमित्तेन तद्बाधके सति परेद्युः कर्मकालव्याप्तिसम्पादनाय पूर्वत्रमभिधायोदयविहीनस्य व्याप्तिबाहुल्यस्य हेयत्वोक्तिव्याजेन तदेव प्रशस्यते "आदित्योदयवेलायां याल्पापि तिथि"रिति। यदा पूर्वेद्युः सङ्गवमारभ्य परेद्युरुदयात्प्रागेव तिथिक्षयवशात्सप्तमी समाप्ता तदा यद्यपि दिनद्वये सोदय मुहूर्तत्रयन्नास्ति तथापि पूर्वेद्युरेवानुष्ठानमुचितम् "सा तिथिः सकलाज्ञेया यस्यामस्तमितो रवि"रितिवचनेन सम्पाद्यायाः सोदयत्रिमुहूर्ताया व्याप्तेर्विद्यमानत्वात्। यदा प्रातः पञ्चमी त्रिमूहूर्ता ततोधिका वा, सायञ्च षष्ठी त्रिमूहूर्ता ततोधिका वा भवति तदा तादृश्या एवोभयतस्त्रिमुहूर्त्तोपेतायास्तिथेर्विद्धत्वेन निषेधविषयत्वात्। वस्तुतस्त्वयं त्रिमुहूर्तवेधः सर्वसाधारणो न पञ्चमी विषयको विशेषवचनसत्वेन सामान्यस्यास्वीकारात्। षष्ठ्यां पञ्चमीयुक्तोपवासनिषेधस्तु पूर्वेद्युः पञ्चम्याषणमुहूर्तवेधे सति द्रष्टव्यः। "नागो द्वादशनाड़ीभि" रित्युक्तत्वात्। अस्मिन् वर्षे च सामान्यवेधस्याप्यसत्वेन विशेषस्य दूरापास्तत्वात्। तेन पञ्चमीस्पृष्टापि पूर्वैवोपोष्या षष्ठी। यदा परेद्युरुदयादूर्ध्वं त्रिमूहूर्ता ततोधिका वा भवेत् षष्ठी तदा परैवोपोष्येति सिद्धान्तः।

यद्यपि शास्त्रे, द्वेधा, त्रिधा, पञ्चधा, पञ्चदशधा, चेति बहुपक्षा उपपादितास्तथापि बहुशास्त्रानुरोधेन पञ्चधाविभाग एव गृह्यते, लोके तथैव व्यवहाराच्च। यत्र बहुकर्तव्योपेतयोर्दानव्रतयोर्मुहूर्तत्रयमात्रेणानुष्ठानं कर्तुन्न शक्यते तत्रतरे पक्षा अनुकल्पत्वेन गृहीताः, अत एव यत्र सार्द्धसप्तमुहूर्तैरपि कर्म न समाप्यते तत्र कृत्स्नो दिवसोऽप्यनुज्ञायते। यथाः—यां तिथिमिति, "उदयन्नेव सवितेति" "व्रतोपवासनियमे" "आदित्योदयेति" इत्यादि। यद्यप्यत्र कृत्स्नदिवसाभ्यनुज्ञा तथापि उत्तरविद्धायास्तिथेर्ग्रहणे कियत्परिमाणमुदयेऽपेक्षणीयमिति बुधैर्विवेचनीयम्। तत्र बौधायनोक्तया "अल्पापीत्यनेन" निमेषमात्रं व्यासवचने-

नापि तथैव "उद्यन्नेवेति" कथनेन प्रतिभाति। भविष्यवचनेषु घटिकामात्रं प्रतीयते, वचनान्तरे विष्णुधर्मोत्तरे घटिकाचतुष्टयं भासते, कुत्र कियत् ग्राह्यमिति जिज्ञासायां सर्वाविरोधेन सर्वसामञ्जस्याय मुहूर्तत्रये तात्पर्य्य कल्पनोपसंहारस्यावश्यकत्वमतएव तत्र वैश्वानराधिकरणन्यायोपपादनं संगच्छते। यदा पूर्वेद्युर्मुहूर्तादूर्ध्वंषष्ठी परेद्युरुदयादूर्ध्वं मुहूर्तत्रयं वर्धते तदानीमपि पूर्वेद्युरेवोपवासानुष्ठानमुचितम् अस्तमय व्याप्तेरधिकत्वात्। अत एव पद्मपुराणीयवचनं संगच्छते "व्रते स्नाने तथा भवते पितृकार्ये विशेषतः। यस्यामस्तं गतो भानुः सा तिथिः पुण्यभाग् भवेदिति। अत एव च षष्ठीनिर्णयप्रसङ्गे कालमाधवे "नागविद्धा न कर्तव्या षष्ठी च न कदाचने"त्युक्त्वा यदि कदाचित् तिथिक्षयवशादुत्तरविद्धा षष्ठी न लभ्यते तदा स्कन्दव्रतवदन्यान्यपि व्रतानि नागविद्धायामपि कर्तव्यानि। तदाह वसिष्ठः—एकादशी तृतीया च षष्ठी चैव त्रयोदशी, "पूर्वविद्धातु कर्तव्या यदि न स्यात्परेऽहनि" नागवेधश्च षण्मुहूर्तात्मकः, नागो द्वादशनाडीभिरित्युक्तं संगच्छते। वेधा, तिवेध, महावेध, वेधयोगाश्चेति चत्वारो वेधाः। एवमरुणोदयवेधः, सूर्य्योदयवेधः, पञ्चदशनाडीवेधः इत्येतत्सर्वमेकादशीयावोपयोगित्वेनानुपयुक्तमित्युक्तेः। "षष्ठ्यामुपोष्य विधिवत्सप्तम्यामर्कमर्चयेदिति वचनेन, अङ्गाङ्गीभावस्य पूर्वोत्तरकालानुष्ठानक्रमस्य च स्पष्टं प्रतीयमानत्वात्। अतएवा "भिक्रम्यजुहोती"त्यत्राभिक्रमणं प्रयाजाङ्गं प्रकरणाद्भवतीत्युक्तं संगच्छते, "प्रयाजानिष्ट्वा हवींष्याधारयतीति वचनप्रामाण्येन चाङ्गस्यापूर्वानुष्ठान सिद्धेः। "वेदंकृत्वा वेदीकरोती"त्येतद्घटकक्त्वाप्रत्ययेन यथा क्रमोविवक्षितस्तथात्रापि क्त्वाप्रत्ययेनापोषणाङ्गस्य पूर्वानुष्ठानमावश्यकम्। अर्चयेदिति विधिश्रुत्या प्रधानार्काचनस्य मुख्यकाले सप्तम्यामनुष्ठानस्यौचित्याच्च, अप्रधानेपोषणस्याङ्गभूतस्यानुकल्पेऽपि कर्तुं शक्यत्वात्। यद्य प्रधानोपोषणं परदिने क्रियेत तत्परदिने सप्तम्या उपक्षयेण प्रधानकर्मणोऽर्चनस्य मुख्यकालेऽनुष्ठातुमशक्यतया प्रधानस्यैव लोपप्रसक्तेश्च। कर्मण एवापूर्वप्रयोजकत्वेन प्राधान्यावगमात् अन्यस्य च गुणत्वेनैवान्वयात्, अत एव "तिथिनक्षत्रवारादि साधनं पुण्यपापयोः प्रधानगुणभावेन स्वातन्त्र्येण न ते मता" इत्युक्तं संगच्छते।

किञ्च भविष्ये "षष्ठीसमेता कर्तव्या सप्तमी नाष्टमीयुता। पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषण"मिति सप्तमीकृत्यस्यार्क पूजनस्य षष्ठीयुक्त सप्तम्यां विधानात अष्टमीयुतायां निषिद्धत्वात्, त्रिसन्ध्यव्यापिन्यामेव षष्ठ्यां पञ्चमीयुतायां पूर्वदिने व्रतोपोषणस्यौचित्याच्च। "त्रिसन्ध्याव्यापिनी या तु सैव पूज्या सदा तिथिः। न तत्र युग्मादरणमन्यत्र हरिवासरात्" इत्युक्तेः। अत एव वर्ष क्रिया कौमुद्या-

मपि तिथिनिर्णयप्रकरणे यत्र तु षट्पञ्चमी व्रतादौ लक्ष्म्यादिपूजनं तदङ्गत्वेनोपवासविधिस्तत्र यस्मिन्दिने पूजनं तत्रैवोपवासो निर्विवाद एव।

यत्र तु रामनवम्यादावुपवासो देवपूजनञ्च प्राधान्येन द्वयं विहितं तत्रोपवासस्याहोरात्रसाध्यत्वात् यद्दिने रात्रावपि तिथियोगस्तत्रैवोपवासस्तत्तिथि विहितं पूजादिकं तु व्यस्ततिथावपि तत्परदिने पूर्वाह्णे एव संशयाभावेन युग्मवचनस्य विषयत्वात्, इति व्यक्तमुक्तम्—

भविष्ये "षष्ठीसमेता कर्तव्या सप्तमी नाष्टमीयुता। पतङ्गोपासनायेह षष्ठ्यमाहुरुपोषणम्। एकादश्यां प्रकुर्वन्ति उपवासं मनीषिणः। उपासनाय द्वादश्यां विष्णोर्थद्विदियं तथा"। एवञ्च यत्रैकस्मिन् दिने विहितकाले तिथिः साङ्गकर्मार्हा अन्यदिने विहितकाले किञ्चिद्व्यवस्थानात् साङ्गकर्मानर्हा तत्र साङ्गकर्मार्हे व्यस्ततिथेरपि ग्रहणं संशयाभावेन युग्मवचनाविषयत्वात्, विधिनानुसाङ्गप्रधानकर्मगोचरतयैव तिथिर्विधीयते, तदनर्हायास्तु विधेरेवाप्रवृत्तिः कुतः संशयः। वस्तुतस्तु नेदं विधायकं युग्मवचनं किन्तु विधिप्राप्तायास्तिथेर्द्विखण्डतानिमित्तेन नियमविधायको विधिस्तु साङ्गप्रधान कर्मार्हाया येवेति—

"पञ्चमी सप्तमी चैव दशमी च त्रयोदशी। प्रतिपन्नवमी चैव कर्तव्या सम्मुखी तिथिः।" सम्मुखी पूर्वविद्धा—

शुक्लपक्षीय सूर्य्यव्रतोपवास तत्पूजनप्रसङ्गे—
"षष्ठ्यामुपोष्य यः सम्यक् सप्तम्यामर्चयेद्रविम्।
तत्तुल्यतामर्कभक्तः सर्वं प्राप्नोति चेप्सितम्॥
षष्ठ्यां यो नियतो भूत्वा सप्तम्यां विधिवद्रविम्।
सम्पूज्योपवसेत् सोऽपि मुमुक्षुश्चेप्सितं फलम्॥

षष्ठ्यामुपोष्य सप्तम्यां रविमभ्यर्च्य वाञ्छितं प्राप्नोति। मुमुक्षुस्तत् षष्ठ्यां नियताहारो भूत्वा सप्तम्यामभ्यर्च्योपवासं कृत्वा ईप्सितं मोक्षमाप्नोतीत्यर्थः।"

अतएव—"सप्तम्यामुदिते सूर्य्ये अर्घ्यं दद्याद्गभस्तिने।"

इति वृद्धोक्तेः।

किञ्च, कार्तिकशुक्लषष्ठीत्वं निमित्तीकृत्योपवासस्योक्तत्वेन भोजनकालिक षष्ठ्यां प्राप्त भोजनस्योपोषणेन त्यागस्योचितत्वात् अनशनरूपोपवासो भोजनकालिक प्राप्तभोजनस्य त्यागस्तस्याहोरात्र व्याप्ततिथावेव विधानात् प्राप्तभोजनस्यैवोपोषणेन निवृत्तेस्तथा च पूर्वदिने एवोपोषणे संगच्छते। परदिने तु मुहूर्तद्वयमात्रषष्ठीसत्वेन तदानीं भोजनस्य स्वतोऽप्राप्तेर्निषेधाप्रसक्तेरिति परत्रानुष्ठानाग्रहपर्य्यवसायिनः कृतबुद्धय एवं विदाङ्कुर्वन्तु—

इति निर्धारयति श्रीरामदेवद्विवेदी, काशी हिन्दूविश्वविद्यालय र० स० पाठशालाध्यापकः, शास्त्रार्थतत्त्वनिर्णीतेयम्व्यवस्थेति व्यवस्थापयति श्रीचन्द्रशेखरशर्मा—(न्यायाचार्य्यः), चण्डीप्रसादशुक्लः (प्रधानाध्यक्ष—गो० म० विद्यालय काशी), अनन्तरामशर्मा, का० हि० वि० वि० र० स० प्रिन्सपल, अस्मिन्नब्दे गुरुशुक्रयोः प्रतीहारषष्ठीव्रतमिति मन्यते श्रीवाणीशझा शर्मा, सम्मतिरत्रार्थे,

हरिनाथशर्मणः, चन्द्रशेखरशर्मणः ज्यौतिषाचार्यस्य, श्रीमहादेवशर्मणः, श्रीगेनालाल चौधरी, चिन्नस्वामिशास्त्रिणः प्रा० का० हि० वि०, प्रिन्सपल धर्मविभागस्य, श्रीविद्याधरशर्मणः, न्यायाचार्य सं० का० काशी, श्रीशिवदत्तशर्मणः, श्रीराधाकान्तशर्म्मणः, कृतसम्मतिकोऽत्रबलालः। श्रीकेदारनाथशर्म्मणः, तारादत्तपन्तस्य, श्रीतारापदशर्मणः, अम्बिकाप्रसादशर्मणः—( उपाध्याय प्रो० हि० वि० वि०,) कालीप्रसादशर्म मिश्रः ( प्रो० हि० वि० वि०, ) शिवबालकशर्म्मणः, सूर्यनारायणशर्म शुक्लस्य, न्याय व्या० आचार्य ग० सं० कालेज काशी, नारायणदत्तत्रिपाठिनः। पं० श्री० सहदेव झा० नैयायिक गो० म० विद्यालय काशी।

---

## १८५५ शकाब्दे सारस्वतसमाजीयोपाधिपरीक्षायाः श्रीकाशीधामकेन्द्रतः समुत्तीर्णच्छात्राणां योग्यतानुसारतो नामानि

| छात्रनामानि | अध्यापकनामानि | वासस्थानानि |
|---|---|---|
| | सांख्यदर्शनोपाधि द्वितीयश्रेण्यां | |
| कृष्णवल्लभाचार्यः। | वामाचरण न्यायाचार्यः | ४ अहल्याबाई ब्रह्मपुरी, वाराणसी |
| | साहित्योपाधिद्वितीयश्रेण्यां | |
| शिवकुमार शर्म्मा। | गौरीनाथसाहित्याचार्यः | ६३ अगस्त्यकुण्ड, वाराणसी |
| नलिनी किशोर मजुमदारः। | वीरेन्द्र कुमार काव्य व्याकरण स्मृतितीर्थः | ७४ खालिशपुरा, वाराणसी |
| | कलापव्याकरणोपाधिद्वितीयश्रेण्यां | |
| हीरेन्द्रलालसेनः। | वीरेन्द्रकुमार काव्य व्याकरण-स्मृतितीर्थः | ७४ खालिशपुरा, वाराणसी |
| वाणीशचन्द्र चक्रवर्त्ती | | |
| | मुग्धबोधव्याकरणोपाधिद्वितीयश्रेण्यां | |
| गोपालचन्द्र गोस्वामी। | कमलकृष्ण स्मृतितीर्थः | ८० खालिशपुरा, वाराणसी |
| | पाणिनीयोपाधिद्वितीय श्रेण्यां | |
| काशीनाथशास्त्री। | गौरीनाथसाहित्याचार्यः | ६३ अगस्त्यकुण्ड, वाराणसी |
| | आयुर्वेदोपाधि द्वितीय श्रेण्यां | |
| रुक्मानन्द पुरोहित। | मनोहरलालशास्त्री | महेन्द्रगढ़, पटियाला स्टेट |

(समुत्तीर्णाः सर्व्वे छात्राः पुरस्कृताः, प्रथमस्थानभाक् च पदकविभूषितो भवेत्)

इति सूचयतः—

म० म० फणिभूषण तर्कवागीशः ( केन्द्रसमितिसभापतिः )

श्रीवेणीकुमारस्मृतितीर्थः ( केन्द्रसमिति सम्पादकः )

# दैवीमीमांसादर्शनम् ।

## द्वितीयः पादः ।

——:⊜:——

## उत्पत्तिपादः ।

—:*:—

श्रीमन्तं भगवन्तं प्रति दृढानुराग एवोपासनातत्त्वस्य प्राणस्वरूपमुच्यते । स च विषयाणां विषमयत्वपर्य्यालोचनेन ततो वैराग्यावलम्बनादृते नोदेतुमर्हतीति संसारस्योत्पत्तिस्थितिप्रलयविज्ञानप्रतिपादनद्वारा विषयस्वरूप-प्रतिपादनमेव मुख्यं प्रयोजनम् । तत्र क्रमसङ्गत्योत्पत्तिपादः प्रारभ्यते यस्यादिमं सूत्रं प्रसङ्गसङ्गतिं सूचयति—

ब्रह्मतच्छक्त्योरभेदः शक्तिशक्तिमतोरभेदात् ॥ १ ॥

शक्तिश्च शक्तिमाँश्च तौ तथोक्तौ तयोरभेदाद् ऐक्याद् ब्रह्म च तच्छक्तिश्चेति ते तथोक्ते तयोः ब्रह्ममाययोरपि अभेद ऐक्यमेवेति सूत्रार्थः ।

ब्रह्म च ब्रह्मशक्तिः माया च अभिन्ने ऐक्यमेव भजतो नास्ति तयोरणुरपि भेदलेशः । यथा "अहं मम शक्तिश्च" इत्यत्र पर्यालोचनया उभयोर्मन्मच्छक्त्योरैक्यमेवापतति, तथैव ब्रह्मणः तच्छक्तिस्वरूपाया मूलप्रकृतेश्चाभिन्नतैव शास्त्रेषूद्घोष्यते—

अत एव द्वितीयत्वं शून्यवन्नहि गण्यते ।
न लोके चैत्रतच्छक्त्योर्जीवितं लिख्यते पृथक् ॥
सर्वथा शक्तिमात्रस्य न पृथग्गणना क्वचित्
शक्तिकार्य्यन्तु नैवास्ति द्वितीयं शङ्क्यते कथम् ।
न कृत्स्नब्रह्मवृत्तिः सा शक्तिः किन्त्वेकदेशभाग् ।
घटशक्तिर्यथा भूमौ स्निग्धमृद्येव वर्तते ।

इत्यादिना ब्रह्मणा सह तस्य शक्तिरूपाया मायाया अभेद एव समर्थितोऽस्ति श्रीमत्पूज्यपादेन ब्रह्मारण्यमुनिना । अभेदविज्ञानमिदं विस्पष्टयितुं शक्तिशक्तिमतोर्विज्ञानमादौ विवेचनीयम् । यथा हि कस्याञ्चन व्यक्तौ सामगानशक्तिरसाधारिणी विद्यते । यावद्धि स प्राणी सामगानमन्यान् श्रावयति

तावत्तस्मिन् सा शक्तिरव्यक्ततयाऽन्तर्निहिता कैश्चनापि ज्ञातुन्न पार्य्यते अपि तु योगशक्तिशालिनः पुरुषात् यदस्मिन् सामगानशक्तिरन्तर्लीना विद्यते इति। यदा च स प्राणी सामगानं प्रारभते तदा सर्वोऽपि सन्निहितो जनस्तस्य तामन्तर्निगूढां शक्तिमवगत्य "अयं सामवेदाचार्य्यः" इति तं स्तौति, तां शक्तिमपि व्यक्ततया स्फुटमवगच्छतीति। तथैव ब्रह्मशक्तिर्माया यदा ब्रह्मणि विलीना अव्यक्ततया विराजते तदा जगत्प्रपञ्चस्योपरमेण सह सृष्टिप्रपञ्चं विलीनं तिष्ठति। यदा च सैव ब्रह्मशक्ति र्मायापरपर्य्याया मूलप्रकृति र्व्यक्ततामेत्य विचेष्टमाना स्वविस्तारं प्रसारयितुमीहते तदा स्थूलसूक्ष्मात्मक-भावपरिपूर्णं सृष्टिवैचित्र्यं दृश्यत्वेन परिस्फुरति। वस्तुतो ब्रह्म तच्छक्तिश्च "अहं ममेतिवत्" अभिन्नतामेव विभृतः।

द्वितीयतश्चायमपि विषयो विचारणीयो यद् सामगानकर्तारमदृष्ट्वाऽपि नद्याः परतीरवासिनः श्रोतारो मधुरं तद्गानं श्रुत्वा यथा मुग्धा भवन्ति तथैव ब्रह्मस्वरूपानभिज्ञा जीवाः तच्छक्तिरूपिण्या महामायाया व्यापारेण विमुग्धाः कौशवालिश्यमाचरन्तीति विचित्रो मोहमहिमा। अस्यामवस्थायां "अहं ममेतिवत्" ब्रह्मसम्बन्धवत्या महामायाया ब्रह्मशक्तेः सत्ता अनायासेनैव जिज्ञासुभिर्विज्ञातुं शक्यते। अपरेषां दार्शनिकानां विज्ञानतोऽपि "अहं ममेतिवद्" इति ब्रह्म-तच्छक्तिविज्ञानं स्पष्टतां सारल्यं चावहति। उक्तञ्च स्मृतिशास्त्रे—

स एव क्षोभको ब्रह्मन्! क्षोभ्यश्च पुरुषोत्तमः।
स सङ्कोचविकाशाभ्यां प्रधानत्वेऽपि च स्थितः॥
केचित्तां तप इत्याहुस्तमः केचिज्जडं परे।
ज्ञानं माया प्रधानञ्च प्रकृतिं शक्तिमप्यजाम्॥
सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका।
माया नाम महाभाग! ययेदं निर्म्ममे विभुः॥

शक्तिमता परमपुरुषेण शक्तिरूपाया अस्याः प्रकृतेर्न कियानपि भेदलेशः। यथा ह्यग्नौ दाहिका शक्तिरन्तर्निगूढा विद्यते, तथैव भगवति तच्छक्तिरूपा प्रकृतिर्विलीना विराजते। सर्वतः प्राक् समष्टिजीवानां प्रारब्धानुरूपं यदा परमेश्वरे सिसृक्षोदेति तदैवास्याः शक्तेराविर्भावो भवः। अयमेव विषयः स्मृत्यन्तरे भावान्तरेणोपात्तो दृश्यते। तथाहि—

योगेनाऽऽत्मा सृष्टिविधौ द्विधारूपो बभूव सः।
पुमांश्च दक्षिणार्द्धाङ्गो वामार्द्धा प्रकृतिः स्मृता॥
सा च ब्रह्मस्वरूपा च नित्या सा च सनातनी।

यथाऽऽत्मा च तथा शक्तिर्यथाऽग्नौ दाहिका स्थिता ॥
तस्य चेच्छाऽस्म्यहं दैत्य ! सृजामि सकलं जगत् ।
स मां पश्यति विश्वात्मा तस्याऽहं प्रकृतिः शिवा ॥
या विद्येत्यभिधीयते श्रुतिपथे, शक्तिः सदाऽऽद्या परा ।
सर्व्वज्ञा भवबन्धभङ्गनिपुणा, सर्व्वाशये संस्थिता ॥
शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः ।
अभेदं चाऽनुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥
यथैकं स्पन्दपवनौ नाम्ना भिन्नौ न सत्तया ।
तथैकमात्मप्रकृती नाम्ना भिन्ने न सत्तया ॥ १ ॥

ब्रह्मतच्छक्तिभ्यामुत्पन्नायाः सृष्टेः स्वरूपमभिदधदाह—

**अनाद्यनन्ताऽऽध्यात्मिकी सृष्टिः ॥ २ ॥**

आध्यात्मिकी अध्यात्मसम्बन्धिनी आत्मनि इति अध्यात्म तस्येयम् आध्यात्मिकी सृष्टिः सर्गधारा अनाद्यनन्ता । न आदिर्यस्याः सा अनादिः, न अन्तो यस्याः सा अनन्ता, अनादिश्चासावनन्ता चेत्यनाद्यनन्ता प्रारम्भ-पर्य्यवसानशून्येति यावत् । इति सूत्रार्थः ।

आध्यात्मिकी हि सृष्टिरनादिरनन्ता आद्यन्तविहीना विद्यते । इह संसारे दृश्या अनुभवज्ञेया वा पदार्थाः सर्वेऽपि त्रैविध्यमेव भजन्ते । तन्नियमान्तर्गतेयं सृष्टिरपि आध्यात्मिकी आधिदैविकी आधिभौतिकी चेति त्रिधा विभिन्ना विद्यते । कारणब्रह्मणि भावत्रयसत्त्वस्वीकारेण कार्य्यब्रह्मण्यपि जगति सर्वत्रैव भावत्रितयसत्ता स्वीकरणीयैवापतति । स्फुटमवलोक्यते चापि सृष्टिविस्तारेऽस्मिन्ननन्ते ।

इत्यत एव स्मृतिकृद्भिरभिहितं विद्यते यद् स एव परमः पुमान् आध्यात्माधिदैवाधिभौतिकरूपत्रितयभेदेन साधकानां नयनगोचरो भवति । तस्य चाध्यात्मिकं रूपं निर्गुणं मायाविरहितं ब्रह्म निगद्यते । आधिदैविकन्तु सगुणमयः परमेश्वर एवोच्यते । आधिभौतिकं रूपन्तु अयमेवानाद्यनन्तो विराट् पुरुषोऽभिधीयते । श्रीमतो भगवतः स्थूलशरीरात्मिका इयं विराट् सृष्टिरेव शास्त्रेषु आध्यात्मिकसृष्टिशब्देनाभिहिता दृश्यते । परमेश्वरो हि मायाश्रयेण स्ववीर्यं त्रिधा विभज्य त्रिविधां सृष्टिमुत्ससर्जेति पुराणादिषु बहुशो गीयते—

योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः ।
यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः ।
एकमेकतराभावे यदा नोपलभामहे ।

त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ।
अधिदैवमथाध्यात्ममधिभूतमिति प्रभुः ।
अथैकं पौरुषं वीर्य्यं त्रिधा भिद्येत तच्छृणु । इति ।

अत्र च आध्यात्मिकी या सृष्टिः सा आदिशून्या अन्तविरहिता चोच्यते इदं विराड् ब्रह्मणः स्वरूपं बुद्धिगोचरतातीतमप्युच्यते । दशस्वपि दिक्षु व्याप्रियमाणेऽनन्तेऽन्तरिक्षे दृष्टिपातं विदधतो भावुकस्य साधकस्य चेतःसमुद्रो विराड् ब्रह्मण इमां व्यापकतां निरीक्ष्यावश्यमेवोद्वेलितः स्यादित्यत्र कः सन्देहः ।

"प्राणः प्रजानामुदयत्येष सूर्य्यः" इति श्रुतेः ।

जगज्जीवानां प्राणदः सर्वनियन्ता एष सविता सहस्ररश्मिः अपरिमितानां शतसहस्राणां ग्रहोपग्रह-धूमकेतु-चन्द्र-तारापुञ्जानां सङ्घैः संवेष्टितो निरन्तरमविश्रामं ब्रह्माण्ड-वर्तुलतायाः केन्द्ररूपेण कस्य महासूर्य्यस्य प्रदक्षिणां कर्तुमेतावता भीषणेन महता वेगेन विधावति कथं च सोऽपि महासूर्य्य एतावता शतसहस्रेण चक्रेण संवेष्टितः कस्य महामहासूर्य्यस्य प्रदक्षिणामाचरितुं सततं भ्राम्यति ? कथं हि सर्वतो व्यापृते अनाद्यनन्ते पारावारविरहिते व्योमसागरे कोटिशो ब्रह्माण्डराशयो जलबुद्बुदवदाप्लवन्ते ? क्वैषां परिसमाप्तिरिति न बुद्धावारोहति ? अनन्तेऽस्मिन् गगनोद्याने विविधरागविमिश्रिता याः कुसुमराजयः परिस्फुटन्ति तासां कियती संख्यापरिमितिः ? कियतः कालादिमाः परिस्फुटन्ति ? कियत्कालावधि च परिस्फुटन्त्योऽस्योद्यानस्य सुषमां संवर्द्धयिष्यन्ति, इत्यादि वितर्कं कर्तुमपि मानवो न शक्नोति । दूरेऽस्ति एतेषां यथार्थविज्ञानं मानवप्रज्ञया सम्पादयितुम् । यथा हि इह मृत्युलोके कस्यचन प्राणिनो देहवियोगे तस्यैव केवलं पिण्डात्मक-पाञ्चभौतिक स्थूल-शरीरस्यापक्षयो भवति नान्येषां तत्पार्श्वचराणामपि शतसहस्राणां प्राणिनां । ते तु स्व-स्व-पिण्डात्मकं शरीरं दधतो जगद्व्यवहारं विदधतो जीवन्त्येव । एवमेव एकस्य ब्रह्माण्डस्य विलयेऽपि अनन्तानि ब्रह्माण्डगोलकानि स्व-स्व-केन्द्रे परिभ्रमन्त्येव न तेषां काऽपि क्षतिस्ततो जायते । अस्माच्च विज्ञानात् आध्यात्मिक्याः सृष्टिधारायाः अनाद्यनन्तत्वं स्फुटतरं सिध्यति । इत्यत एव श्रुतिरप्युद्घोषयति ब्रह्माण्ड-जगतो वैचित्र्यम् ।

अस्य ब्रह्माण्डस्य समन्ततः स्थितान्येतादृशान्यनन्तकोटि-
ब्रह्माण्डानि सावरणानि ज्वलन्ति । चतुर्मुखपञ्चमुखषण्मुख-
सप्तमुखाष्टमुखादिसंख्याक्रमेण सहस्रावधिमुखान्तैर्नारायणांशैः-

रजोगुणप्रधानैरेकैक-सृष्टिकर्तृभिरधिष्ठितानि विष्णुमहेश्वराख्यै-
र्नारायणांशैः सत्त्वतमोगुणप्रधानैरेकैकस्थितिसंहारकारकै-
रधिष्ठितानि महाजलौघमत्स्यबुद्बुदानन्तसंघवद्भ्रमन्ति।

"तेजसा षोडशांशोऽयं कृष्णस्य परमात्मनः ।
आधारः सर्व्वविश्वानां महाविष्णुश्च प्राकृतः ॥
प्रत्येकं लोमकूपेषु विश्वानि निखिलानि च ।
अद्याऽपि तेषां संख्याञ्च कृष्णो वक्तुं न हि क्षमः ॥
संख्या चेद्रजसामस्ति विश्वानां न कदाचन ।
ब्रह्मविष्णुशिवादीनां तथा संख्या न विद्यते ॥
प्रतिविश्वं हि सन्त्येवं ब्रह्मविष्णुशिवादयः ।
पातालब्रह्मलोकान्तं ब्रह्माण्डं परिकीर्तितम् ॥
नित्यौ गोलोकवैकुण्ठौ प्रोक्तौ शश्वदकृत्रिमौ ।
प्रत्येकं लोमकूपेषु ब्रह्माण्डं परिनिश्चितम् ॥
एषां संख्यां न जानाति कृष्णोऽन्यस्याऽपि का कथा ।
प्रत्येकं प्रतिब्रह्माण्डं ब्रह्मविष्णु-शिवादयः ॥
"कोटिकोट्ययुतानीशे ! चाऽण्डानि कथितानि तु ।
तत्र तत्र चतुर्वक्त्रा ब्रह्माणो हरयो भवाः ॥
असंख्याताश्च रुद्राख्या असंख्याताः पितामहाः ।
हरयश्च ह्यसंख्याता एक एव महेश्वरः"
"ब्रह्माण्डा भान्ति दुर्द्धर्ष्येर्व्योम्नि केशोण्डुको यथा" ।

इत्थं हि अनन्त-ब्रह्माण्डमयी आध्यात्मिकी सृष्टिरनाद्यनन्ता श्रुतिस्मृति-पुराणेष्वपि गीयते ॥ २ ॥

कार्य्यकारणविवेकतः सृष्टिकर्त्र्याः प्रकृतेः स्वरूपमाह—

**प्रकृतेस्तथात्वम् ॥ ३ ॥**

प्रकृतेः सृष्टि-सम्पादिकायाः तथेत्यस्य भावस्तथात्वम् तत्तुल्यतेत्यर्थः । अर्थात् यथा प्रकृतिकार्य्यं सृष्टिरनाद्यनन्ता तथा तत्कारणस्वरूपा प्रकृतिरपि अनाद्यनन्तेत्यत्र कः सन्देहः, इति सूत्रार्थः ।

आध्यात्मिक्याः सृष्टेरनाद्यनन्तत्वात् तत्कारणीभूता प्रकृतिरपि अनाद्य-नन्ता ब्रह्मसत्ताऽप्यनाद्यनन्तेति न विस्मरणीयम् । प्रकृतिर्हि ब्रह्मणः शक्तिरिति ब्रह्मणोऽनाद्यनन्तत्वात् तच्छक्तेः प्रकृतेरनाद्यनन्तत्वं निर्विवादसिद्धम् । इहास्मिन् विज्ञाने एतदवश्यं वक्तव्यं प्रतिभाति यत् प्रकृतेरव्यक्तावस्थायां परमात्मनो

ब्रह्मेति संज्ञा भवति । व्यक्तावस्थायाञ्च तस्याः सगुणत्वात्तस्य 'ईश्वर' इति नामोच्यते । सृष्टेरनाद्यनन्त-धारा-सम्बन्धेन च स एव परमात्मा 'विराट् पुरुष' इत्याख्यया अभिधीयते । वस्तुतस्तु प्रकृतेः सम्बन्धेनैव परमात्मनो रूपत्रयं वेदेषूपवर्णितम् । न स्वतन्त्रतया परमात्मनो भेद-कथा सम्भवति क्वापि ।

अन्यच्च अनाद्यनन्ता आध्यात्मिकी सृष्टिर्यस्या महाप्रकृतेर्गर्भे विलीना तिष्ठति सा महाप्रकृतिः स्वयमनाद्यनन्ता भविष्यतीत्यत्र कः सन्देहावसरः । इत्यस्मादेव हेतोः श्रुतिस्मृत्योरेवं वर्णनमुपलभ्यते ।

"त्वं सर्व्वाऽदिरनादिस्त्वं कर्त्री हर्त्री च पालिका" ॥

"अजामेकां लोहितशुक्लकृष्णाम्" ।

"विकारजननीं मायामष्टरूपामजां ध्रुवाम् ।"

"प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि" ॥ ३ ॥

इदानीमन्ययोर्द्वयोः सृष्ट्योः स्वरूपमुच्यते—

**आधिदैव्याधिभौतिक्यौ सादिसान्ते ॥ ४ ॥**

आधिदैवी च आधिभौतिकी चेत्याधिदैव्याधिभौतिक्यौ सृष्टी आदिना सह विद्यत इति सादिः । अन्तेन सह वर्तत इति सान्ता । सादिश्च सान्ता चेति ते तथोक्ते ज्ञेये इति सूत्रार्थः ।

तत्र आधिदैविकी ब्रह्माण्डसृष्टिः, आधिभौतिकी च पिण्डसृष्टिः, इमे उभे अपि सादिसान्ते स्तः । एका हि व्यष्टि-जीवानां सृष्टिः, अपरा च असंख्यानां व्यष्टि-जीवानां समष्टिस्वरूपा सौर्य्यस्य जगतः सृष्टिरस्ति । इमे हि पिण्ड-सृष्टि-ब्रह्माण्डसृष्टिशब्दाभ्यां संज्ञायेते । यथा हि जीवसृष्टेरादिरन्तश्च विद्यते तथैव ब्रह्माण्डसृष्टेरप्याद्यन्तौ स्तः । श्रुतावप्युदीरितम्—

"यथापूर्वमकल्पयद् दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः"

प्रतिब्रह्माण्डं पृथक् पृथक् भिन्ना ब्रह्मविष्णुमहेश्वराः सन्ति । तेषां कार्य्यविभागोऽपि स्वतन्त्र एवास्ति । तदनुसारमेव पृथग्विभिन्नानां ब्रह्माण्डानां सृष्टिस्थितिप्रलया अपि क्रमशो विभिद्यन्ते तेषां क्रमोऽपि विभिद्यत एव पृथक् इति । उक्तञ्च श्रुत्या—

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।

अन्नात्प्राणो मनः सत्यं लोकाः कर्म्मसु चाऽमृतम् ॥

यथोर्णनाभिः सृजते गृह्णते च तथाऽक्षरात्सम्भवतीह विश्वम्

रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।

इन्द्रो मायाभिः पुरुरूप ईयते युक्तो ह्यस्य हरयः शता दश ।

इयं हि श्रुतिः पिण्ड-ब्रह्माण्डयोः सादित्वं प्रख्यापयति। एवं हि जीवानां तत्समष्टिरूपस्य च तत्तद्ब्रह्माण्डस्यापि सान्तत्वमूह्यम्। यथा च स्थूलशरीराणां जरारोगमृत्यवः स्वभावसिद्धा धर्मा स्तथैव ब्रह्माण्डस्यापि ब्रह्मणो दिवसावसाने खण्डप्रलयो रुद्रस्यायुषोऽवसाने च महाप्रलयोऽपि स्वभावसिद्ध एव धर्मः। श्रुतावपि समर्थितोऽयं विषयः।

तथाऽक्षराद्विविधाः सौम्यभावाः
प्रजायन्ते यत्र चैवाऽपि यन्ति।

एवं हि स्मृतावपि समुपलभ्यते—

त्रिलोक्या युगसाहस्रं बहिराब्रह्मणो दिनम्।
तावत्स्येव निशा तत्र यन्निमीलति विश्वसृक्॥
तमोमात्रामुपादाय प्रतिसंरुद्धविक्रमः।
कालेनाऽनुगताऽशेष आस्ते तूष्णीं दिनाऽत्यये॥
तमेवाऽन्वपिधीयन्ते लोका भूरादयस्त्रयः।
निशायामनुवृत्तायां निर्मुक्तशशिभास्करम्॥
त्रिलोक्यां दह्यमानायां शक्त्या संकर्षणाऽग्निना।
यान्त्यूष्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिताः॥

अयं हि प्रलयः खण्डप्रलयनाम्नाऽप्युच्यते। इत्थमेव श्रीमतो रुद्रस्य भगवत आयुषोऽवसाने मूर्तित्रयस्यापि ब्रह्मस्वरूपविलये सति महाप्रलयः प्राकृतिको वा प्रलयो भवति। ब्रह्माण्डस्य चायुषः प्रमाणं ज्योतिःशास्त्रेष्वेवमुपदिष्टम्।

चतुर्युगसहस्राणि दिनं पैतामहं भवेत्।
पितामहसहस्राणि विष्णोश्च घटिका स्मृता॥
विष्णोर्द्वादशलक्षाणि कलार्द्धं रौद्रमुच्यते॥

तदानीमेव मूर्तित्रयस्यापि ब्रह्मणि विलये सति सर्वमपि ब्रह्माण्डं महाप्रलये विलीनं भवति। अन्यतश्च पिण्डविषये स्मृतिशास्त्रेष्वेवमुपलभ्यते।

निखिला एव संस्काराः साद्यन्ताः सम्प्रकीर्त्तिताः।
अतो जीवप्रवाहेऽस्मिन्ननाद्यन्तेऽपि जन्तवः॥
मुक्तिशीलास्तथोत्पत्ति-शालिनः सन्ति सर्वथा।
नैवात्र विस्मयः कार्य्यो भवद्भिरमृतान्धसः॥
सहजो मानवो दैवो जीव-पिण्डस्त्रिधा मतः।
मर्त्येभ्यश्चेतरे निम्ना भूतसंघाश्चतुर्विधाः॥

यैस्तु कर्म फलं पिण्डै भुज्यते सहजा हि ते ।
मर्त्योपयुक्तपिण्डा हि कथ्यन्ते मानवाभिधाः ।
दैवपिण्डाश्च ये ख्याता भुवनानि चतुर्दश ।
वर्तन्ते पितरो दैवभोगायतनरूपिणः ॥ इति ।

ब्रह्माण्डगत-जीवानां स्थूलशरीराणि सूक्ष्मशरीराणि ब्रह्माण्डीया अवयवाश्च सर्वाणि विलीनानि नष्टानि जायन्त इति आधिदैव्यधिभौतिकसृष्ट्योः सादिसान्तत्वे प्रमाणम् ॥ ४ ॥

प्रसङ्गतो ब्रह्माण्डपिण्डयोर्नश्वरतामुपदर्शयति—

**ततो ब्रह्माण्डपिण्डे नश्वरे ॥ ५ ॥**

ततः तस्मादेव हेतोः ब्रह्माण्डश्च पिण्डश्च ते तथोक्ते उभे अपि नश्वरे विनाशशीले इत्यर्थः ।

अनेनैव निमित्तेन ब्रह्माण्डस्य पिण्डस्य विनाशित्वं सिध्यति । ब्रह्माण्डं जीवदेहश्च तावुभावपि विनाशिनौ स्तः । त्रिगुणात्मिकायाः प्रकृते वैभवस्वरूपे ब्रह्माण्डपिण्डे गुणत्रयस्य पार्थक्येन विलासास्पदत्वात् सृष्टि-स्थिति-प्रलयाधीने भवतः । यथाचोपगीतं स्मृतिशास्त्रे—

यदा सिसृक्षुः परमेशिता परः
रजः सृजत्येष पृथक् स्वमायया ।
सत्त्वं सुगुप्त्यै तु रिरंसुरीश्वरः
शयिष्यमाणस्तम ईरयत्यसौ ॥

अन्यत्रापि—

अण्डकोशस्य संघातो विघात उपपाद्यते ।

अन्यच्च—

सृष्ट्वाऽखिलं जगदिदं सदसत्स्वरूपं,
शक्त्या, स्वया त्रिगुणया परिपाति विश्वम् ।
संहृत्य कल्पसमये रमते तथैका,
तां सर्व्वभूतजननीं मनसा स्मरामि ।

यद्यपि आध्यात्मिक्या अनन्तकोटेः सृष्टिधारायाः अनाद्यनन्तत्वं सुदृढम् तथापि ब्रह्माण्डानि व्यष्टि-रूपेण स्थितानि प्रकृतिदेव्याः त्रिगुणात्मकतया अवश्यमेव नश्वराणि । एतदपि समुपदिष्टमेव पूर्वम् यद् प्रतिब्रह्माण्डं तद्ब्रह्माण्डीय-रुद्रदेवायुषा सहैव तद्ब्रह्माण्डायुर्निर्णीयते । रुद्रदेवायुषोऽन्ते च तद्ब्रह्माण्डीय-ब्रह्मविष्णुदेवाभ्यां सहैव तद्ब्रह्माण्डमपि त्रिमूर्तिमत् सर्वथा विलीनं भवति ।

# सूर्योदयः।

नवमे वर्षे } माघस्य पूर्णिमा सं० १९९० { अष्टम-संख्या

## सम्पादकीया अभिप्रायाः।

——०※०——

### भूकम्पः।

शब्द एवाऽयं भयमुत्पादयति। यदा हि जगति धर्मस्य ह्रासोऽधर्मस्य वृद्धिर्भवति, तदैव महोत्पाता भवन्ति। इति सर्वत्र शास्त्रे समुल्लेखः। एवम्भूतस्य महोत्पातस्य वस्तुतः किंस्वरूपोऽधर्मो हेतुरित्यपि शास्त्रे पुराणादिषु च समुट्टङ्कितं विद्यते। तथा हि चरकसंहितायां विमानस्थाने इत्थमुल्लेखो दृश्यते—

"वाय्वादीनां यद् वैगुण्यमुत्पद्यते तस्य मूलमधर्मः। तन्मूलमसत् कर्म पूर्वकृतम्। तयोर्योनिः प्रज्ञापराध एव। तद्यथा—यदा देश-नगर-निगम-जनपद-प्रधानाः धर्ममुत्क्रम्य अधर्मेण प्रजां वर्तयन्ति। तदाश्रितोपाश्रिताः पौरजनपदा व्यवहारोपजीविनश्च तमधर्ममभिवर्द्धयन्ति। ततः सोऽधर्मः प्रसभं धर्ममन्तर्द्धत्ते। ततस्तेऽन्तर्हितधर्माणो देवताभिरपि त्यज्यन्ते।" इत्यादिकम् अभिधाय अग्रे अभिहितम्। "नष्ट-धर्मलज्जाचारगुणं जनपदं शश्वत् क्षुभितोदीर्णसलिलाशयं प्रपतितोल्कापातनिर्घातभूमिकम्पम्" इत्यादि भवतीति बहु समुदीरितम् तत्रैव।

इत्थं हि ज्यौतिषशास्त्रेऽपि सप्तानां ग्रहाणां संयोगेन गोलयोगमुक्त्वा ईदृशा महोत्पाता वर्णिताः सन्ति। महाभारतकालेऽपि सप्तानामेव ग्रहाणामेकस्मिन् राशौ सम्मेलनमासीदिति ज्यौतिषशास्त्रवेत्तारो वेदयन्ति। तत्र बृहस्पतिकेतुभ्यां संयोग आसीदिह तु चन्द्रराहुभ्यामिति न तादृशो महोत्पातः समजनि, इत्यपि ते कथयन्ति। अपरे च सर्वेऽपि ग्रहाः सम्मिलिता उभयत्रापि समाना एव। इह गोलयोगे चन्द्रसंयोगः महोत्पातनिवारक एवासीदित्यपि तेषां कथनमस्ति।

अस्तु नाम ज्योतिर्विदां कथनेन ग्रहाणां सप्तानां संयोगेन अयं महोत्पातः सञ्जातः, आहो भौतिकविज्ञानविदां कथनेन पर्वतप्रवेशेन ज्वालामुखपर्वतोद्रे

केण वा सञ्जात इत्यादि वाह्यकारणबहुत्वे सत्यपि मूलं कारणन्तु वयं पौराणिक-पद्धत्या धर्मशास्त्रानुसारमधर्म्ममेवाकलयामः। ग्रहाणां सप्तानां संयोगो वा अकस्मादेव हिमालयस्यान्यस्य वा पर्वतस्य भूमौ प्रवेशो वा ज्वालामुख-पर्वतप्रभेदो वा सर्वमपीदमकस्मान्निर्निमित्तं तु न भवति, इति तु सर्वैरेव विद्वद्भिः स्वीकर्तव्यम्। येन निमित्तेन ईदृशानामसम्भाव्यानामतर्कितानां दुर्योगाणां घटना संघटयते स एवाधर्मः। स हि मानवसमष्टिजन्यदुष्कर्मत एव सञ्जायते। येन च सर्वान्तर्यामी सर्वनियन्ता परमेश्वरोऽपि जीवकर्मणां फलमात्रप्रदोऽत्र विषये तटस्थस्तिष्ठति। स्वकर्मभिरेव मानवा उच्चावचं फलमुपभुञ्जाना दुःखं सुखं मरणं जननञ्चासादयन्ति। यतश्च विहारप्रान्तस्य खण्डप्रलयः सञ्जातस्तत्र तेषां समष्टिकर्मैव निदानम्। तत्र नान्यत् किञ्चिद् वक्तव्यम् महेश्वरस्तु सामान्यकारणतामेव विन्दते। विशेषकारणतान्तु मानवानामेव देश-कालसमाजादिसहकृतानि कर्माण्येवासादयन्तीति बहुधा बहुशो निगदितो दिव्य-दृष्टिभिः महर्षिभिः।

अतश्च सर्वथा सदाचारपरायणैः परमेश्वरभक्ति-देवाराधन-भूतदयादि-गुणोपार्जन-परैरेव पुरुषैर्भाव्यमिति हि अस्माकं पूर्वजानामुपदेशः। तथाहि—

"सत्यं भूते दया दानं वलयो देवतार्चनम्।
सद्वृत्तस्यानुवृत्तिश्च प्रशमो गुप्तिरात्मनः।
हितं जनपदानाञ्च शिवानामुपसेवनम्।
सेवनं ब्रह्मचर्य्यस्य तथैव ब्रह्मचारिणाम्।
संकथा धर्मशास्त्राणां महर्षीणां जितात्मनाम्।
धार्मिकैः सात्विकै र्नित्यं सहास्या वृद्धसम्मतैः।
इत्येतद् भेषजं प्रोक्तमायुषः प्रतिपालनम्।
येषां न नियतो मृत्युस्तस्मिन् काले सुदारुणे।"

इत्यादि साधु सदाचारायैव ते समादरमभिहितवन्तः। असाध्वाचरणस्य निषेधोऽपि तैरेवाभिहितः—

"अपूजनात्तु पूज्यस्य तथाऽपूज्यस्य पूजनात्।
अन्तःकरणदोषाच्च हेतोः शान्तिर्न जायते।"

इत्यादि बहु समुपदिष्टं महर्षिभिः कर्मविज्ञानवेदिभिः। तत्र संस्कृताध्यायिभिः सर्वदा सदाचारप्रवर्तकै र्भाव्यं येन न स्यादेवं जगति महोत्पातनिरीक्षणमिति विरमामो विस्तरात्।

## संस्कृतविश्वविद्यालयः।

—:*:—

नास्ति अविदितं सूर्य्योदयपाठकानां यद् इह वाराणस्यां कियता वर्षेण अखिलभारतीय-संस्कृत-विश्वविद्यालयः प्रतिष्ठितो विद्यते। यतश्च सर्वासामपि भाषाणां सर्वेषामपि शास्त्राणाम् उपाधिपरीक्षा गृह्यन्ते। अस्मिन् हायने तस्य परीक्षा-पाठ्यग्रन्थानां क्रमनियमावली मुद्रयित्वा प्रकाशिता विद्यते। विना मूल्यमेव परीक्षार्थिनां विद्यार्थिनां विदुषां पार्श्वे याचिता सती प्रदीयते। ❀

तत्रास्माकमिदं वक्तव्यं विद्यते यत् सम्प्रति संस्कृत-साहित्य-समाजे स्वाभ्युदयार्थं न कोऽपि तादृशः समुद्योगो दृश्यते, यादृशश्च समाजान्तरेऽवलोक्यते। तत्र बहवो देशकालात्मविदो विद्वांसो वदन्ति। यत् सम्प्रति संस्कृत-शिक्षा-पद्धतिरेव दोषबहुला देशकालानपयुक्ता विद्यते। यया पद्धत्या पठन्तः संस्कृतच्छात्रा धार्मिक-सामाजिक-राजनीतिकज्ञानविरहिता देशकालात्मविज्ञानाभावात् नार्हन्ति स्वाभ्युदयार्थं स्वजात्युन्नतये स्वसमाज-संघटनाय च यथोचितं समुद्योगादिकं विधातुमिति। कियदंशतः तेषां कथनं समुचितमिति मत्वा श्रीभारतधर्ममहामण्डलसञ्चालकैः नैजे अखिलभारतवर्षीय-संस्कृत-विश्वविद्यालये धार्मिकीणामेव परीक्षाणां ग्रहणार्थं साधु समुद्योगः सम्प्रति विहितः। यत्र च प्रथम-परीक्षोत्तीर्णानां तत्समयोग्यतावतामपि च्छात्राणां कृते धर्मप्रवेशिका परीक्षा संचारिता। यत्र सरलसरलानां हिन्दीभाषोपनिबद्धानां धार्मिकाणां ग्रन्थानां सन्निवेशो विद्यते। येषामध्ययन मनायासेनैव भविष्यति, यान् ग्रन्थानधीत्य च्छात्राः परीक्षामुत्तीर्य्य स्वधर्मज्ञानसम्भृता भविष्यन्ति

येन संसदि समाजे धर्मव्याख्यानं दातुमपि योग्याः समर्थाश्च भविष्यन्ति। आशास्महे यदिदानीं संस्कृत-साहित्यसमाजे स दोषो नैव स्थास्यति। यस्यकृते सर्वतोऽपि सम्प्रति संस्कृतच्छात्राणामुपरि वाक्प्रहारपातो भवति। ईदृशं सौकर्य्यं प्रथमपरीक्षोत्तीर्णानामेव च्छात्राणां कृते न विहितं विद्यते। प्रत्युत सर्वेषामेव मध्यमाशास्त्रिपरीक्षोत्तीर्णानामाचार्य्यपरीक्षोत्तीर्णानामपि संस्कृतच्छात्राणां विदुषां वा कृते। अयमिह संस्कृतसमाजे समीचीनोऽवसरः समुप-

---

❀ विश्वविद्यालयीयपरीक्षानियमावली -) आणकैकस्य चिटिकाप्रेषणेन विनामूल्यमेव वितीर्य्यते। प्राप्तिस्थानम्—कार्य्यसम्पादक संस्कृतविश्वविद्यालय, श्रीभारतधर्ममहामण्डल, जगत्गंज, बनारस।

स्थितो विद्यते यत् सर्वेषामेव कृते धार्मिकपरीक्षाणां प्रबन्धः कृतो विद्यते। 'शास्त्रिपरीक्षा', 'आचार्य्यपरीक्षा' 'व्याख्यानविशारद परीक्षा' 'राष्ट्रभाषा विशारद-परीक्षा,' इत्यादिसर्वविषयाणां सर्वश्रेणिगानामपि छात्राणांकृते धार्मिक-परीक्षाणां प्रबन्धः कृतो विद्यते। यासां परीक्षाणां दातारः छात्राः धार्मिकग्रन्थैस्सह तत्तद्विषयाणामध्ययनेन स्वस्वविषये पाण्डित्यं लभमाना धार्मिकविषयाणामपि तादृशमेव ज्ञानं समर्जयिष्यन्ति। यतश्च "एका क्रिया द्व्यर्थकरी प्रसिद्धा" इति लौकिकमाभाणकं चरितार्थयन्तः सुवर्णे सुगन्धसमवायदृष्टान्तं पोषयिष्यन्ति। व्याकरणसाहित्यादि-ज्ञानेन सह धार्मिकज्ञानसम्भृता व्याख्यान-शक्तिशालिनः सर्वत्रैव सभायां समाजे जनसम्मर्दे धर्मव्याख्यानं दातुं समर्था भविष्यन्ति। यतश्च साम्प्रतिके जागर्ति-समये नोपहासास्पदं गमिष्यन्ति। अयं हि सम्प्रति संस्कृतसाहित्यसमाजोपरि कलंकः पात्यते सर्वैः, यत् संस्कृतज्ञाः छात्राः स्वीयं धर्मप्रचारं न कुर्वन्तीति। स कलङ्कस्तु सर्वथा सम्मार्जितो भविष्यति यदि संस्कृतज्ञाः छात्रा विद्वांसो वा अस्य विश्वविद्यालयस्य नियमेन धार्मिकीः परीक्षा यथासमयं यथोचितरीत्या अधीत्य प्रदास्यन्ति चेत्। तासां परीक्षाणामवसरोऽपि ईदृग् विद्यते, यत्र समये छात्राः राजकीयपरीक्षातो मुक्ता भूत्वा रिक्तास्तिष्ठन्ति। यतो हि चैत्रमासे राजकीयपरीक्षा भवति। ततश्च छात्राः परीक्षाफलमेव निरीक्षमाणाः स्वसमयं यापयन्ति। नैव तदानीं काले तेषामध्ययने मनो रमते। तत्र साधु धार्मिकाणां ग्रन्थानामध्ययनं कृत्वा इमाः सर्वाः परीक्षाः दातुमर्हन्ति। चैत्रमासे आसां परीक्षाणामावेदनपत्रं सम्प्रियते आश्विनमासे च परीक्षा भवतीति षड्मासा धार्मिकग्रन्थानामध्ययनार्थं पर्य्याप्ताः सन्ति। तावता कालेन एतत्परीक्षास्था ग्रन्थाः साधु अभ्यस्ता भविष्यन्ति। यत्र च सम्यगुत्तीर्य्य अधिकाङ्कलाभेन प्रथमश्रेण्यामुत्तीर्णाः छात्राः पारितोषिकमपि लब्धुमर्हन्तीति सर्वथा शोभनोऽवसरः सम्प्राप्तः संस्कृतच्छात्राणां विदुषाञ्च कृते। यतस्तत्र प्रथमश्रेण्यामुत्तीर्णानां छात्राणां कृते पारितोषिकस्यापि व्यवस्था कृता विद्यते। इति समवधानं ददत इतो नियमावलीं गृहीत्वा प्रवृत्ता भवन्तु स्वाभ्युदयायेति भूयो भूयोऽनुरुध्यन्ते संस्कृतज्ञा इङ्गलिशभाषाभिज्ञा हिन्दीभाषाध्येतारोऽपि। सर्वेषामेव कृते इमाः सर्वा अपि परीक्षाः समुपयुक्ता इति संक्षिप्तमुक्त्वा विरम्यते। विशेषज्ञानमभिलषद्भिः परीक्षानियमावली द्रष्टव्या। अयं सदवसरो न विस्मरणीयः छात्रैरिति अस्माकं सदुपदेशः।

## उपाधिवितरणम्।

—०:※:०—

यद् यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्, इति ( श्रीगीता )

श्रीमद्भगवद्विभूति-पूजनमस्माकं शास्त्रे सनातनधर्माङ्गतयैव समाम्नातमिति सर्वेऽपि तत्त्वज्ञा जानन्त्येव। तदम्नायपरिपालनपरैः श्रीभारतधर्ममहामण्डलसञ्चालकैः प्रतिवर्षम् अखिलभारतवर्षीयसंस्कृतविश्वविद्यालयतो निबन्धरचनादि-परीक्षणेन, धार्मिक-सेवादिसत्कार्य्यनिरीक्षणेन स्वकीयविश्वविद्यालयीयपाठ्यग्रन्थाध्यनसञ्जातयोग्यता-परीक्षया, च तद्योग्येभ्यो विद्वद्भ्यो विविधोपाधिप्रदानेन तेषामुत्साहं सद्धर्मसेवोद्योगं सम्बर्द्धयद्भिः श्रीमद्भगवद्गुणपूजन-क्रमोऽविच्छिन्नः सञ्चाल्यते।

तत्र व्यतीते १९८९ वैक्रमाब्दे ( १९३२ ई० ) येभ्यो निम्ननामाङ्कितेभ्यो विद्वद्भ्य आर्य्यमहिलाभ्यश्च ये उपाधयोऽखिलभारतवर्षीय-संस्कृत-विश्वविद्यालयतो वितीर्णाः सञ्जातास्तेषां सूचीक्रमः प्रकाश्यते—

**आयुर्वेदमहोपाध्यायः**—श्रीमान् आर० भट्ट–महोदयः। श्रीमान् जी० के० मूर्ति–महोदयः। श्रीमान् एन्० के० टेग्गी–महोदयः।

**कलामहोपाध्याया**—श्रीमती कमला लक्ष्मी अम्मा।

**वेदान्तमहोपाध्यायः**—श्रीमान् एम्० एन् पार्थसारथिः एम्० ए०।

**ज्योतिष महोपाध्याया**—श्रीमती जी० सुमती बाई० बी० ए, एल० टी।

———

## धन्यवादाः।

—०:※:०—

भारतीय-सनातनमर्य्यादाप्रतिपालकैःश्रीभारतसम्राड्भिरपि खीस्ताब्दीयवर्षप्रारम्भदिने स्वजन्मदिवसे च प्रतिवर्षं श्रीमद्भगवद्विभूतिपूजनरूपतो योग्येभ्यो विद्वद्भ्यः स्वशासनसहायकेभ्यश्च विविधा उपाधयो वितीर्य्यन्ते। तत्रास्मिन् जनवरीमासीयप्रथमतिथौ निम्नाङ्कितेभ्यो विद्वद्भ्यो महामहोपाध्यायोपाधयो वितीर्णाः तदर्थं तेभ्योऽस्माभिरपि साधुवादाः प्रदीयन्ते।

महामहोपाध्यायाः।

( १ ) श्रीमन्तः पं० आर० बी० ए० कृष्णमाचार्य्याः कुम्भकोणस्थ-राजकीय-महाविद्यालय-संस्कृतपण्डिताः। ( २ ) श्रीमन्तः पंडित वीरेश्वर तर्कतीर्थ महोदयाः वर्द्धमानस्थविजय-चतुष्पाठी प्रधानाध्यक्षाः। ( ३ ) श्रीमन्तः पं०

माधवशास्त्रिभण्डारीमहोदयाः लवपुरीय ओरियण्टलकालेजस्थ संस्कृतप्रधानाध्यापकाः। (४) रायबहादुर नरसिंहाचारी महोदया रिटायर डायरेक्टर, आर्ट कालेज मैसोर। एते महोदया महामहोपाध्यायोपाधिनाऽलंकृताः, इति धन्यवादार्हाः।

काशीस्थाः श्रीमन्तो धन्वन्तरिकल्पाः पीयूषपाणयः श्रीत्र्यम्बकशास्त्रिमहोदयाश्च 'वैद्यरत्न' इत्युपाधिना विभूषिताः। अयमुपाधिर्हि नेमान् पण्डितधुरीणान् विभूषयति प्रत्युत उपाधिरेवायमिमान् सम्प्राप्य विभूषित इति अस्माकीना धारणा। बहुभि र्वर्षैरियं काशी नगरी विद्वत्केन्द्रायमाणापि समुचितविद्वद्गुणपूजक-महामहोपाध्यायोपाधिना विरहितैव दृश्यते। इहत्यः शासकप्रतिनिधिरस्मिन् विषये कथमुदास्ते इत्यस्माकमाश्चर्य्यविषयः।

---

## आत्मनिवेदनम्।

सूर्य्योदयोऽयं नववर्षतः प्रतिमासं नियमतः स्वग्राहकानुग्राहकाणां सेवायां समुपसर्पति। अत्र लेखाः सरलाः सर्वच्छात्रोपयोगिनः साहित्यिकाः सामाजिका धार्मिकाश्च भवन्ति। कस्यापि व्यक्तिगताक्षेपकरा लेखा न गृह्यन्ते। कविता अपि प्रसादगुणगुम्फिता भावपूर्णाः स्वल्पकलेवरा एव गृह्यन्ते।

अतश्च लेखकमहोदया अभ्यर्थ्यन्ते यत्ते सुस्पष्टाक्षरान् विशदभावान् विरलपंक्तिकान् कर्गजस्य वामभागे किञ्चित्स्थानं त्यक्त्वा एकस्मिन्नेव पृष्ठे लिखित्वा लेखान् सम्प्रेषितुमनुकम्पन्ताम्। बहवो महाशयास्तु उभयतः पृष्ठस्य लिखन्ति। अस्पष्टाक्षरैः कठिनवन्धै र्घनपंक्तिकैर्लेखैरस्मानतिदुःखयन्ति। तेष्वेव कस्यचन लेखो न प्रकाश्यते। येन स महात्मा पौनःपुन्येनास्मानधिक्षिपति। यदि कदाचित् दैववशतः पत्रवाहकादिदोषात् सूर्य्योदयस्यानुपस्थिति श्चेत्तदा तत्र स्व-पत्र-वाहकमपृष्ट्वैव साक्षात् कार्य्यालयमेवाक्रोशन्ति। इतस्तु प्रतिमासं नियमतो मुद्रित-संकेतेभ्यः सर्वेभ्य एव पत्रं प्रहीयते। प्रेषणे तु कथमपि कदापि कापि त्रुटिर्भवितुमेव नार्हति। पत्राप्राप्तौ पत्रवाहका एवापराधिनो भवन्ति न कार्य्यालयः। तथापि केषाञ्चनेह निन्दा-पत्राणि अनुल्लिखितस्वसंकेतानि उत्तरार्थं चिटिका-विरहितानि एवायान्ति। येषामुत्तरदानेऽसमर्था वयं समधिक्षेपार्हा भवामः। अतः सर्वेभ्योऽपि सविनया अभ्यर्थनास्ति यन्नियमपालने सति न कस्यापि कोऽपि समुद्वेगो भविष्यतीति सर्वदा नियमपालनेऽवधानं देयमित्यस्माकमभ्यर्थना।

## संस्कृताध्यायिष्वपि धर्मश्रद्धाह्रासः।

—०ॐ०—

संयुक्तप्रान्तस्य पूर्वोत्तरभागे विहारप्रान्तस्य च पश्चिमोत्तरभागेऽस्मिन् शीतर्तौ—मया कार्य्यवशात् बहुषु संस्कृत-विद्यालयेषु पर्य्यटनमकारि। तत्र तत्र संस्कृताध्यायिवर्गे यद्दृष्टं तस्य सर्वस्यापि इतिवृत्तस्य वर्णनं विस्तृतमिति संक्षेपतः छात्राणामवधानीयं वर्णयामि। छात्राणां दिनचर्य्यैव सर्वतः समीचीना सम्पादनीयेति तत्रावधानं तेषामहमावर्तयामि। यदि ते तत्र अनेन मम संक्षिप्तलेखेन दत्तावधानाः स्युस्तदा तेषां बहुकल्याणं स्यादिति मे मतम्। तत्रेदमेव मया दृष्टं यद्दृष्ट्वा मम मनसि महानुद्वेगः समजनि। अपरन्तु पुनरपि कदाचित् सत्यवसरे कथयिष्यामि। अत्र मात्सर्य्यं द्वेषादिकञ्च विहाय मम वाक्यमवश्यं सर्वैः छात्रैः पठनीयमिति ममाग्रहः। ततो यदि हृदयग्राहि भवेत्तदा तद्गृहेलिमम् नोचेत्तुषवत्त्याज्यमिति।

पश्यन्तु—महामहिमशालिनः श्रीपरमेशितुरनुग्रहेणाद्यावधि दिव्यदृष्टिभिः परमकारुणिकैर्महर्षिभिः प्रचारिता धर्मपद्धतिरविच्छिन्नप्रसारेह भारते ब्राह्मणवर्गे तत्रापि च संस्कृताध्यायिषु समुपलभ्यमाना आसीत्। परन्तु सम्प्रति वैदेशिकविधर्मशासनप्रभावेण तत्रापि समासादितं ह्रासनं पाश्चात्यसभ्यतया। इदानीं भ्रमप्रमादालस्यादिभिः बहवोऽपि संस्कृताध्यायिनश्छात्राः पराभूता नानुतिष्ठन्ति स्वीयमाह्निकं कृत्यं यथाविधि।—

"ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम्
धर्मार्थकामौ स्वे काले यथाशक्ति न हापयेत्" (मनुः)
"ब्राह्मे मुहूर्ते तूत्तिष्ठेत् स्वस्थो रक्षार्थमायुषः" (वाग्भटः)

इत्यादिसदाचारविधिमवहेलयन्त एव मया प्रायशो दृष्टा ब्राह्मणाः। सन्ध्यावन्दनमपि यथानियमं नोपलब्धं मया ब्राह्मणवर्गे।

"उत्तमा तारकोपेता मध्यमा लुप्ततारका।
कनिष्ठा सूर्य्यसहिता प्रातः सन्ध्या प्रकीर्तिता॥"
उत्तमा सूर्य्यसहिता, मध्यमा लुप्तभास्करा।
कनिष्ठा तारकोपेता सायं सन्ध्या प्रकीर्तिता॥

इति नियमस्य पालकाः प्राचीना विद्वांस एव यत्र तत्रोपलब्धा न त्वाधुनिकाः संस्कृताध्यायिनो विद्यार्थिनो विद्वांसो वा। प्रातरुत्थाय उषःकालिकं स्नानं निर्वर्त्य सूर्य्यार्घं ददतो विरला एवोपलब्धाः संस्कृतच्छात्रा मया संस्कृतपाठालये।

यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ( वात्सायनः )

इति शास्त्रीवचस्तु श्रद्धामाधाय गुरुशुश्रूषापूर्वमध्ययनमिदानीं पाश्चात्य-शिक्षासरणिं दृष्ट्वा संस्कृताध्यायिनश्छात्रा अपि निःसंकोचं त्यजन्तीति मया-बहुत्र दृष्टम् ।

अस्माकं पूर्वजा महर्षयस्तु—

"गुरु-शुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थी नोपपद्यते ।"

इति नियमानुसारमेव विद्याध्ययने प्रवर्तन्तेस्म । येन तेषां विद्या सफला यशस्करी च भवतिस्म ।

अस्तु नाम सर्वमिदम् । सम्प्रति सर्वैरपि संस्कृतच्छात्रैः स्वे-स्वे कर्मणि सर्वथा संसक्तैः ब्रह्मचर्य्यपूर्वकं गुरुशुश्रूषारतैः सदाचारपरायणै यथाविधि विद्याध्ययनं विधाय पूर्ववत् पुनरपि ब्राह्मणगौरवं भारते प्रापणीयमित्येव ममाभिप्रायः ।

तच्च—"देशकालात्म-विज्ञानं सद्वृत्तस्यानुवर्तनम्" इति वाग्भटीयादेशानुरूपानुष्ठानेनैवासादयितुम्पार्य्यते । अतश्चाहं सर्व—प्रथमं संस्कृतच्छात्राने-तावदेवोपदिशामि यत् ते स्वाध्ययनं सर्वथा देशकालोपयुक्तं कुर्य्युः । येन ते सर्वत्र समाजे देशे, संसदि समादृता भूत्वा संस्कृतभाषाया ब्राह्मणवर्गस्य च सर्वाभ्यर्हितं मङ्गलं कर्तुमर्हा भवेयुः । स्वशिक्षाया देशकालोपयुक्तत्वं विधातुं तैः सर्वदा स्ववाक् शक्तिं परिवर्द्धयितुं प्रत्यष्टमि प्रतिप्रतिपदम् प्रतित्रयोदशि वा स्वविद्यालये विवादसभां प्रतिष्ठाप्य तत्र यथोचितं यथारीति च व्याख्यान-मभ्यस्येयुः । स्वमानसीं शक्तिश्च सम्वर्द्धयितुं सूर्य्योदय प्रभृति संस्कृत-समाचारपत्रादिकं पठेयुः । स्वशारीरिकीं शक्तिं सम्पादयितुं प्रातः काले सूर्य्योदयात् प्राक् स्नानादिकं विधाय सन्ध्यावन्दनं कृत्वा सूर्य्योपस्थानं कुर्वन्तः व्यायामादिकं समाचरेयुः, इत्यनेनैव शुभानुष्ठानेन अग्रे तेषां स्वत एव स्वाभ्युदयिकं सर्वमेवेतिवृत्तं विधातुं प्रवृत्तिर्भविष्यतीति न मया तत्र वक्तव्यं किञ्चिदस्ति । अधुनात्वेतावतैव विरमामि पुनः सत्यवसरेऽधिकं ।निवेदयिष्यामीति सन्तुष्यन्तु छात्राः संक्षेपेणैव ।

श्रीमतां चिरपरिचितः

# कलौ भक्तिः सारः।

लेखकः—श्रीशङ्करदत्तशर्म्मा विशारदः, भारद्वाजः।
( शुजाबादवास्तव्यः )

श्रीकृष्णचन्द्र ! मधुसूदन ! हे दयालो !
हे नन्दनन्दन ! विभो ! गरुडेन्द्र ! विष्णो !
भोः कंसनाशन ! मुरारिपदप्रवाच्य !
मह्यं कवित्व-सुख-रूप-वरं च देहि॥
"भक्ति प्रियो माधवः"

मुनिना मनुना मानवोद्धाराय यद्यपि मानवधर्माः स्व-शास्त्रे बहुधा कथिताः। दानधर्मश्च यद्यपि परमसुगमत्वात् कलियुगे नितरां फलजनकः, परं भगवद्भक्ति-धर्मस्तु सर्वानेव धर्मानतिशेते। भक्तिप्रभावाद्देवेन्द्रोऽप्यसुरान् पराजित्य निष्कण्टकं स्वराज्यमलभत। जलन्धरत्रस्ता देवा भक्ति-प्रभावेण स्वानि स्थानान्यलञ्चक्रुः। भक्तिमहिम्नैव मर्त्या अपि अमरत्वं प्रपद्यन्ते, तेषां नाम अद्यापि गायन्ति विद्वांसः। ते च सच्छास्त्रेष्वपि गीयन्ते। क्षत्रियस्याप्यम्बरीषस्य ब्राह्मणायाश्रयप्रदानम्, शूद्रभूतानामपि नामदेवादीनां जन्मान्तरे देवत्वप्राप्तिः, वेश्याया अपि देवीत्वलाभ इति सर्वं भक्ति-माहात्म्यमेव। कैवल्यमुक्तिरपि तत एव संभवितु मर्हति। तामेतां भक्ति प्रभाव-जनितामेवालौकिकीं शक्तिं समासाद्य भारतीयाऽप्राचीना महर्षयो जगद्गुरुत्वं प्रतिपेदिरे।

किं बहुना—भक्तिमार्गः सुकरः, नास्मिन् काऽपि हानिः संभवति। भगवद्भक्ति-मार्गमेवास्थाय नेत्रे निमील्योन्मील्य वा धावन्न स्खलति पुमान्, न वा कदापि पतति। यथा केनापि कश्चिदतिसमीचीनमतिसुगमं मार्गमानीतो जन उच्यते, मदुपदिष्टेनानेन मार्गेण नेत्र निमील्य सुखेनाभिद्रवन्नेव याहि, न कश्चिदपि ते संशय इति। धावने कदाचित् पतनमपि संभवितुं शक्यते, परं भक्तिमार्गे तु भजनधर्मस्याङ्गिनो विहितानामङ्गानां स्वल्पतराऽतिक्रमणे, बहुतरातिक्रमणे वा कर्ममार्ग इव न प्रत्यवायो भवितु मर्हतीत्यतऽफलादपि न भ्रश्यति मा। तत्रापि नेत्रे मुद्रयित्वेत्यनेन ज्ञात्वाप्यतिक्रमे न दोषः, किमुताऽज्ञात्वेति ज्ञापितम्।

केचन तु "योगेनैवात्ममुक्तिं मन्यन्ते" इत्यपि न, तत्र योगे—सिद्धय एव विघ्नाः—

"अन्तरायान्वदन्त्येतान् युञ्जतो योगमुत्तमम्"

इत्युक्तेः। अन्येषां मते-कर्मण्येव लाभः इत्यपि न, कर्मणि—यज्ञादौ तु यत्किंचित् संस्कारादिवैगुण्ये फलानुत्पत्ति भवति, यथाऽऽहुतौ "तिर्यक्स्रुवादिनापि अग्नये स्वाहेत्यत्र वह्नये स्वाहेत्युक्तौ, मंत्रादौ-स्वरादिवैगुण्येऽपि 'यथेन्द्रशत्रुः स्वरतोपराधात्, इत्युक्ते न सुगमता। अन्ये तपसा मुक्तिलाभं ब्रुवते इत्यपि न, तपसि तु-गर्वे सति विघ्नः—

"अधर्मांशै स्त्रयो भग्नाः स्मय-संग-मदै स्तव"

इत्युक्तेः तपः शौचं दयेति त्रयो धर्मपादा भग्ना भवन्ति। परे सांख्येनैव मुक्तिं मन्यन्ते, इत्यपि न सांख्येत्वीश्वराऽमननात्साहाय्याभाव एव विघ्नः—

"सर्वं वेदविरुद्धञ्च कपिलोऽन्यो जगादह"

अपरे वेदान्तिनः ज्ञानेनैवात्मलाभं मन्यन्ते इत्यपि निर्मूलम्, ज्ञाने तु भगवदपराध एव विघ्नः—

"जीवन्मुक्ता अपि पुनर्बन्धनं यान्ति कर्मभिः।
यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिनः"

इति वासनाभाष्योक्तेऽपि भगवत्परिशिष्टवचनात्।

"नानुव्रजति यो मोहाद् व्रजन्तं जगदीश्वरम्।
ज्ञानाग्निदग्धकर्मापि स भवेत् ब्रह्म-राक्षसः"।

इत्यादि महाभारतादिस्मरणाच्च। इतरे वैराग्ये मन्यन्ते मुक्ति मित्यपि न, वैराग्ये तु प्रसादाद्यग्रहणमेव विघ्नः, प्रसादाग्रहणं विष्णोः इति सेवापराधान्तर्गतत्वात् तदुक्तमभियुक्तैः।

"प्रापञ्चिकतया बुद्ध्या, हरेः सम्बन्धिवस्तुनः
मुमुक्षुभिः परित्यागे, वैराग्यं फल्गु कथ्यते"।

किमतिपल्लवितेन, भक्तिमार्गेऽस्मिन्नति सुखदे साधनदशायामपि फलप्राप्तिः। मार्गान्तरेषु तु साधनसमाप्तावेव। न च आरूढयोगिनामपि बहुभिर्जन्मभिरपि दुर्लभा भवति मुक्तिः, कथं नाम कीर्तनमात्रेणैकस्मिन्नेव जन्मनि भगवद्भक्तानां सा भवेदिति वाच्यम्, हरिं भजतः पुंसः प्रेमलक्षणा भक्तिः, परेशानुभवः गृहादिषु विरक्तिश्चेत्येष त्रिक एककालो भजनसमकाल एव भवति। यथा भुञ्जानस्य तुष्टिः, पुष्टिः क्षुन्निवृत्तिश्च प्रतिग्रासं भवन्ति।

एवमेकैकस्मिन भजने किञ्चित् प्रेमादि, त्रिके जायमानेऽनुवृत्त्या भजतः परम-प्रेमादि जायत एव ततश्च सुलभैव मुक्तिः। तथा च श्रीमद्भागवते कथितम् "भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः। प्रपद्यमानस्य यथाऽश्नतःस्युः तुष्टिः पुष्टिः क्षुदपायोऽनुघासम्।"

अयमाशयः—भक्तिः श्रवणकीर्तनादि परेशस्येष्टदेवस्य श्रीकृष्णस्य यदा भवेत् तदैव तदनुभवो माधुर्यास्वादोऽपि तदनुरूपो भवेत्तदैवान्यत्र मायिकसुखे विरक्तिरपि तदनुरूपा भवेदिति, त्रिकः त्रयो अवयवा यस्य स त्रिकः। अत्रेदमवधेयम्-किञ्चिन्मात्रभोजिनः किञ्चिन्मात्रैव तुष्टिः पुष्टिः क्षुदपायोऽपि तदनुरूप एव, बहु भुञ्जानस्य पूर्णा स्तुष्टिपुष्टिक्षुदपाया एव किञ्चिच्छ्रवणादिभजने किञ्चिन्मात्रे परेशानुभव-विरक्ती भवतः। बहुभजतस्तु संपूर्णा एव भक्तिपरेशानुभवविरक्तयः स्युः, किन्तु बहु-भोजिनस्तु भोजनाऽसामर्थ्यं भवति। बहु भजतस्तु भजने सामर्थ्यातिशयो भवतीति विशेषो द्रष्टव्यः। "इत्यच्युतांघ्रिं भजतोऽनुवृत्त्या, भक्तिर्विरक्तिर्भगवत्प्रबोधः। भवन्ति वै भागवतस्य राजंस्ततः परां शान्तिमुपैति साक्षात्" अर्थात् प्रीत्या भजतोऽनुभगवत्प्रबोधः, ततो भगवदपरोक्षज्ञानमनन्तरं पूर्वस्मादधिका संसार-विरक्तिरनन्तरं चाधिका भक्तिरित्येतानि भागवतस्य भवन्तीति यस्मात्तस्मात्ततोऽनन्तरं साक्षात्तुर्यावस्थालक्षणां परामुत्तमां शान्तिसंयोग्यां मुक्तिमुपैति, अतः सिद्धमेतत् यत्-भगवदाराधनमेवेहामुत्रसुखोपायो मुक्तिप्रकारश्चेति सावधानेन चेतसावधेयमिति।

---

## मातृ-वन्दनम्।

ले०— श्रीनोखेलालशर्मा, काव्यतीर्थः।

मातस्त्वदीयपदपङ्कजपुण्यरेणौ<br>
रज्येत चेन्मम मनोमधुपो दुरापे।<br>
सत्यं लभेय करुणावरुणालयेऽह-<br>
मानन्दसिन्धुरसमज्जनमन्तरङ्गम्॥ १॥

मातर्जगज्जननि, चेद्दयसे मदीये<br>
देहे दयापरवशारुणनेत्रकोणम्।<br>
किं नाम जीवितफलं विहितानुषङ्ग-

माविर्भवेन्नहि महामहिमानुरूपम् ॥ २ ॥
दीने सुते भवति मातृदया गरिष्ठे-
त्युक्तिर्यदीह प्रथिताऽवितथाऽस्ति लोके ।
दीनोऽप्यहं जननि, सर्वगुणैर्विहीनो
नाहं कथं कथय देवि तदानुकम्प्यः ॥ ३ ॥
फुल्लारविन्दनयने ! शयने दिवा वा ।
वाणीं निशाम्य करुणां निजवत्सलस्य ।
हित्वा पदं यदि तदैव न धावमाना
प्राप्नोषि हन्त, दयतां तव पुत्रकं कः ॥ ४ ॥
ईहे परं जननि ते करुणाश्रितायाः
माङ्गल्यभूद्दृशमनुग्रहकारिणीं यत् ।
मामम्ब पालय सदा दुरितं निरस्य
सर्वार्त्तिहृच्छरणमस्मि परं प्रपन्नः ॥ ५ ॥

---

# संस्कृतस्य कविरत्नद्वयम् ।

ले०—पं० कृष्णदत्त भारद्वाज शास्त्री एम० ए० ।

कविता परमेश्वरस्य दिव्यविभूतिरस्ति । यस्योपरि प्रभोरनल्पा कृपा भवति । स एव पुण्यात्मा दिव्यविभूतिमिमामाप्नोति । कवितायाः प्राणो रसोऽस्ति, यदुक्तमग्निपुराणे भगवता व्यासेन । "वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितमिति" । स च रसः परमात्मन आनन्दरूपो मन्यते यदनु श्रूयते "रसो वै सः रस ँ्ह्येवायं लब्ध्वानन्दी भवतीति, कवित्वं हि नाम पुंसां महत्पुण्यानां फलमस्ति । यदुक्तमभियुक्तैः "नरत्वं दुर्लभं लोके विद्यातत्र सुदुर्लभा । कवित्वं दुर्लभं तत्र शक्तिस्तत्रापि दुर्लभा" ॥

सर्वप्रथममियं कविपदवी "कविर्मनीषी परिभूः स्वयम्भूरित्यादि" श्रुतिषु ब्रह्मणः कृते निर्दिष्टाऽभूत् । तदनु वाल्मीकिव्यासभासकालिदासप्रभृतिषु कविषु रूढासती कविमात्रपर्यन्तमनुधावति । विद्वद्भिः कविरपि ब्रह्मैव मन्यते, ।

"लोकश्लोकविधात्रोर्ययोर्भिदा लेशमात्रेणेति ।
काव्यप्रकाशकारो वाग्देवतावतारो मम्मटस्तु" ।

"नियतिकृतनियमरहितामिति" कारिकया ब्रह्मसृष्टितोऽपि कविसृष्टिमु-

त्कृष्टां मन्यते। अस्तु। प्रकृतमनुसरामः। कविमध्ये एतेऽष्टौ गुणाः परमावश्यकाः।

"स्वास्थ्यं प्रतिभाभ्यासौ भक्तिर्विद्वत्कथा बहुश्रुतता।
स्मृतिदार्ढ्यमनिर्वेदो मातरोऽष्टौ कवित्वस्य" ॥

संस्कृतविदुषां मध्ये एको महान् दोषो वर्तते, यच्चे वर्तमानकवेरुत्कृष्टमपि काव्यं कदापि न प्रशंसन्ति येन स कविर्निरुत्साहो भूत्वा प्रयत्नहीनो भवति, संस्कृतसाहित्यस्यातो महती हानिर्भवति। अस्तु। अस्माकमयं संकेतोऽद्य तयोर्द्वयोः कविरत्नयोर्विषये विद्यते, यौ महात्मानौ सम्प्रति वर्तमानौ स्तः। एको विद्यावारिधिः पण्डिताखिलानन्दशर्मा कविरत्नम्, द्वितीयो विद्यासागरः पण्डितः छज्जूरामशास्त्री कविरत्नम्। तयोरखिलानन्दशर्मा, महोपदेशकोऽपि कविरपि चास्ति। साम्प्रतमेवैतैरेकं "सनाधनधर्म विजय", नामकं काव्यं लिखितं यत्परमोत्कृष्टं वर्तते। अद्यैषामवस्था पञ्चाशद्वर्षपरिमिता वर्तते। अनूपशहरपत्तने चैते वसन्ति। पण्डितः छज्जूरामशास्त्री न्याय-व्याकरण-साहित्य-दर्शनशास्त्राणामपि प्रकाण्डो विद्वान् कविरपि च। एतैरपि काव्ये-दुर्गाभ्युदयनाटकम्, साहित्ये साहित्यबिन्दुः, न्याये-न्यायसिद्धान्तमुक्तावल्या मूलचन्द्रिका टीका, व्याकरणे-सिद्धान्तकौमुदी टीका, दर्शने-न्यायसूत्रवृत्तिश्च विदधे। इमे सर्वेऽपि ग्रन्था अतीवोत्कृष्टा वर्तन्ते। एषामवस्था सम्प्रति चत्वारिंशद्वर्षपरिमिता वर्तते। परमपवित्रकुरुक्षेत्रमध्यवर्ति-रिटोलीग्रामवासिन इमे सन्ति। यथोपदेशकमण्डले-कविरत्नाखिलानन्दस्य महती प्रसिद्धिरस्ति, तथा पण्डितमण्डले पं० छज्जूरामशास्त्रिणः कविरत्नस्यापि महती ख्यातिरस्ति। द्वावपि चेमौ महात्मानौ सनातनधर्मस्य वर्णाश्रमधर्मस्य च पक्षपातिनो स्तः। द्वयोरप्यनयोर्महानुभावयोः कविता, अतीव सरसा मनोहारिणी च वर्तते। परमेतावान् विशेषः यत्पण्डिताखिलानन्दस्य कविता परं सरला पौराणिकी चास्ति। पं० छज्जूरामशास्त्रिणस्तु-पदेपदेऽनुप्रासवती साहित्यिकी च। यत्तैरपि सत्यमुक्तं दुर्गाभ्युदयनाटके—

"छज्जूरामकृतौ नैकः स श्लोकः परिदृश्यते।
अल्पाऽनल्पाऽथवाकाचिद्यत्र नैव चमत्कृतिः ॥
अनुप्रासिनि सन्दर्भे छज्जूरामसमोऽद्यकः।
पुराप्यासन्न चेदासन् द्वित्रा हरिहरादयः ॥

अनयोर्विशिष्टामालोचनां कदाचिदन्यदा प्रकाशयिष्यामः ॥

## वसन्तागमः ।

लेo—श्रीविनायकराव भट्टः ।

—o*o—

उद्यन्नव्यपलाशपुष्पललितां सोद्यानवन्यस्थलीं
कूजत्कोकिलचञ्चरीकनिकरै रम्यान् रसालद्रुमान् ॥
नृत्यन्मञ्जुसरोजपुञ्जितजलान्यभ्रं लसच्चन्द्रकं ।
लोके सर्वमिदं प्रकाममकरोत्कान्तो वसन्तागमः ॥

---

## आस्माकीनं विज्ञानम्

लेखकः—भट्ट द्वारकादत्तशास्त्री सु० का० म० वि० र० ।

—:o*o:—

साम्प्रतं विज्ञानमेव लक्ष्यीकृत्य निबध्नीमः । विज्ञानमिति शिक्षावाचकः शब्दः Education स चास्माकीनमिति भारतीयानां सङ्केतः । सम्प्रति भारतीयानां या शिक्षासरणिः दृष्टिगोचरमध्यास्ते, प्राचीना च या श्रुतिपथ मध्यारोहति, तयोऽकियदन्तरमित्येव प्रबध्नोमः ।

अधुना भारते भारतीयशिक्षायाऽकेन्द्राणि बहूनि भान्ति, यत्र तत्र चानेके धुरन्धराः विद्वांसोऽध्यापयन्ति, अध्यापिताश्च तं तं विषयं मनसि कृत्वा स्वकीयं लक्ष्यपथं स्वीकुर्वन्ति, पुनरपि, ये विशेष प्रतिभाशालिनः सन्ति, ते महामहोपाध्यायपदेन The title of Greatest Master of Education विभूष्यन्ते, पुनश्च, किमपि मुख्यस्थानमायत्तीकृत्य सन्तिष्ठन्ते । तेषां शिक्षा वेद्-वेदान्त-सांख्य-न्यायादिषु विषयेषु भवति, तस्मिन्नेतस्मिन्विषये च प्रौढाः जायन्ते, ते चेह किमपि काव्याख्यायिकानाटकादिकं निर्माय स्वं सफलयन्ति, न च ते तदुन्नेतारो भवन्ति । मया ये ये उपरितनाः विषयाः निर्दिष्टा स्तेष्वायुर्वेद-ज्योतिष-द्वयमपहाय सर्वेऽपि नीरसाः दृश्यन्ते ।

यथापूर्वं वेदः—अस्याध्ययनं केवलं स्वरसन्धानोच्चारणार्थ-ज्ञानाय भवति न तु तात्विक विषयायेति, पुनरपि न्यायस्य Logic पठनं । पञ्चतत्वाद्यतिरिक्तं कोऽपि पाठ्यविषयो न, यथा विदेशीय भाषायां The art of thinking and reasoning justly भवति । व्याकरणादि-विषयिणी शिक्षा न तु सर्वसाधारणफलदा । अवशिष्टौ ज्योतिषायुर्वेदौ तयोः शिक्षा समीचीना परन्तु

सङ्कुचिता, यत् पूर्वजै निर्धारितो वस्तुयोगस्तमेव तै रुपायैः कृत्वोपजीवन्ति, न तु समुन्नयन्ति—इत्येवं प्रकारा शिक्षाप्रणालिकार्वाचीना परिदृश्यते।

प्राचीना तु पथ्या, ये ये विषयाः श्रुतिगताः दृष्टिगताश्च वर्त्तन्ते, सर्वानपि सर्वे वर्णाः स्वानुरूपं पठन्तिस्म। अर्वाचीना तु ब्राह्मणेभ्यो हितकरा नतु सार्ववर्णिकी-इति कष्टतरम्—प्राक्कालिका तु सार्ववर्णिकी आसीत्। ते हि स्वोपयुक्तं वेद-वेदाङ्गं पठित्वा इतरेषु सन्निहितमतयो बभूवुः, तेनास्माकीनं विज्ञानं सर्वप्रजासु प्रसारितक्रमं शशुभे। आर्यदेशोऽपि जगद्गुरुः The master of the world जातः, न तु केवलमाध्यात्मिकं विषयमेव प्रधानतयोररी-कृत्य संतुतुषुः। "भारतोधर्मप्रधानदेशः" इत्यनेन न तु धार्मिक एव Religio-use worshiper परन्तु धार्मिकभावेऽपि परमप्रवीणः Religiouse riter इति ज्ञेयम्। देशो ऽयं लौकिकमेव सर्वं विषयं स्वीकृत्यनावतिष्ठते, परमलौ-किकमपि स्वायत्तीकृत्य प्रतिष्ठां लभते, इति वाक्यं मम। परन्तु हा भारतीयाः व्यावहारिकं सर्वमपि विषय मनादृत्य जीवनं यापयन्ति, लौकिकं स्वल्पमपि विषयं न स्वायत्तीकृत्य देशं समुन्नेतुं प्रयतन्ते, इति महत्परिदेवनम्। एत-स्मादेव भारतीयशिक्षायाः विक्षोभः प्रजासु च, तेन प्रत्येकं भारतीयश्छात्रः इङ्गलिशविद्यालये प्रविविक्षुः परिदृश्यते, भारतीयशिक्षायां कश्चिदपि व्याव-हारिको विषयो न, तेनात्रत्याः अपि भारतीं भाषां मृतभाषां Dead language कथयन्ति। नेति विज्ञेयं किल भारतीयशिक्षायां व्यावहारिकी शिक्षा न किन्तु तत्राध्ययनाध्यापनयोरभावः। कोऽयं व्यावहारिको विषयः इति वितर्के शिल्पशास्त्रं Science व्यापारशास्त्रं Commerce युद्धशिक्षा Education of warfare कृषिशास्त्रादीनि अनेकानि शास्त्राणि व्यावहारिकत्वेनोच्यन्ते प्रथन्ते च। उपवेदेषु ये ये लौकिकाः विषयास्तेते व्यावरिकाः। इङ्गलिश English पठनप्रणाल्यां सर्वेऽपि व्यावहारिकाः, एतस्मादेव छात्राणां तत्र प्रवृत्तिः, इतस्तु तेषां नितान्तमभावः, अनेन (रसोना संस्कृतभाषा) इति मन्यमानैः प्रणीयन्ते पण्डिताः न चाद्रियन्ते कथापुराणादिषु गीतं सर्वज्ञत्वमार्याणाम्। दुःखं-महद्-दुःखं भारते शिल्पकला-सङ्गीतकला-शस्त्रादिकलाविद्यालयो न वर्त्तते। ये केऽपि स्वंशज्ञास्ते तत्रैव रममाणाः प्रेदयन्ते न च गुञ्जामात्रमपि तं विषयं समुन्नेतुं प्रभवन्ति।

ततस्त्वन्यदेशीयाः विद्वांसः प्रतिपलं तं तं विषयं पूर्णशक्त्या समुत्थापयितुं प्रभवन्ति, अनेकविधानि च वस्तूनि आविष्कृत्य सुखाभोगाः भवन्ति। वयं

तु प्राणहीनाः महामूढाः कलाविहीनाः तानि क्रीत्वोपजीवामः आश्चर्य-भराश्च भवामः।

सर्वमप्येतत् शिक्षाह्रासफलमनुभवामः, यदि भारतीयानां न किमपि परिवर्त्तनं जातं, तदवश्यं समयान्तरे न किमपि भारतीयत्वमवशिष्यते-इति।

अत एव प्रार्थयामहे पण्डितान्, किल भवद्भिः विचार्यतां प्रसङ्गप्राप्तोऽयं प्रश्नः इति।

कर्णकुहरमध्यास्ते किल दरभङ्गावासिनः पण्डिताः नवीनां शिक्षाप्रणालीं परिवर्त्तयितुं कामयन्ते, प्रतीक्षामहे किल ते कीदृशीं व्यवस्थां व्यवस्थापयन्तीति॥

---

## वसन्तागमनम्।

(ले०—श्रीनाखेलाल शर्म्मा ठक्कुरः, काव्यतीर्थः।)

अथ गते शिशिरे हिमशीतले
ऽवनितले वनराजिविराजिनि।
अवततार भुवं नु दिदृक्षया
कुसुमचापधरानुगतो मधुः॥ १॥

वकुल-चम्पक-केसर-रेणुभि-
र्व्यतिषजन् गिरिनिर्झरशीकरैः।
अपहरन्तरुणीश्रमजालकम्
हिमलयो मलयो मरुदाववौ॥ २॥

कुसुमसौरभलोभसमापत-
न्मधुकरावलिगुञ्जनमञ्जुले।
मलयमारुतधूतवनावली-
तरुचये पिकगीरनुशुश्रुवे॥ ३॥

विगतशैत्यतयेह विलासयुग्
युवतयोः रशनाभरणक्षमाः।
अतिघने जघनेऽपघनेऽन्यतः
प्रणयिनोऽमदयन् समलङ्कृताः॥ ४॥

मदकलैः कलकोकिलकाकली
कलकलालिकुलाकलितासतैः।

सकलकेलिकलाकलने रतिं
प्रणयिनो विदधे ललनाजनः ॥ ५ ॥
नलिनषण्डनिलीनपतत्रिणि
विकचकुड्मलकेसरभासुरे।
सरसि सारससाररसोदितं
सरभसं सरसारसितं श्रुतम् ॥ ६ ॥
प्रणयिनीजनमानसरञ्जने
नवविलासिजनेन मनो दधे।
प्रमदयाऽपि निवारितलज्जया
रसमये समये मतिराहिता ॥ ७ ॥
द्रुमलताप्रसवैः श्रवणार्पितैः
प्रियतमोपहृतैर्मदनासवैः।
प्रमदया च समुन्मदया मधा-
वनुभवन्ति न केऽत्र महोत्सवम् ॥ ८ ॥
अलिकुलैर्मुखरैः प्रतिबोधितः
कलगिराऽन्यभृतोऽप्युपबृंहितः।
सुरभिणा मरुता च समेधितो
विरहिणो ववृधे विरहज्वरः ॥ ९ ॥
बोभुज्यतामुपहृतिं मधुनोपनीतां
पेपीयतां मधुरसानबलासहायः।
जेगीयतां विजयिनो विजयं स्मरस्य
इत्थं पिको निदिशतीव कुहूरवेण ॥ १० ॥

## सपरिहासं प्रणयोपालम्भः।

### ( वसन्तः )

ले० गोस्वामी हरिकृष्णशास्त्री नाथद्वारा, मेवाड़।

हंहो! कीदृशोऽयं मनोहरः समयः समागतः! अयि! पश्य प्रमदवनशोभाम्। अयि रसालमञ्जरि! विलोकय 'भृङ्गिकां' वापीतटनिवासान् वारिजवनविलासान्। अयि पश्य 'कोकिलके'! सहसैव समागता सहाकारनिवहे मञ्जु-

मञ्जरी। अयि 'कुसुमकलिके'! देहि दृष्टिं सर्वतः समुद्भूताः कुसुमकलिकाः। अयि? त्वमपि सम्भालय 'मधुपिके'! चञ्चत्पक्षपुटो मधुपानलोलुपो मधुपः सरभसं मधुपिकामनुवर्तते। अयि 'किं शुके'? कीदृशानि रम्याणि शुकतुण्ड-भ्रमजनकानि किंशुककुसुमानि। अयि! कस्येदं वैभवम्? अहो प्रकृतिमधुरं मधुरञ्जितभ्रमद्भ्रमरम्। अयि! सर्वा एकीभूय सम्मानयेम सद्योजातकुसुम समृद्धिमहोत्सवम्। इयमेव, अस्माभिः पूजिता, अधिदेवता पूरयन्ती सकल-मनोरथानपनयिष्यति विरहसन्तापम्। अयि! अयि! पश्यत कोऽयं युवराज-चिन्हानि दधल्ललितललितः समभिमुख मायाति सपरिकरः। ? अहो? अय-न्त्वस्माकं मनोरथभूमिः स एव युवराजो महाराजेन कुसुमायुधेन प्रहितः स्वाभि-लषितानि पूरयितुं समायाति लज्जितहंसगत्या गत्येति प्रतिभाति। उत्तिष्ठन्तु सर्वाः, क्रियतां स्वागतं स्वभाग्यस्य। उत्थाय सानन्दं अयि भगवन्! कुसुमा-युधसेनापते? मानिनीमानविमर्दन! एहि, आगच्छ, स्वागतं ते सवियोगि-जनजीवोपहारम्। नाथ! कथ मनाथिनीरस्मान् पुनः स्मृतवान्? अपि कुशलं प्रोषितपतिकाप्राणपुष्टस्य ते? स्वच्छन्दं विहरता भवता कथमिवाद्य विस्मृत एष पन्थाः? या मनुनेतुकामः परित्यक्तसकलवामः सहसा वाम इव, विहाया-स्मान् वर्षवरं ग्रीष्मं प्रमुखीकृत्य गतवान् भवान्, सा खल्वास्माकीना प्रियसखी त्वत्प्रणयपरिपोषिता अपि प्रसन्ना? अहो सापि साम्प्रतमसमद्धिधैव जाता। मन्यामहे भावित्वत्समागमसुखाशयैव जीविष्यतीति। अहो तत्प्रणयपाशबद्ध एव तदाप्रभृति यावदद्यतन-सौभाग्य मस्मद्भाग्यभूमौ पदमपि रक्षितुं न प्रभु-र्भवाञ्जातः।

अनुमिनुमो वयं, तत्प्रेयसीदर्शनात्प्रभृति परवान् भवान् निजशरीरस्यापि प्रभुर्न भवेदिति। अहो धन्यैव सा, या भवन्मनो मराल-मरालकुन्तला, निज लावण्य-मानस-सरसि रमयति। प्रशस्ता खलु तस्या भाग्यवत्ता, भवताऽपि या प्राणैः समं धार्यते। हन्त, किमनेन भवच्चरणाम्बुजचञ्चरीकेण किङ्करीजनेन।

नाथ! भवदनुकम्पां नाथमाना श्चिरमनाथाः सम्प्रति सनाथाः किमु?। दयालो! क्षणञ्चेद्दया दीयेत, अस्ति किञ्चिद्रहस्यं विज्ञापनीयम्। देव! कुतः इयं दीक्षाऽऽदत्ता भवता, यत्किल मधुरमधुरेण समालापेन सम्मोहयन् प्रणय-पाशेन निगडय्य विविधकुसुमविकास-विलास-लालसया प्रलोभ्य सुमध्यमा मनांसि स्वानुनय-पदवीं नयसि।

अहो धन्योऽयं त्वदनुचरः परिकरः। प्रकाशयत्यय मपि स्वपठनपाटवम्। भगवन्नवलोकय स्वपरिजनपाण्डित्यम्—यथा—एष मधुरकरनिकरोपि सरससुम-

गेन वीणानुवादेन, स्वकलनिनादेन मानमहोदधिमुद्वेलयन्तमपिमानिनीमानस मुन्मादयन्नयति परवशताम् ।

अयमपि रसालमञ्जरी रसास्वादनकलकण्ठः कोकिलगणः कलयति निज-काकलीकलकलेन कामुक–कामिनीकदम्बे कोटिकामकलाविलासान् । अहो अयमपि तव मन्त्रिमुख्यो मलयमारुतो मदयति महिलामनांसि मञ्जुलमदन-महोत्सवाय । उत्तालयति च तरुणीतनुलताम्, नर्तयति च नलिनी निचयम्, नन्दयति च नारीसहचरं नरवरम्, उद्वेजयति च वियोगवायुसखविप्लुष्टवि-ग्रहान्, उद्वेलयति च विविधविभाववारिधिम्, विकचयति च वारिजवनम् ।

किम्बहुना, अहो–अय मपि प्रतिनिशं रजनीनायकः सरोजिनीं नायिकां नयति निलीनताम्, तारापरिवृढोऽपि तरुणीतारुण्यतोयनिधितरणिं तनीयसी-मपि ताम्यति तन्वीतनुतल्लजाम् ! हन्त–अयं सुधाकरोऽपि स्वकरनिकरेणोद्गि-रति विषह्यविषधारां पथिकपूरेषु, धवलितधरातलोऽपि धूसरयति धरणीं विर-हिणी नयनधाराधरैः । अहो-कियद्गुणगणान् गायामो गौरवगोष्ठीगरिष्ठस्य । सर्वथा वन्दनीयं ते परिकरपादयुगलम् ।

कृपालो ! कृपय करुणास्पदं कामिनीजनम् । कथयामः कर्णोपकण्ठं कामपि कारुण्यकथाम् । प्रभो ! पृच्छामः पादयोः प्रणतिपुरःसरं प्रणयिनीप्रणयपरि-पालन-पद्धतिम् । दयानिधे ? । देहि दयादृशं दयनीयाय दुर्दैवाय दासीज-नाय । मञ्जुलमते ? कियन्मासानन्तरं मिलितो महानुभावः ? । सौजन्यसुधा-सागर ! स्वत्स्नेहस्रोतस्वतीं स्वसुहृत्सखीं सदयं सानुनयं सम्मानयता भवता कियान् समयः संयापितः ? प्राणनाथ ! केन वा पाठितोऽयं प्रीतिपाठः ?-यद्भवान् वर्षवरैः सह सर्वदैव विहरति । नानुरञ्जयति क्षणमपि चिरमुत्कण्ठितां कृपा-काङ्क्षिणीं कामपि कामिनीम् । कथय कीदृशोऽयं ते कृपाकलापः ? कथमिव कल्याणकरः काम्येत कलुषितकलेवरेण कोपकषायितायताक्षेण कामिनीकदम्बेन ? । देव! त्वमेव वद किमपराद्धं भगवत्या पीनपयोधरया सुधाधराधरया नवाम्बुदा-म्बरया हरितीकृतधरातलया कूजत्केकीकलया, पूरितभुवनवलयया मोदितमनुजमा-नसनिलयया जनितलतानवदलया अङ्कुरितकुसुमकलया, सकलजनतोषिण्या यवस-म्पत्तिमोषिण्या मञ्जुलघोषिण्या सस्यसम्पत्पोषिण्या मनोमालिन्यमर्षिण्या लोक-लोचनहर्षिण्या सकलर्तुसौभाग्यकर्षिण्या, उत्पादितनवसृष्ट्या "वृष्ट्या" नाम्न्या पुण्यधाम्न्या। तामपि वराङ्गिनीं किञ्चित्कालं समाश्वास्य सकृदेव समुत्सृष्टवान्।

पुनश्च यथाकथञ्चित्, सेवमानः सानुनयं प्रार्थ्यमानः प्रियसखीं प्रेर्य्य-माणो दैवेन, देवीं शरद मनुरञ्जितवान् ! सापि मूर्तिमन्तं स्वमनोरथमिव भवन्तं

मन्यमाना मुहुर्मुहुः प्रार्थनया सदयं समागतं सर्वथाभिमतं सततं तथैवानुवर्तमानं ज्ञात्वैव चिरविरहविधुरा गतप्राणमिवागतं भवन्तं प्राप्य सपदि नवैव भूत्वा प्रसन्नवदना नवयौवने पदमर्पितवती ।

एवञ्च सकलकामिलोकनायकस्य कुसुमसायकस्य युवराजपदभाजं मोदितमनुजसमाजं यौवराज्याभिषिक्तं निजभाग्यसंवृक्तं परिकरसनाथं स्वनाथं श्रीमन्तं प्राप्य स्वयमपि तदनुकूलं युवराजमहिषी-चिन्हानि धृतवती । अति प्रसन्नतया हर्षोद्गारेण अनवरुद्धहासा, हासोल्लासेनैव धवलित ( धवलीकृत ) सकलभूतला, तेनैव च विकासितैः सितैः काशैः समुद्धूतसहस्रचामरै विराजमाना मल्लिका-मालतीप्रभृतिनिजचरणसेविकाभिः समलङ्कृता-कुरबक-कुरण्टकाद्यनेकवर्षवरै रुपसेवमाना विविधवल्ली वितानपरिमण्डिता नाना महोत्सवविरचनपण्डिता, अखण्डिता नायिकेव स्वानुकूलं नायकं भवन्तमनुरञ्जयन्ती नवनवोल्लासं दर्शयन्ती स्वसपत्नीभूतवर्षाजन्यमलीमसमपनयन्ती दिव्याम्बरामनोहरा समस्तसस्यपरिपाकपोषितपरिजना शुभलक्षणा त्वत्समागमसुखवासरान् क्षणमिव तर्कयन्ती भवत्पादपद्मपरागरागेण स्वात्मानं रञ्जयन्ती त्वद्वदनारविन्दमकरन्दमिलिन्दायमाना सम्पादितसकलयाना प्रतिक्षणं त्वद्दर्शनमेव वाञ्छितवती त्वदङ्कमेवाश्रितवती भवत्कृतसुखा परिजनप्रमुखा त्वदभिमुखी सुमुखी त्वय्येवानुरक्ता सकृदेव परित्यक्ता भवता । हन्त दुर्भाग्यम् ।

पुनः कञ्चुककेलिलालसो भवाञ्जातः । अन्यथा किमपकृतमनया वराकिन्या विलासिन्या शरदा, यां भवान् परित्यक्तवान्निर्विचारम् ।

प्रथमन्तु यथा कथञ्चिद् दुर्विनीतो ग्रीष्मो भगवत्या वृष्ट्या समवसारितः । भवतापि स तत्प्रभावेण तत्सम्मानाय वा लोकलज्जयाऽथवा न पुनरायत्तीकृतः । परञ्च किं क्रियतेऽस्माभि र्भवन्मनोवृत्तये । अहो पुनर्वारधाणवाणविद्धो भवान् । किम्भो ! स्त्रियस्तु त्वामनुरञ्जयन्ति, त्वमपि तास्वनुरक्त इति दूरमास्तां तास्तु-सपत्न्य एव, परञ्चैते त्वां कथं केन वा प्रकारेण कया वा मुद्रयाऽनुरञ्जयन्ति, किमेतेषु चिन्हमवलोक्य भवाननुरक्तः ? अहो साश्चर्यं हास्यास्पदमेतत्, धन्या इमे, कथनेऽप्येतस्य लज्जावनतमुख्यो भवामः ।

पुरात्वेक एव ग्रीष्म आसीत्, साम्प्रतन्तु द्वौ हेमन्त-शिशिरौ स्तः । इहहमध्यगतो भवान् पृष्ठे भागे त्वेतौ, मध्यस्थः श्रीमान् अग्रे च पुनः स एव ग्रीष्ममहोदयः । सङ्गतमेतत् शीतार्तो ग्रीष्ममेव स्पृहयति, तथैव भवान् हेमन्त-शिशिरालिङ्गितगात्रः पृष्ठे संलग्नाभ्यामुभाभ्यामुद्वेजितो वाऽग्रेसरं ग्रीष्ममेवशरणी करोति ।

हंहो-ऋतुनायक ! मन्यामहे वयं सर्वेषामस्माकं नायकौ भवानिति, श्रुतश्च स्वस्वकाले सर्वत्रर्तुधर्मः समायाति, तथैव वर्षा शरदश्चानुसरति स एव, तयोःस्त्रीभावत्वात्, ऋतुधर्मे च सम्प्राप्ते भवानपि समनुगच्छत्युभावेवेति सम्यक्, शास्त्रसम्मतोऽयं धर्मः। किन्तु पुल्लिङ्गेषु ग्रीष्म-हेमन्त-शिशिरेष्वपि समायाति किमृतुधर्मः ? यतो भवन्तं तत्पृष्ठसंलग्नमेव पश्यामो वयम ।

अहो—नवीनैव ते पद्धतिः, विलक्षणस्ते सदाचारः, अचिन्त्यः खलु त्वत्प्रभावः, विचित्रं ते तपोबलम्, अविचारणीया कार्यप्रणाली, दुर्लक्ष्यास्त्वन्मनोवृत्तयः, किमवशिष्यते साम्प्रतं कथनीयम् ? भवतु किमनेन ।

देव ! अस्माकीनाप्यचिन्तनीयैव दशा, किमात्मकथाकथनेन, कथनन्तु केवलं स्वार्थपरतामेव प्रकटयति, किन्नावलोक्यतेऽस्मदीया परिस्थितिः श्रीमता । नास्ति कश्चन श्रवणविषयो यं वयं वदिष्यामः, तन्तु सुखं वा दुःखं वा वयमेव जानीमो नान्यः स्वात्मानं विहाय। कान्त ! किं कथयामः, भवद्विरहे-विहायास्मान् गतवति च भवति-समनुसरति वा ग्रीष्ममहोदयं, त्वद्विरहानलप्लुष्टदेहाः यथा कथञ्चित्त्वत्सम्बन्धिनीभिरेव वार्ताभिर्दिवसं समाप्य, गतवति चास्ताचलं भगवति मरीचिमालिनि, स्वानुरागेणैव रक्तीकृते च वरुणदिगङ्गनामुखे, स्वसपत्नीसङ्गतं स्वकान्तं विलोक्य कलुषितकलेवरायामिव जातायां पुरुहूतपुरभूतायां प्राच्याम्, श्रितवति च स्व-स्व-निकायं शुकादिगणे, समुदिते च रजनीमण्डने दिवसद्युतिखण्डने तारासनाथे कुमुदिनीनाथे, साम्राज्यपदमलङ्कुर्वति च राकाकामुके, निजचन्द्रिकयावदातीकृते च भुवनतले, विकासयति च कुमुदवने, विधुरयति च कोकयुगले, दलयति च प्रोषितपतिकाहृदयपटले चन्दयति च चकोरचेतसि, वयमपि भवद्वदनारविन्दसादृश्यदर्शनकाङ्क्षया प्रासादशिखरमधिश्रित्य सुधाकरमण्डलाभिमुख्यः श्रीमद्वदनभ्रान्त्या, 'नायं चन्द्रः किन्तु प्रियतमवदनारविन्दमिदम्, अत एतस्माद्विगलन्मधुराधरमधुधारया पुष्टा भविष्याम इति प्रतिनिशं सेवमानो निजसुधास्राविकरनिकरव्यपदेशेन, अलर्कं मिवोद्गिरन्न हरतिस्म, अस्मत्तनुपुष्टिताम्। अत एवाऽद्यापि पश्य पूर्णः पुष्टः प्रतिभाति सोऽयं पार्वणश्चन्द्रः ।

देव ! सत्यं वदामोऽनेनैवापहृताऽस्मत्तनुपुष्टिः, नाथ ! अत एवास्माकं तनुतां गतास्तनवः। प्राणनाथ ! अतिदुर्विनीतोऽयं दुराचारः, किं कथयामोऽस्य दुश्चेष्टितम्। नयनाञ्जन ! निशिनिशि शयानानां विरहपाण्डुरकपोलफलकानि, कथङ्कारमुद्रसनानि जघनयुगलानि, विरहकातरतया पुनः पुनर्विलुण्ठनेनापगतपरिधानं श्रेणीतटं, विगतकञ्चुकानि च वक्षोजयुगलानि, वातायन-

द्वारेणागत्य स्वकरनिकरेण दृढमामृशन् सकचस्पर्शमस्मानभिभर्त्सयति स्म । इति साम्प्रतं तर्जनीयोऽयं नृशंसकर्मा भवता ।

हृदयेश—ग्रीष्मे तु सद्योजातेन वियोगेन यथाकथञ्चित्तस्य बालभावतया वा अनभ्यस्तपाटवेन वा सुदुःसहेन विह्वलाः मलयज-घनसार-नलिनीदल-मृणालिकानिचय-कदलीवल्कलरस-तुषारपट्टिका-शीततरोदकधाराभिर्नवनवाभिः सयत्नमानीताभिः कथं कथमपि तानि दिनानि व्यनैष्म । एवमेव समागते च वर्षाकाले-अविरलबहुतरधाराधरवारिधाराधूसरदिनान्यपि, अभिनवस्नेहसम्भार भारायिताभिरिव परितो विलम्बिनीभि र्नयननीरधाराभि र्द्विगुणीकृतानि कथङ्कारं त्वयं नीतानि सर्वाभिरस्माभिरित्यनुभववर मेवैतत् । तथैव शरदि च स्वसखीसुखानि स्मारं स्मारं येन केनोपायेन व्यपनीतास्ते दिवसाः, हेमन्त-शिशिर मासेषु तु बहुलीकृतैरपि तैरेव साधनैरन्यैर्वा यथालब्धैः प्रतिसवनं तत्प्रतीकाराय प्रयतमाना दासदास्योऽस्मच्छरीरोष्मसन्तप्ताः परितः परिवेष्टितार्द्रवसननिचया अपि न समर्थाः स्थातु मस्मत्सविधे । किं न विलोक्यन्ते भवता समनुभूत-तादृशसुखाः शुष्कगात्रयष्टयस्तन्व्यः । प्राणनाथ ! बहुकालतो विरहविधुराणां नः सम्प्रत्येव जाताः सफला मनोरथाः । जातोऽद्य पुण्यपरिपाकः । लब्धं सुकृत-फलं, मिलितश्च सन्तापान्तमद्यैव । जीवनेश ! पुनरप्येवन्तु नाचरिष्यति चरितम् ? नवा जनयिष्यति तादृशं सन्तापम् ? । वद, किमेवं मौनमाचर्य्यते भवता ; अहो ...हा ...पुनरप्येवंविधाभिलाषा भवन्मनसि । भवतु नाम किम-स्मास्वधीनम् ।

प्रणयिन् ! तदाप्रभृति कदापि न स्मृतवान् भवानस्मान् ! न पुनरागत्य दर्शनं दत्तं सकृदपि दीनदासीजनाय । न श्रावितः समाचारः, नालोकितो लोकाचारः, न स्मृतः स्नेहः, नाऽऽकलिता करुणा, न प्रेषितं पत्रं, नाऽऽदत्त मुदन्त जातम । न पालितः प्रणयः, नाकर्णितोऽस्मद्विनयः, नानुरञ्जितो जनः । अहो...इयमेव प्रणय-परिपाटी ? इयमेवाऽधिगता शिक्षा ? इदमेव सुहृत्प्रेम ? इदमेव प्रणयिनीप्रेमपरिपालनम् ? एष एव पन्थाः प्रेमिणाम् ? इदमेव सोपानं स्नेहस्य ? एषैव पद्धतिः पुरातनी ? अयमेव कुलधर्मः ? इदमेव च धर्माचरणम् ? इयमेव स्नेहस्येयत्ता दम्पत्योः ? इयमेव पण्डितानां परिपाटी ? इदमेव प्राग-ल्भ्यम् ? इदमेव विजयिनां वीरत्वम् ? इदमेव कृतीनां कृत्यम् ? । अस्तु, आ... किमाचर्य्यतेऽस्माभिरनार्याभिः । अलमनधिकारचेष्टया । क्रियतां यत्कर्तव्यम्, यथारोचते प्रेमिणे । नाथ ! पुनश्चापल्यवशात्प्रार्थयामहे न पुनरेकपदे विहाय चिरं वियोगानलेन सन्तापनीयाः किङ्कर्य्यः । नाद्यारभ्य सोढुं समर्था स्तादृशं

सन्तापम्। अद्यपर्यन्तमपि यथा तथा त्वद्दर्शनाशयैव जीविता आसन्। न, इतोऽग्रे त्वदालोकनं विना जीविष्यामः। पराधीनाः प्राणास्त्वत्पादपद्म-पोषिताः कथं त्वद्दृते स्थास्यन्ति, अतः पूर्वापरमालोच्यैव सर्वं विधेयम्। इतोऽग्रे देव एव प्रमाणम्, किम्बहुना जल्पितेनेति शम्॥

---

## वसन्तः।



लें०— बालकविः श्रीजानकीवल्लभशर्मा "हृदयेशः"।

अयि सखि! शीतो वहति समीरः। "ध्रुवम्"
मन्दं मन्दं क्षणमयि क्षीणो भवति क्षणे च सुवीरः,
अयि सखि शीतो वहति समीरः॥ १॥
नव नव किसलय कलित सुविटपो भाति वने सहकारः
क्वचन प्रदेशे वक्ति कोकिलो ललितः क्वचन च कीरः;
अयि सखि! शीतो वहति समीरः॥ २॥
गुंजति मंजुलमधुपः क्वचन तु हिन्दोलनं वितनुते-
सखीजनेन समं श्रुतिधीरः धीरं धीरं धीरः;
अयि सखि! शीतो वहति समीरः॥ ३॥
सरसि पयसि मनसि च मनसिजसुहृदिव विलसति हि वसन्तः
गायति गीतं परितो हरितो "हृदयेशः" कविहीरः
अयि सखि! शीतो वहति समीरः॥ ४॥

---

## "लावण्यलहरी"।

लें०श्रीजानकी वल्लभ शर्मणः। हृदयेशस्य।

वसन्ते वासन्तीललित-लतिकाऽऽमोदमुदिता
कलालापैर्युक्ता परभृतवधूनां च मधुरैः;
निकुंजे गुंजद्भिर्मधुपनिकरैः कूजिततटा
अये! मन्दं मन्दं वहति नव-लावण्य-लहरी।

---

# वसन्त पंचमी ।

ले०—श्रीमुरलीधरठाकुरः ।

—:◎:—

स्वस्त्यस्तु ते हि ऋतुराज वसन्त साधो
तेऽभ्यर्हणे प्रकृति रेव समुद्यताऽस्ति ।
सर्वत्र कोकिलगणा हि कुहूस्वरेणा-
त्युच्चैस्त्वदीयविरुदावलि मालपन्ति ॥ १ ॥
चूतः प्रसारितकरस्तव सेवनाय
सद्यः प्रसूतविमलामलमञ्जरीकः ।
सेवाविलक्षणपटुः सुरभिप्रदाने
गुञ्जन्मधुव्रतवरैरभिवन्द्यमानः ॥ २ ॥
या मल्लिका तव वियोगनिशान्तशीला
संप्रार्थिताप्यलिकुलैरपि नोद्गताऽऽसीत् ।
सा ते पदार्पणमहोत्सव रञ्जनाय
चालिङ्गते प्रियमिवागतभर्तृकात्वम् ॥ ३ ॥
वायुस्तवाध्वजनितश्रमवारणाय
मन्दं प्रवाति मलयानिलसंगतेन ।
सार्थी करोति च मुदं प्रमदाजनानां
कान्तातिसङ्गजनिता लसलालसानाम् ॥ ४ ॥
औदार्य-सौर्य-गुणगौरवशालिनस्ते
सत्संगतिं समभिगम्य रतिद्वितीयः ।
सज्जीकरोति मदनो धनुषि स्वबाणा-
नाहर्तुमेव विरहाकुलमानसानि ॥ ५ ॥
एनेन पूर्वमभिगम्य तवाति सङ्गं
धैर्यच्युति स्त्रिदशदेवपतेरकारि ।
किं तर्हि चित्तभवभूति विलासिनां हि
चेतांसि पुष्पसदृशानि हि मानवानाम् ॥ ६ ॥
धन्या वयं तव शुभागमसेवनेन
तृप्ताः स्म ते गुणचयैः प्रकृतिप्रसूतैः ।
देवो भवान् भगवता हरिणा विसृष्टो
लोकोपकारकरणाय ततोऽर्थयामः ॥ ७ ॥
शान्तिं प्रयच्छ ऋतुराज हरौजसैतान्
क्लेशप्रवाहजटिलान् खलु भारतेऽस्मिन् ।
वृद्धिं विधेहि जनसंसदि चैकमत्यं
संपादयाशु सकलान् हि सुखीकुरुष्व ॥ ८ ॥

———

अतश्च व्यष्टिरूपेण पृथक् पृथक् प्रतिब्रह्माण्डं सृष्टिस्थिति-प्रलया अपेक्ष्यन्ते । ततश्च प्रतिब्रह्माण्डं सृष्ट्यै स्रष्टु र्ब्रह्मणो गुप्त्यै गोप्तु विष्णोः संहृत्यै संहर्तुः श्रीरुद्रस्यापि ईश्वरत्वेन स्थितिरावश्यकी ।

ब्रह्माण्डदेहवत् पिण्डदेहो ( जीवदेह इति यावत् ) नश्वर एव गण्यते । जीवो हि संसारे समुत्पन्नः स्वकृतशुक्लकृष्णकर्मफलं भुञ्जानो निधनमुपैति । जीवपिण्डश्च त्रिधा भिद्यते इत्युक्तं प्राक् । तथाहि—उद्भिज्ज-स्वेदजादयः सहज-पिण्डवाच्याः, मनुष्यदेहाश्च मानवपिण्डाख्याः, देवदेहाश्च देवपिण्डसंज्ञका इमे त्रयोऽपि जीवाः स्व-स्व-कर्मफलभोगोपरामे विलीना एव भवन्तीति स्वभाव-सिद्धो मार्गः । स्मृतिषु स्फुटमुदीर्य्यते—

> यदिदं दृश्यते किञ्चिज्जगत्स्थावरजङ्गमम् ।
> पुनः संक्षिप्यते सर्व्वं जगत्प्राप्ते युगक्षये ॥
> अस्मिन् महामोहमये कटाहे,
> सूर्य्याऽग्निना रात्रिदिवेन्धनेन ।
> मासर्त्तुदर्व्वीपरिघट्टनेन,
> भूतानि कालः पचतीति वार्त्ता ॥

एतद्धि जीवानां नश्वरत्वम् यथोक्तमुपवर्णितम् ॥ ५ ॥

सृष्टिसम्बन्धतो जीवस्वरूपमुच्यते—

**चिज्जडग्रन्थिर्जीवः ॥ ६ ॥**

चिच्च जडं च ते तथोक्ते तयोर्ग्रन्थिः सम्बन्धो जीव इत्यभिधीयते इति सूत्रार्थः ।

जडस्य चेतनस्य च सम्बन्ध एव जीवशब्दभाग् भवति । प्रकृतिपुरुषयोः शृङ्गारद्वारोत्पन्नायां सृष्टिलीलायां द्वौ प्रवाहौ समुपलभ्येते । तत्रोर्ध्वगामी चेतनप्रवाहः । अधोगामी च जडप्रवाह इति । प्रकृतेश्चाञ्चल्यमेव सृष्टि-धारायाः कारणमिति यावदत्र धारायां किमपि तत्त्वं तिष्ठति तावत्तदनेनैव नियमेन परिवर्तमानं तिष्ठति । ततश्च चेतनस्य जडस्य वेह धारायाम् उन्नताव-नते अवस्थे गती वा स्वतःसिद्धे इति निर्विवादं सिध्यति नाणुरिह सन्देहः । उदाहरणतो यथा अनन्तयोनिषु परिभ्रमन् जीव ऊर्ध्वगामिनीं चेतनधारामा-श्रित्य क्रमश उन्नतिमधिगच्छन् तस्याः परां काष्ठां मुक्तिमभ्यासादयति । तदानीं तदन्तर्गतो जडांशः प्रकृतिधारायां विलीनो भवति । चेतनात्मिकाया धारायाः परा काष्ठा ब्रह्मभावो विद्यते, यत्र च प्रकृतेः पृथक् सत्ता ब्रह्मणि सच्चिदानन्दा-त्मके एव विलीना विराजते ।

इति सिद्धान्तानुरूपं चेतनप्रवाहो हि प्रकृते रजस्तमोराज्यमतिक्रम्य सत्त्वसाम्राज्ये समुपस्थित उन्नतेश्चरमावस्थायां प्रकृतेस्त्रिगुणात्मकं राज्यं परित्यज्य व्यापिकायां चेतनसत्तायां विलीनो भवति। यथा हि जीवन्मुक्तस्य महापुरुषस्यान्तःकरणम्। तदीयान्तःकरणवर्तिनी चेतनसत्ता पूर्णं विकासमासाद्य प्रकृतेरवच्छेदं परिजिहासमाना व्यापके चेतने विलीना भवति। अपरतश्चाधोगामिन्याः प्रकृते र्जडात्मिकाया अंशो जडदेहो मृत्योरनन्तरम् चेतनसत्ताभावात् क्रमशो ह्रासमापद्यमानो विनश्यति। यां प्राणशक्तिमाश्रित्य देहान्तर्गताः परमाणवः संघीभूय शरीरमूर्तं निर्मितवन्त इदानीं त एव परमाणवस्तां प्राणात्मिकां शक्तिं विना स्वीयामाकर्षणशक्तिं परित्यजन्तो विकर्षणशक्तिपरिशीलिनो भवन्ति। यतश्च ते परस्परं विच्छिन्ना भवन्ति। जडप्रकृतिश्चैवं परमाणुसंत्रविच्छेदादधोगामिनी स्वभावादेव तमोऽभिमुखी सम्पद्यते।

प्रकृतिश्च परिणामिनी चञ्चलेत्युक्तं प्रागेव। ततश्च उपर्य्युक्तश्चेतनप्रवाहस्तु क्रमोन्नत्या सत्त्वराज्यमप्यतिक्रम्य त्रिगुणात्मिकायाः प्रकृतिमातु र्धाराम-प्यतिवाह्य परिणामशून्यः स्थिरः सम्पद्यते। किन्तु जडप्रवाहो नियतपरिणामिन्याः प्रकृतेः सदैवाभ्यन्तर्लीनत्वात्तदधीनत्वाच्च न कदापि परिणामशून्यः स्थिरो भवितुमर्हति। उदाहरणतो यथा जडात्मिकायाः प्रकृतेश्चरमसीमस्थाः प्रस्तरादयो जडपदार्थाः तमोगुणस्य परां काष्ठां बिभ्रति।

यथा च सामुद्रतरङ्गो घातप्रत्याघातपरम्परया तीरे समागत्य प्रतिहन्यमानवेगः पुनस्तीरतः प्रतिनिवृत्य समुद्र एव परावर्त्तते। तथैव प्रकृतेः निम्नगामी प्रवाहोऽपि क्रमशो निम्नतामासादयन् तमोगुणस्य परां काष्ठामाश्रित्याग्रे वर्द्धितुं स्थानमनासाद्य पुनस्ततस्तमोगुणात्प्रतिनिवृत्य रजोगुणाभिमुखो भवति। फलतो जडभावाच्चेतनभावाभिमुखो निसर्गत एव प्रवहति। सम्प्रति तमःप्रवाहात् रजःप्रवाहाभिमुखं प्रतिनिवृत्तस्य तस्य प्राकृतिकस्य प्रवाहस्य कियतीमुन्नतिमप्यधिगतस्य तमोबहुलां मलिनतामपसार्य्य कियानपि स्वच्छभावः समेधते।

यथा हि सूर्य्यदेवस्य सर्वत्रैव रश्मिच्छटाविस्तारेऽपि मलिनो मुकुरः प्रतिबिम्बं ग्रहीतुमसमर्थ एव भवति। यदा च तस्य मालिन्यं व्यपगच्छति तदैव तत्र व्यापकस्य तस्य भगवतः सूर्य्यदेवस्य प्रतिबिम्बं पतति, तथैव सर्वव्यापकस्यापि विभोरात्मनः चित्सत्तायाः सर्वत्र साम्येऽपि तामसिकस्य प्रकृतिप्रवाहस्य मालिन्यात्तत्रोक्तसत्ताया नैव भवति विकाशः। यदा च परिवर्तनधाराया

नियमानुसारम् प्राकृतिकः प्रवाहस्तमोगुणस्य परां काष्ठामासाद्य ततः प्रतिनिवृत्तः स्वल्पमपि स्वाच्छ्यमौन्नत्यञ्चासादयति, तदैव तत्र स्वच्छे सूक्ष्मे च प्राकृतिके केन्द्रे व्यापकः परमात्मा प्रतिबिम्बितो भवतीति संक्षेपतो विवृतः चिज्जडग्रन्थिरूपस्य जीवस्य स्वरूपविकासः ।

यद्यपि च शास्त्रेषु—

"ममैवांशो जीवलोके जीवभूतः सनातनः"

"अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्
जीवभूतां महाबाहो ययेदं धार्यते जगत्"

"केशाग्रशतभागस्य शतधा कल्पितस्य च
जीवो भागः स विज्ञेयः स चानन्त्याय कल्पते"

इत्थं क्वचन अंशरूपेण, कुत्रचित् प्रकृतिशब्देन, कुहचन विभिन्न-परमाणु-परिमाणेन जीवशब्दव्याख्यानं श्रूयते । यतश्चापाततो सिद्धान्तेनानेन विरोधः प्रतिभाति । वस्तुतस्तु सुदृढपर्य्यालोचनायां नास्ति कोऽपि पूर्वोक्त-सिद्धान्ते-नैषां वचसां विरोधावमर्शः । तथा हि—

अन्तःकरणे जीवात्मनो यदा प्रथमविकाशो भवति तदाऽविद्यान्धकारेण आच्छन्ने तस्मिंस्तमोमयेऽन्तःकरणे तस्यात्मज्योतिष ईदृशतारल्येन प्रतिफलनं भवति, यत्तदानीं तत् चिदाभासशब्देन आहोस्वित् चित्प्रतिबिम्बनाम्नैव व्यवहर्तुं शक्यते नान्ययाऽभिधया । ततश्च तदेव ज्योतिः प्रकृतिराज्ये जीवो-त्तया सह क्रमशोऽविद्यान्धकारेण विमुच्यमानं स्वज्ञानमयीं प्रभामयीं च छटां विस्तार्य ईदृशं स्वरूपं परिमार्जयति यद् ज्ञानराज्ये विचरणशीलैः साधकैस्तस्य व्यापक-चिन्मयस्वरूपेण सार्धम् अंशांशिभावरूपमेव प्रत्यक्षीक्रियते । भगवता वेदव्यासेनापि वेदान्तदर्शने इत्थमेव स्पष्टीकृतोऽयं विषयः—

"अंशो नाना व्यपदेशात्"

यथा हि विभु व्योम एकं सदपि घट-मठाद्युपाधिभेदेन घटाकाशो मठाकाश इत्यादि नाना संज्ञां भजते वस्तुतस्तु महाकाशेन सह नास्ति तेषां घटमठ-जलाकाशादीनां कोऽपि भेदः, तथैवान्तःकरणोपाधियोगादेकमेव शुद्धं बुद्धं महदपि ब्रह्म नानात्वमेत्याशुद्धाबुद्धाणुत्वादि-कल्पितभावनया जीवतां गतम-वलोक्यते—

उक्तञ्च श्रीशङ्करभगवत्पूज्यपादैः—

अजमपि जनियोगं प्रापदैश्वर्ययोगा-
दगति च गतिमत्तां प्रापदेकं ह्यनेकम् ।

विविधविषयधर्मग्राहि मुग्धेक्षणानां
प्रणतभयविहन्तृ ब्रह्म यत्तन्नतोऽस्मि ॥

अन्येनापि केनचन—

स्वाज्ञानकल्पितजगत्परमेश्वरत्व-
जीवत्वभेद-कलुषीकृतभूमभावा ।
स्वाभाविकस्वमहिमस्थितिरस्तदोषा
प्रत्यक्चिति विजयते भुवनैकयोनिः ॥

अनेन चैतदेव सिध्यति यदुपाधिरहितस्य परमात्मन उपाधिसम्बन्धादंशादिकल्पना शास्त्रेष्ववलोक्यते या च नास्मत्सिद्धान्तविरुद्धा ।

प्रकृतिशब्देनापि जीवावमर्शस्येदमेव तात्पर्यं यत् जीवो हि उपाधिवशात् प्रकृत्यधीनो विद्यते । ईश्वरस्तु प्रकृतेरधीश्वरः । जीवे तु प्रकृतेरेव सर्वथा प्राधान्यमिति प्रकृति-स्वरूप-शब्देन तदुपादानं नानुचितम् । वस्तुतस्तु जीवो न प्रकृतिः नापि प्रकृतिस्वरूपः किन्तु तद्वत्प्रतीयत इति द्योतयितुमेव तच्छब्दोपादानम् । यत्र च अंशांशिभाव-कल्पना तत्र कीदृक्परिमाणः स इत्याकाङ्क्षायां केशाग्रशतभागकल्पना । फलतः सूक्ष्मातिसूक्ष्मोऽणुः स नेन्द्रियप्रतीतिगोचर इति तात्पर्य्यम् ।

"एषोऽणुरात्मा" इति ।

श्रुत्याप्युदीरितम् । इत्यतश्चेदमेव सिध्यति यदिदं प्रतिविम्बमेव जगति जीवशब्दाभिधेयं भवति । प्रकृतेः परिणामो यदा तमःप्रवाहात्सत्त्वाभिमुखो भवति तदैव प्रथमसम्पर्कावस्थायां सा ग्रन्थिरुत्पद्यते या जीवसंज्ञामग्रे लभते इति।

तत्र च प्रकृति-पुरुषात्मके भगवल्लीलाविलासेऽस्मिन् प्रपञ्चे उद्भिदः प्रथमयोनौ ग्रन्थिरियमारभ्यते । यथोक्तं स्मृतिग्रन्थे—

अविद्यायान्तु यत् किञ्चत् प्रतिविम्बं नगाधिप !
तदेव जीवसंज्ञं स्यात्सुख-दुःखाश्रयात् पुनः । इति ।

अयं हि सूक्ष्मातिसूक्ष्मः प्रकृत्यंशो यत्रात्मनः प्रतिविम्बमवभासते कारण-शरीर-शब्देन दर्शनग्रन्थेष्वभिधीयते । पश्चाच्चैवं प्रकृतिसम्बन्धभाजो जीवात्मन इच्छानुरूपं सूक्ष्मशरीरमुत्पद्यते । सूक्ष्मशरीरगतसंस्कारसमूहानां तीव्र-वेगानुकूलं स्थूलं शरीरमुत्पद्यते । इत्थं हि त्रिभिः शरीरैस्तद्गतभोगादिभिश्च बद्धो जीव उद्भिज्ज-स्वेदजाण्डज-जरायुजादियोनिमतिवाहयन्नन्ते च मानव-योनिमासाद्य कृतकृत्यो नन्दति ।

एतासां योनीनां संख्याक्रमोऽपि स्मृतिषु स्फुटमुपलभ्यते । तथाहि—

स्थावरे लक्षविंशत्यो जलजं नवलक्षकम् ।
कृमिजं रुद्रलक्षञ्च पक्षिजं दशलक्षकम् ॥
पश्वादीनां लक्षत्रिंशच्चतुर्लक्षञ्च वानरे ।
ततो हि मानुषा जाताः कुत्सितादेर्द्विलक्षकम् ॥

ततश्चोत्तरोत्तरमुत्तमोत्तमं मानवपिण्डमासाद्य क्रमशो मुक्तौ समेधमान ईश्वरप्रसादात्तदनुग्रहभाग्भवति । अन्यतश्च दैव्यां सृष्टौ दैवस्य पिण्डस्य येऽनेके भेदाः सन्ति ते पृथगेव ।

मनुष्येतरा याश्चतस्रो भूतसंघयोनयः सन्ति, ता हि केवलं स्वाभाविकस्यैव संस्कारस्याश्रयीभूताः । अतस्ताः सर्वा अपि क्रमश ऊर्ध्वगामिन्यस्तथैव कुत्सितमनुष्ययोनिरपि बुद्ध्यहंकारविकाशस्याल्पीयस्त्वात् क्रमोर्ध्वगामिन्येव गीयते । इत्यत एवासां योनीनां संख्या-परिमाणन्तु ऋषिभिस्तत्तत्प्रवाहसंयमं कृत्वा निर्णीतं विद्यते । किन्तु उन्नतमानवयोनिगतो जीवः प्रकृतिपरित्यक्तः स्वाधीनो भूत्वा स्व-स्व-पृथक्संस्काराधीन एव भवति । येन च क्रमोर्ध्वगतिं परित्यज्य स्वस्वकर्मानुसारं कदाचिदुन्नतो भवति कदाचनावनत एव भवति । इत्थञ्च विभिन्नां कुटिलां सरलामनृजुं गतिमासादयति । इत्यत एव मनुष्ययोनेः संख्यानिर्णयो नैव भवति । अस्मादेव हेतो र्मानवपिण्डानां देवपिण्डानाञ्च श्रेण्यवस्था अधिकारसंख्या च न शास्त्रेषु समुपवर्णितोपलभ्यते । केवलं चतुर्विधानामुद्भिज्जादिभूतसंघानामेव संख्योपलब्धिर्दृश्यते । इदं हि जीवभावविकाशस्य क्रमाभिव्यक्तिविज्ञानस्य च सारमयं संक्षिप्तं रहस्यम् । इदमेव जीवविज्ञानस्य चिज्जडग्रन्थिरूपस्य च निगूढं तत्त्वमिति विरम्यते विस्तराद् ॥ ६ ॥

कदा जीवमुक्तिर्भवतीत्याह—

**तद्भेदनादुभयमुक्तिः ॥ ७ ॥**

तस्या ग्रन्थे र्भेदनात् विच्छेदनात् उभयोश्चिज्जडयोर्द्वयोरेव मुक्तिर्मोक्षः परस्पर-बन्धनाद् भवतीति सूत्रार्थः ।

यया चिज्जडयोर्ग्रन्थ्या जीवोत्पत्तिर्भवति तस्या एव ग्रन्थेर्विच्छेदेन चितो जडस्य चोभयोरेव परस्परग्रन्थिविमोकात्मको मोक्षो भवतीति श्रीमता महर्षिणा कपिलेनापि सांख्यदर्शनेऽयमेव भावो निदर्शितः—

"विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य"

विवेकवशात् पुरुषोऽपि निजबन्धाद् विमुक्तो भवति । प्रकृतिरपि स्वार्थात्

पुरुषभोजयितृत्वस्वरूपादुपरता भवति। इत्थं हि उभावपि निजार्थ-साधनपरौ परस्परं वियुज्येते। इत्युभयोरियमवस्था मुक्ति-शब्दवाच्या भवति। इत्थं हि विज्ञानस्यास्य परिपोषाय योगदर्शनेऽप्युक्तम्—

"पुरुषार्थमुख्यानां गुणानां प्रतिप्रसवः कैवल्यं
स्वरूपप्रतिष्ठा वा चिच्छक्तिरिति" ॥

उद्भिज्जयोनिमारभ्य मनुष्ययोनिं विहायान्यत्र सर्वत्रापि योनिषु जीवो निर्बाधं क्रमोन्नतिमासादयन् समेधमानः संसारयात्रां निर्वाहयति। यतो हि मनुष्येतरयोनौ निजबुद्धेस्तमश्छन्नत्वाज्जीवः स्वतन्त्रकार्यकर्त्तृत्वाभावात् स्वतन्त्रसंस्कारं नार्जयति। केवलं महामाया प्रकृतिमातैव स्वाङ्के पोषयति, यथा माता स्वशिशून् निजक्रोडे पोषयन्ती उन्नमयति, तथैव सापि प्रकृतिस्तानबोधान् जीवान् निजस्वाभाविकसंस्कारैरेवोन्नमयन्ती पोषयति। न ते स्वात्मना कियतोऽपि संस्कारान् समर्जयन्ति तदधीना एव तिष्ठन्तः क्रमशस्तत्स्वाभाविकसंस्कारैरेवाग्रे सम्बर्द्धन्ते।

नद्यां प्रवहन् काष्ठचयः स्रोतोवेगेन तत्स्रोतोऽनुकूलमेवाग्रे प्रसर्पन्ननायासमेव समुद्राभिमुखमुपैति, तथैव मनुष्ययोनीतरयोनिगा जीवा प्रकृतेरूर्ध्वगामिनं प्रवाहमाश्रित्य उद्भिज्जात्स्वेदजं तस्माच्चाण्डजं ततश्च जरायुजान्तर्गतनिकृष्टपशुयोनिमुत्कृष्टपशुयोनिमेवं विविधयोनीः परिभ्रमन्तः क्रमशो वर्द्धन्ते। तदानीं च जीवानां क्रमोन्नतिः प्रकृतिमातुरेवाधीनतया निर्बाधमेव प्रचलति। यदा च जीवा मनुष्ययोनिं प्राप्नुवन्ति तदा तेषु पञ्चकोशानां यथेष्टविकाशात् बुद्धेरहङ्कारस्य च पूर्णो विकाशो जायते। ततश्च मनुष्ययोनिगा जीवाः प्रकृतेः स्वामित्वमधिगच्छन्तस्तदधीनतां परिजहति। एवञ्च मनुष्ययोनावागत्य जीवाः प्रथमतः प्राप्तं प्रकृतेरधीनत्वं त्यजन्तः स्वतन्त्रा भवन्ति। प्रकृतिरपि स्वोत्तरदायित्वं विहाय मनुष्यजीवेष्वेव तदुत्तरदायित्वमर्पयति। इत्थं हि मानवः स्वयमेव स्वोत्तरदायित्वं स्वाधीनं करोति। यतश्चेत आरभ्य तस्मिन् धर्माधर्मार्जनादि–भारमापतति। इयदेव नास्ति, इतोऽधिकमपि स्मृतिषूपलभ्यते—

मानुषेषु महाराज धर्माधर्मौ प्रवर्ततः।
न तथान्येषु भूतेषु मनुष्यरहितेष्विह।
उपभोगैरपि त्यक्तं नात्मानं सादयेन्नरः।
चाण्डालत्वेऽपि मानुष्यं सर्वथा तात शोभनम्।
इयं हि योनिः प्रथमा यां प्राप्य जगतीपते।

आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः।

मनुष्ययोनौ कर्म कर्तुं जीवः स्वाधीनो भवति। अतश्च शोभन-पुरुषार्थ-द्वारा क्रमशः स्वोन्नतिं विदधत् परमपदं निःश्रेयसमप्यधिगन्तुमर्हति। अन्यथा गर्हितपुरुषार्थद्वारा क्रमशोऽवनतिमाचरन् नीचयोनावपि गन्तुमर्हति। अत एव मनुष्य-जन्मनोऽभ्यर्हितत्वम् सर्वत्र श्रुतिस्मृतिपुराणादिशास्त्रेष्वभिहितम्।

इत्थं हि मनुष्ययोनौ समागत्य श्रेष्ठाधिकारभागपि जीवः स्वशरीराधिपतित्वादिन्द्रियाणाञ्चाधिकारप्राबल्यात्तदधीनो भूत्वा निरर्गलो भवति। तथा च—

"अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्र-नियन्तृतम्"।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः।

इति स्वौद्धत्याच्छास्त्रमर्य्यादामवमत्य प्रवर्तमानस्ततो निम्नयोनिमप्यनुसरति। अद्यावधि यो हि प्राकृतिक ऊर्ध्वगामी प्रवाहस्तमुद्भिज्जयोनितः पशुयोनिपर्य्यन्तमेव नहि किन्तु मानवयोनिं यावदानीय प्रापितवान् तमेवेहागत्यावजानाति स तेनैव सह प्रकृतेर्मातुः क्रोडस्थलमपि विहाय स्वच्छन्दः स्वाधीनो भूत्वाऽग्रेसरणक्रमं त्यक्त्वाऽधोगन्तुमप्युद्यतो भवति। इदानीमेव धर्मस्तस्य मानवस्य सहायको भूत्वा विविधाधिकारिभेदादिमार्गेण तं विरुद्धगतिमन्तं बह्वनर्थगर्तपातादवरुणद्धि। पुनश्च मार्गे समानीय तमुन्नतिसोपानमारोहयन् गन्तव्यदेशम्प्रापयतीति भवति सम्प्रति धर्माधर्मविवेकप्रयोजनम्। इत्यतो हि मानवयोनिगजीवानां कृते वर्णाश्रमधर्मादिमर्य्यादाया अवश्यमनुष्ठानमापतति। नो चेदीदृशे घोरे भयङ्करे व्यतिकरे समुपस्थिते स्वस्यानियन्तृत्वादिन्द्रियाश्वानाञ्च दुर्दमनीयत्वात् मार्गस्य च बह्वनर्थकर-गर्तपङ्कविषमोच्चावचादित्वात्-हिंस्रजन्तु-निषेवितत्वाच्च क्वापेत्य स पुनः पतेदिति विमर्शनेनापि वेपतेऽन्तःकरणम् सुधियां दीर्घचक्षुषां शास्त्रानुष्ठानपरायणानां तद्रहस्यवेदिनाम्। उक्तं च स्मृत्यादिशास्त्रेषु—

उन्नतिं निखिला जीवा धर्मेणैव क्रमादिह।
विदधानाः सावधाना लभन्तेऽन्ते परं पदम्॥
यावच्च प्रकृतिं देवीं समाश्रित्य व्रजन्ति ते।
न तत्रास्ति भयं किञ्चित्पातशङ्का न काचन॥
यथा मातुः शिशुः शेते क्रोडायां निर्भयोऽनिशम्।
न कापि भीति र्बालस्य तत्रास्ते नापि कर्तृता॥
सर्वन्तु जननी भारं वहत्येव निराकुला।

# सूर्योदयः ।

नवमे वर्षे } फाल्गुनस्य पूर्णिमा सं० १९६० { नवम-संख्या

## सम्पादकीया अभिप्रायाः ।

### शिवरात्रिव्रतम् ।

रात्रिः शिवा काचन सन्निधत्ते
विलोचने जाग्रत मप्रमत्ते
समान-धर्मा युवयोः सकाशे
सखा भविष्यत्यचिरेण कश्चित् ।

शिवरात्रिव्रतं हि महाव्रतेषु गण्यते । तत्र तन्निदानं किमिति विचारणायां महर्षिप्रकल्पितव्रतप्रभावं ज्ञातुं नाधुना प्रामादिका जीवाः समर्था इति दृढाऽस्माकं धारणा । पश्यन्तु व्रतमिदं फाल्गुनकृष्णचतुर्दश्यामायाति । यत्र चन्द्रमस एकैव कलाऽवशिष्यते चतुर्दशापि कलाः प्रलीना भूत्वा तिष्ठन्ति । शिवशक्तिरेव च प्रलयङ्करी कथ्यते । अत एवास्मिन् व्रते शिवपूजा भवति । तत्रापि जागरणेन मोहात्मकस्य तमसोऽपवारणं क्रियते । येन न वयं मोहनिमग्ना भूत्वा अकाण्डे प्रलीना भवामः । तत्र जागरणस्येदमेव विज्ञानं विद्यते यन्महानिशायां चेतनाशक्ति जागृतैव तिष्ठेत् । नैव सापि महानिशयाभिभूता स्यादिति । अत एव जागरणजन्यं बहुफलं धर्मशास्त्रेपूपनिबद्धं विद्यते इति शिवरात्रिव्रतस्याध्यात्मिकं रूपम् ।

आधिदैविकन्तु सर्वत्रैव पुराणादिषु प्रतिपादितं विद्यते । यदद्य भगवतः शिवस्याराधनया मानवा अक्षय्यं पुण्यमुपार्जयन्ति । स्कन्दपुराणे बह्व्यः कथा अपि वर्णिता विद्यन्ते । यतो ज्ञायते यदियं महारात्रिर्मानवानां कृते महादेवशक्तिसमाराधनाय कल्पलतावत्कामधुगस्ति । उक्तञ्च भागवते ।

मायामेतां समाश्रित्य सोऽहं गुणमयीं द्विज ।
सृजन्नवन्हरन्नेवं दध्रे संज्ञां क्रियोचिताम् ।

इति परमात्मनः संहारात्मिकायाः शक्तेः समर्चनं महानिशायामस्यां समुचितमेवेति शिवरात्रिव्रतस्याधिदैवं स्वरूपम् ।

सर्वेषां देवानामवताराणाञ्च आविर्भावदिने महोत्सवो भवति, तस्मिन्नेव दिने व्रतमपि विहितं विद्यते । परन्तु शिवपार्वत्यो विवाहमहोत्सवोऽयं गण्यते । तत्र दाम्पत्यप्रेम्णः सर्वातिशयो विकाशः स्फुटमुपलभ्यते । उक्तञ्चकेनापि कविना—

"परस्परतपःसम्पत्-फलायितपरस्परौ,
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ।" इति ।

शिवपुराणीयां कथां सर्वेऽपि धार्मिका जानन्त्येव । यद् दक्ष-प्रजापतियज्ञे शिवापमानमसहमाना सती देवी स्वदेहं ज्वलने जुहाव । ततश्च-वियोगमसहमानो भगवान् शिवोऽपि प्रेमविह्वलो भूत्वा उन्मत्तवत् सतीशवं स्कन्धे समुद्वहन् सर्वामपि भारतभुवं बभ्राम । ततश्च भगवता विष्णुना भगवतः शिवस्येमां प्रेम-विमुग्धां दशां परामृशता स्वसुदर्शनचक्रेण सतीशवं खण्डशः कृत्वा यत्र तत्र प्रदेशे पातयाञ्चक्रे । यत्र यदङ्गं पपात अतश्चाधुनाऽपि सती-देव्यास्तत्तदङ्गनाम्ना तेषां प्रदेशानामभिधानं विद्यते । संकल्पे गौरीपीठे' 'गौरीपादे' इत्यादि शब्दैः तदेव स्थानं परामृश्यते । ततश्च पुनर्जन्म लब्ध्वा-पार्वती देवी तपश्चर्यां कृत्वा शिवमेव वृतवती । शिवोऽपि भगवांस्तस्याः सती-देव्याः पुनः प्राप्तये हिमगिरौ तपश्चकारेति कथा प्रसिद्धैव ।

किम्बहुना दिव्यदम्पत्योरनयोः परस्परमेतावान् प्रेमातिरेकोऽस्ति, यदर्ध-नारीश्वरो भगवान् शिवोऽभिधीयते । यस्यार्द्धमङ्गं पार्वती देवी अर्धञ्च स स्वयमस्तीति । स एव परस्परप्रेमातिरेकभावो लौकिकेष्वपि गार्हस्थ्य-धर्मपरेषु स्त्रीपुरुषेष्वपेद्यते एतदर्थमेव विवाहोत्सवोऽयं सर्वैः सम्मान्यते इत्या-धिभौतिको भावोऽस्य महाव्रतस्य ज्ञेयः । इममेवाधिभौतिकमपि भावमाश्रित्य यदि मानवाः दम्पतिप्रेम विस्तारयेयुश्चेत्तेषां गृहं स्वर्गतुल्यं स्यात् । यतो हि यथा च दिव्यदम्पत्योः शिवपार्वत्योः प्रेमातिशयोऽस्ति स एव प्रेमातिरेकः सर्वैः परस्परं पालितश्चेत्तदा यथा भगवतः शिवस्य कुटुम्बे परस्परविरुद्ध-प्रकृतिकानामपि वृषभ-सिंह-मूषक-सर्प-मयूरादीनां परस्परं सामञ्जस्यमेवास्ति तथैव तेषामपि गृहे कुटुम्बेषु परस्परमधिकं दृढं सामञ्जस्यं स्यादित्यादि बहु फलकं शिवरात्रिव्रतं विद्यते । यन्महिमानं सनातनधर्ममर्मज्ञास्तद्विज्ञानवेत्तार एवावगच्छन्ति । इह संक्षिप्तलेखात्मके स्थाने तद्रहस्य-विस्तारोऽसम्भावीति विरम्यते विस्तराद् ।

## व्यवस्थापरिषदि स्त्रीणामधिकारव्यवस्थापनम्।

सम्प्रति सर्वतोऽपि स्वातन्त्र्यप्रसारावसरे स्त्रीणां स्वातन्त्र्य-प्रदानाया-काशपातालमेकीकुर्वन्तः पाश्चात्यशिक्षया विकृतमस्तिष्का जना भारतीय-संस्कृतिविलोपेनैव स्त्रीणामवस्थासुधारं मन्यन्ते। ते वराका अज्ञानवशात्पाश्चात्यानां गार्हस्थ्य-सुखाभावं पाशवप्रवृत्तिरूपं बहिस्त एव रमणीयमन्तस्तले नारकीय-कष्टतोऽप्यधिकं वराकीणामबलानां दुःखन्त्ववगच्छन्ति एव नहि। अयि भो अज्ञानिनोऽन्धानुकरणप्रिया अज्ञात-भारतीयसभ्यतारहस्याः! किं भवन्तोऽवगच्छन्ति? यद्भारतीयानामबलानां सुखस्य लेशमपि न विन्दन्ति पाश्चात्या उच्छृङ्खलप्रवृत्तयो नार्य्य इति। तास्तु स्वपरिणेतुर्वशीकरणार्थं बहुना प्रकारेण स्वात्मनो विभूषणे एव दिनं यापयन्ति। स्वयमपि कार्य्यालया-दिषु भृत्यकर्मादिकं विधाय स्वपोषणं कुर्वन्ति। सम्बन्ध-विच्छेदभयाच्च सर्वथा वेपमाना एव तिष्ठन्ति। पुरुषा अपि तेषामुच्छृङ्खलत्वनिवारणे एव सयत्ना विविधप्रलोभनोपायप्रयोगव्यापृता दुःखमयं जीवनं यापयन्ति। नास्ति तेषां गार्हस्थ्यसुखलेशलाभोऽपीति। इह भारते वर्षे तु नार्य्यो गृहलक्ष्मी गृहस्वा-मिनीत्यादि पदैर्विभूषिताः सन्ति। वस्तुतो गृहस्य सर्वस्वं तासामेवाधीनं तिष्ठति। ता हि गृहे सर्वमपि कार्य्यं कर्तुमकर्तुमन्यथा वा कर्तुमीशा भवन्ति। मन्वादयो भारतीय-सभ्यतानियमनिर्मातारः प्राक्तना व्यवस्थापकाश्च तादृश-मेवाधिकारं तासां समर्थयन्ति स्म। तथाहि—

> पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा
> पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥ ३।५५ ॥
> तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः।
> भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ॥ ३।६९ ॥ मनुः
> 'अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्
> शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य वेक्षणे ॥ ११ ॥ मनुः

पश्यन्तु भारतीय-सभ्यतायां स्त्रीणां समादरणं। तासां हि पूजां कर्तु-मप्यत्या व्यवस्थापकाः समुदाहरन्ते। परन्तु साम्प्रतिका मानवाः पाश्चात्य-वाक्य-विकथचमत्कृताः तासां स्वातन्त्र्यं तस्मिन्नेव कर्मणि समभिलषन्ति, यत्र स्वातन्त्र्यमुपलभ्य ताः स्वयमपि पतेयुः भारतीय-समाजमपि पातयेयुरिति।

इत्थं नियतिविरुद्धमेव स्त्रीणां स्वातन्त्र्यं तेऽभिलषन्ति। श्रूयते व्यव-स्थापिकायां परिषदि स्त्रीणां सम्बन्धे बहवो नियमा इदानीं निर्मीयन्ते, विवाहविच्छेदसम्बन्धे तासां दायभाग—सम्बन्धे चेति। इदानीं हि

ये नियमा निर्मीयन्ते तेषां निर्मापका अन्धानुकरण प्रवृत्ताः पाश्चात्य सभ्यता-परिचिता भारतीय-संस्कृतिपरिचयशून्या एव भवन्ति। येन ते स्वमनोऽनुरूपमेव नियमं निर्मातुं यतन्ते। ते हि नापेक्षन्ते मानवं स्वभावम्, न विदन्ति मौलिकं भारतीयं हिताहितम्। उपरितनमेव दोषं पश्यन्ति। येन तस्य परिहारार्थं तु नियमं निर्मान्ति। परन्तु ततः सहस्रश एवं दोषा उद्भवन्ति, ये मूलदोषादपि अधिका भवन्ति। तत्र तु एक एव दोष आसीत्तेषां नियमे तु ततोऽप्यधिकाः सहस्रशो दोषा भवन्ति। अत एव वयं कथयामो यत्प्राक्तनैर्महर्षिभिः स्त्रीणां पुरुषाणां तथा ऐहलौकिकपारलौकिकोभयलोकानाञ्च कल्याणं दिव्यदृष्ट्या विलोक्य नियमा निर्मिताः सन्ति, तेषामेव पालनाभावात् सर्वा अपि अव्यवस्थाः सन्ति। नास्ति प्रयोजनमन्येषां नियमानां निर्माणस्य नूतननियमनिर्माणेन तु ततोऽपि गर्हितैवावस्थोदेष्यतीति। उक्तं तेनैव भारतीय-नियमव्यवस्थापकेन मनुमहाराजेन—

"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः॥
उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित्।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च"।

या हि वेद विरुद्धाः स्मृतयः=आधुनिकैः पुरुषैर्निर्मिता नियमव्यवस्थाः (बिल, कानून) भवन्ति। याः का अपि कुदृष्टयः कुत्सितावलोकनानि (यथा पाश्चात्यदृष्ट्या जायमानाः साम्प्रतिकानां पुरुषाणां नियमधाराः) ताः सर्वा अपि प्रेत्य तु दूरेऽस्तु इहैव निष्फलाः। यतो हि ताः तमोनिष्ठा अज्ञान-मूलाः। अज्ञानेनैव प्रोद्भूता इति। अत एव तानि नियमजातानि अर्वाक्कालिकतया शिमलापर्वते इन्द्रप्रस्थे वा व्यवस्थापकपरिषदः सकाशात् निर्मितत्वात् उत्पद्यन्ते उद्भवन्ति। पञ्चषवर्षेभ्यः पुनः च्यवन्ते विनश्यन्ति। तानि निष्फलानि अनृतानि च भवन्ति इतिविषये तु किं वक्तव्यं तत्तु प्रत्यक्षमेव भारतीयास्तेषां कुपरिणाममनुभवन्ति यत् परस्परं कलहवृद्धिः वञ्चकतापराणां मिथ्याव्यवसायिनां जीविकावृद्धिरभियोगालयशुल्क-वृद्धिः दरिद्रजनता-द्रव्याणां स्वाहाकारो दैनन्दिनमभियोगे भवति। किमधिकं तत्र वक्तव्यं विद्यते। अतो वयं भारतीया नाभिलषामः कस्यापि धर्मशास्त्रीयनियमस्य परिवर्तनं व्यवस्थानं वाऽधुनिक्यां व्यवस्थापकपरिषदीति संक्षेपः।

\+ \+ \+ \+

## अहो संस्कृतज्ञानामौदासिन्यम्!

सर्वेऽपि जानन्ति यादृह भारते सम्प्रति नाम्ना वा स्यात् कर्मणा वा स्यात्

कथनाय तु प्रजातन्त्रं राज्यं कियति विषये विद्यत एव। परन्तु तत्र मतदातारो रूप्यकत्रयभाटकदातृत आरभ्य इङ्ग्लिशभाषायां बी. ए. परीक्षोत्तीर्णच्छात्रान्ता मानवाः सन्ति। विहारप्रान्ते च श्रूयते यत् २॥) सार्धरूप्यकद्वयं ग्रामरक्षिकरं (चौकिदारी) ददतः श्वपचा अपि मतदानेऽधिकारिणः। परन्तु संस्कृतज्ञाः छात्रा विद्वांसो वा अकिञ्चित्करत्वात् सर्वथापि तत्र संस्कृताध्ययनयोग्यतानिमित्तेन अनधिकारिण एवेति किमितोऽपि अस्ति कोऽप्यपमानावसरः संस्कृतच्छात्राणां विदुषाञ्चेति। परन्तु अत्र विषये अधुनाऽपि संस्कृतज्ञेषु बहवो जानन्त्येव न हि। ये च जानन्ति तेऽपि स्वस्वाभाविकालस्यौदासिन्यादिवशाद्विरता एव तिष्ठन्ति। ये च ज्ञात्वा किञ्चित्कर्तुमभिलषन्ति, तेऽपि सहायकाभावाद्विरता एव भवन्ति। अत्र संस्कृतज्ञानां संघाभावात् परस्परं मतानैक्याच्च कोऽपि पुरतः पदमेव धर्तुं नोत्सहते। परन्तु नेदं समुचितं देशकालात्मविदां विदुषामित्यस्माकं वक्तव्यम्। तेषामेवेदानीमिह यत् किञ्चित्कर्तव्यं विद्यते। ते यदि अन्येषामौदासिन्यमालस्यमकिञ्चित्करत्वं पर्य्यालोच्य विमुखा भविष्यन्ति, तर्हि स्वप्रधानकर्तव्यतक्षयवन्तस्ते संस्कृतगिरां देव्या अनुपासकपदे आसीनाः सर्वेषामेव कोविदानां पुरतो वाच्या भविष्यन्ति। अतश्च सम्प्रति वयमेतावदेव वदामो यत्सर्वत्र संस्कृतविद्यालये महाविद्यालये एतद्विषये सभां कृत्वा सर्वानपि समुद्बोध्य उत्तीर्णमध्यमादि-परीक्षाणामपि छात्राणांकृते मतदानाधिकारं दापयेयुः। तथा सर्वतः संस्कृतज्ञानां संघं सम्पाद्य सर्वदातनस्य कृतेऽपि स्वसंघटन दृढं सम्वर्द्धयेयुरिति। येनैवम्भूते व्यतिकरे संस्कृतज्ञा न कदापि केषाञ्चन पृष्ठस्थाः सन्तिष्ठेरन् यथाकथमपि स्वाधिकारं संगोपितुन्तु समर्थास्तिष्ठेयुरिति।

---

## भूकम्पोत्पाते महामण्डलीया सम्मतिः।

साम्प्रतिकं भयङ्करभूकम्पमनुभवतामधुनापि नापैति हृत्कम्पो भयात्। नास्तिकेषूच्छृङ्खलेष्वपि नरेष्वधुना भूकम्पभयेन आस्तिकत्वं दृढं बद्धमूलं सञ्जातम्। जडवादनिरता भौतिकविज्ञानविदोऽपि दैवे जगति सम्प्रति श्रद्धामावहन्ति। तदेवं श्रीमतः परमकारुणिकस्य भगवतः समिच्छया यत्किञ्चिदपि भवति तत्सर्वमेव मानवानां मङ्गलकरम्भवति। तदिह भूकम्पावसरे दैवस्य जगतो विचारो दैवेन जगता चास्य भूकम्पस्य सम्बन्धोऽप्यवश्यं विमर्शनीयः।

ईदृशे व्यतिकरे जडवादिनो भूकम्पस्य हेतुं पृथिवीगर्भस्थितद्रवद्रव्यवाष्पं वदन्ति। यतो हि ते कथयन्ति—यद् बहुवर्षतः सञ्चिता ईदृशास्तरला

धातव उपधातवश्च मिलिता विकृतिमेत्य भू-गर्भत उपरिगन्तुं ततो वेगेन निःसरन्ति। अत एव तेषामाघातेन भूकम्पो जायते। तत्र ते प्रत्यक्षं प्रमाणमपि संगिरन्ते यत् भूकम्पावसरे कुत्रचित् सलिलोद्गमः क्वचन ज्वालामुखीविस्फोटः। कुहचन गन्धकप्रभृतिविकृतधातूपधातूनामुद्गमोऽपि भूगर्भतो भवत्येवेत्यादि।

परन्तु जडवादिनां कथनं स्थूलदृष्ट्या प्रत्यक्षगोचरमुपरितनं स्थूलं कारणमादाय वर्तते, यथा जठरे ध्मायमाने कश्चित्साधारणोऽपि पुरुषः कथयति यद् वायुवृद्ध्या जठरं स्फीतं जातम्। परन्तु वायुवृद्धिरेव कथमभूदिति ते स्थूलधियो मानवा न परामृशन्ति। तत्रायुर्वेदाभिज्ञा एव कथयितुमर्हन्ति यद् यकृतो हृदययन्त्रस्य चोभयोरन्यतरस्य वा विकृत्या तदीयक्रियायां विक्रियमाणायां मन्दाग्निप्रभृतिदोषोद्गमेन वायुवृद्धिर्भवति, ततश्चोदरं ध्मायते, स्फीतं वा भवतीति। ज्योतिर्विदश्च ततोऽपि सूक्ष्मं ग्रहोपग्रह-सम्पर्कमामनन्ति। कर्मरहस्यज्ञाश्च ततोऽपि सूक्ष्मतया प्रारब्धादिकर्मविपाकतो जठरध्मानमामनन्ति। तथैवाधुनिका लौकायतिकाः प्रत्यक्षमात्रैकप्रमाणसाधना उपरितनं केवलं द्रवपदार्थमात्रं भूकम्पस्य कारणं जठरवृद्धौ वायुप्रकोपवदुद्गिरन्ते। परन्तु प्राक्तना अस्माकं पूर्वजा दिव्यदृष्टिभाजो महर्षयस्तु एवम्भूतानामुत्पातानां कारणमतिसूक्ष्ममभिदधति यत्राधुनिकानां जडवादिनां दृष्टेः प्रसार एव नास्तीति।

तथा हि—इयमस्माकं मृत्युलोकात्मिका वसुन्धराऽस्य ब्रह्माण्डस्य एकादशसहस्रषट्सप्ततितमांशरूपैव विद्यते। अन्ये च सर्वेऽपि अवशिष्टा भागाः देवलोका एव सन्ति इत्यस्माकं महर्षीणां कथनमस्ति। 'भारतवर्ष'-शब्दवाच्योऽयमस्मदीयो भूभागस्तु जम्बूद्वीपस्य द्वादशांशो विद्यते। अस्मिन्नेव जम्बूद्वीपे अपरेऽपि अष्टौ वर्षाणि सन्ति ते सर्वेऽपि देवलोका एव। इहैव पितृलोको नरकलोकः प्रेतलोकश्चास्ति। तेऽपि देवलोका एव सन्ति। अस्मिन् भूलोके एव जम्बूद्वीपेन सहेतराण्यपि द्वीपानि सन्ति। तान्यपि देवभूमय एव। इत्थं च उपरितना भूर्भुवः स्वः जनः महः तपः सत्यमित्यादि लोकाः, अतल-वितल सुतलप्रभृतयश्चाधस्तना लोका एते चतुर्दशापि भुवनशब्दवाच्या लोकाः सर्वेऽपि देवभूमय एव। एषु चतुर्दशसु भुवनेषु भूर्भुवःस्वरिति त्रयोलोकाः त्रिलोकशब्दवाच्याः सर्वेभ्योऽपि मुख्या गण्यन्ते। जीवानां शुभाशुभफलदाता तान् कर्मानुसारञ्च नरकलोके प्रेतलोके वा सम्प्रेष्य दण्डविधायको भगवान् धर्मराजो यमोऽपि इहैव भूलोके स्वराजधान्यां विराजते। इत्थमेव कालाधिनायकः कालविभाजको भगवान् मनुरपि भुवर्लोके स्वराजधान्यां निवसति। एवं हि

देवासुरयोरधिकारनियामकस्य त्रिलोकेषु स्व स्व-पदाधिकारिणां देवानां नायकस्य देवराजस्य भगवत इन्द्रस्य राजधानी स्वर्लोके विद्यते ।

पूज्यपादै र्महर्षिभिः स्वयोगदृष्ट्याऽवलोक्य निर्धारितं विद्यते यद् ग्रहनक्षत्र-राशिचक्र-सूर्य्यादि ध्रुवान्तं यत् किमपि खगोले विद्यते तत्सर्वमपि भूर्भुवरिति लोकद्वयमध्य एवास्ति । सर्वेऽपि ग्रहोपग्रहा अनयोरेव लोकयोः स्वगतिचक्रं चालयन्ति समाहरन्ति च । ध्रुवस्थानन्तु भुवःस्वरित्येतयोर्द्वयोः सन्धिस्थाने विद्यते तच्च सदाऽचलमेव तिष्ठति । मेरुदण्डं प्रमाणीकृत्य तस्य चतुर्दिक्षु सूर्य्यं प्रदक्षिणीकुर्वन्तो ये ग्रहाः परिभ्रमन्ति ते हि अनयोर्लोकयोरभ्यन्तरे स्व-स्व कक्षायां धावन्ति । सर्वासामपि आधिभौतिकशक्तीनां केन्द्रस्वरूपो हि भगवान् सूर्य्यो विद्यते । किं बहुना जडवादिगणपरिभाषया एलेक्ट्रिसिटि-शब्दवाच्यानाम् ऐन्द्रीणां शक्तीनामपि केन्द्रः सूर्य्यलोकमेव व्याप्य तिष्ठति । सम्प्रति जडविज्ञान-वेत्तारोऽपि कियता अंशेन विषयमिममवगन्तुं समर्था भवन्ति ।

फलतो यदा जीवानां समष्टिकर्माणि विगुणितानि भवन्ति, यदा च तानि इयन्ति दूषितानि भवन्ति यत्—

"अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते" ।

इति नियमकोटिमारुह्य झटित्येव तेभ्यः फलन्दातुं परिणतानि भवन्ति । तदा देवास्तत्पदाधिष्ठातारः कुपिता भवन्ति । ग्रहा अपि तदनुरूपेण वैगुण्य-मापन्नाः स्वमार्गं त्यजन्ति । यदा चास्मिन् भूकम्पावसरे सप्तानां ग्रहाणामेक-स्मिन्मकरराशौ संमर्दः समजनि । तदैव सूर्य्यस्य भगवतो या शक्तिरस्माकं भूर्लोकात्मकं भारतं वर्षं गोपायति, सा विकृतिमापद्यते । ततश्च देवाज्ञया यत्र देशे पापाचाराधिक्यं भवति, तद्देशगान् मानवान् विविधपीडाकष्टदुःख-व्यथाभिरुद्वेजयति । कदाचिदतिवृष्टिरेव कदापि अनावृष्टिरेव कदाचन महा-मारी-प्रभृतयो रोगा एव प्रजाविनाशमाचरन्ति इति भयदा महोत्पाता विविध-रूपेण जनान् विध्वंसयन्ति ।

यथा हि समष्टिरूपेण वनेन सह वृक्षस्य सम्बन्धः तथैवेह समष्टिकर्मणा व्यष्टिकर्मणः सम्बन्धः । भूकम्पादयो महोत्पातरूपा दैव्यो विपत्तयोऽपि जनानां समष्टिकर्मणामेव परिणामा भवन्ति । यदा हि लोकेषु समष्टिरूपेण अनाचारा, दुराचारा, धर्मावहेलनानि, दैवजगति अविश्वासवृद्धिः देवनिन्दा, ईश्वरास्तित्वनिराकृतिः, पितृलोकाश्रद्धा, महर्षिवाक्यानादरः, देवस्थानमर्य्यादातिरस्कारः गुरु-वृद्ध-नरेन्द्रादिपदापमाननम् पूज्यपूजाव्यतिक्रमः, अपूज्यपूजाप्रचारः, पुरा-तन-धार्मिकव्यवस्थासु अधार्मिकाणां हस्तक्षेपाधिक्यावसरः, स्त्रीणां सतीत्व-

मर्य्यादाविनाशः, परसम्पत्तिहरणादि-महापातक-पातकोपपातक-संकरीकरण-मलिनीकरणादयो दोषाः सामान्यतः प्रजासु प्रसरन्ति। तदा हि मानवानां समष्टि-कर्माणि विकृतानि भवन्ति। यतश्च कर्मसञ्चालका दैवजगतां पदाधिकारिणो देवाः कुपिता भवन्ति। ततश्च समष्टिकर्मदोषतोऽवश्यं दैवदुर्विपाकरूपा अतिवृष्टिरनावृष्टिः दुर्भिक्षं महामारी, अधर्मयुद्धं भूकम्पादयश्च महोत्पाता जायन्ते। येन खण्डप्रलयः प्रजासु समनुभूयते। अतश्च सदैव सुधीभिरयं शाश्वतिकः सनातनः सिद्धान्तः समवधानीयः।

उपरितः स्थूलकारणानुसन्धानतः पृथिवीस्थोष्णद्रवद्रव्यं भवेन्नाम भूकम्पकारणं परन्तु तदेवादिकारणं निदानं भूकम्पस्येति न भ्रमितव्यम्। सूक्ष्मेक्षिकया तु तस्य भूकम्पस्य मूलं कारणं निदानरूपन्तु दैवी सूक्ष्मा शक्तिरेवास्ति। या च भुवर्लोकतश्चालिता भवति। यस्याश्चालका देवगणाः सन्तिः। येषां राजा स्वर्लोके इन्द्रस्तिष्ठति। ते हि तदैवेमां शक्तिं साधु न चालयन्ति यदा नराणां समष्टिकर्माणि विगुणितानि भवन्तीति संक्षेपः।

अस्याधिदैविकविज्ञानस्यायमेव सारांशो विद्यते, यत् मृतानां जीवानां तदीयकर्मानुसारं नरकलोके प्रेतलोके वा दण्डदानबुद्ध्या प्रेषणं विधाय तत्र तत्र प्रायश्चित्तरूपेण तानि तानि कुफलानि तेभ्यो वितीर्य्य पुनश्च कर्मफलभोगेन शुद्धानां तेषां स्वर्गलोके मृत्युलोके वाऽवशिष्टकर्मानुकूलं सम्प्रेषणमिति धर्मराजस्य भगवतो यमस्य कर्म्म। यस्येहैव भूलोके राजधानी विद्यते, यत्रास्माकं भारतवर्षोऽप्ययमेकस्मिन्प्रदेशे तिष्ठति। इत्थमेव जीवतां मानवानां आधिदैविकेन महोत्पातेन दण्डदानं कालधर्मानुरूपञ्च तेषां शासनमित्यादिकं भगवतो मनोः कार्य्यं यस्य राजधानी भुवर्लोकेऽस्ति। एवञ्च सुखदुःखनियामकानां सर्वेषामपि दैवकार्य्याणां सम्पादकस्य देवगणस्य नियन्ता देवराज इन्द्रोऽस्ति, यस्य राजधानी स्वर्गे विद्यते। दैवस्य जगत इमानि त्रीणि महान्ति केन्द्राणि सन्ति। एभ्य एव त्रिभ्यः केन्द्रेभ्यो दैव्य आज्ञाः प्रचारिता भवन्ति। वयमाशास्महे यदिदानीं विपद्ग्रस्ताः सर्वेऽपि भुविस्था मानवाः कर्मचक्रगतिं गहनामवगच्छन्तः सावधाना भूत्वा भगवद्भक्तिसम्पादने सत्कर्मानुष्ठाने च व्यापृता भविष्यन्ति। तेनैव सार्धं सम्प्रति प्रवर्द्धमानमुच्छृङ्खलत्वं देवमन्दिरादिमर्य्यादाभङ्गकरकृत्यं अन्यदीय-धार्मिक-कृत्यविघटनं' समाजविशृंखलनं गुरु-वृद्धानादरणं स्त्रीणां सतीत्वविनाशकनियमादि-निर्माणकार्य्यं निरुन्ध्येयु र्येन न स्यात्पुनरीदृशस्य महोत्पातस्य दर्शनम्, जगतश्च सर्वकालिकं मङ्गलं स्यादिति।

# कालस्य विचित्रा गतिः।

ले०—रामपतिमिश्रः साहित्याचार्यः एम० ए० एल० एल० बी० (बाराबंकी)।

(१)

इह खलु धर्मप्रधानभूते मुनिजनपादपूते भगवच्चरणार्पणानुग्रहपूतपीठे सुरसरितादि-सिक्तेऽन्वर्थनामधेये आर्यावर्ते स्वे स्वे कर्मण्याभिरता ब्राह्मणप्रभृतयो वर्णा आसन् विलसन्ति च। यत्र मनुयाज्ञवल्क्यप्रभृतयो धर्मशास्त्रप्रवर्तकाः कपिलव्यासप्रभृतयो मोक्षशास्त्रप्रणेतारः, किमुत यत्र गार्गीप्रभृतीनां सीमन्तीनीनामाध्यात्मिक-विचार-प्रवाह उपनिषद्यपि दृश्यते। यदवलोकनेनैवाधुनिका आङ्गलदेशीया नतमस्तका आमन्वते, प्रशंसन्ति च मुहुर्मुहुः धन्यमिदं भारतं, धन्याश्च ते विचाराः, धन्यास्ते ऋषयो धन्याश्च ते आर्य्या इति। यद्वचनामृतपूरेणाद्यापि पाश्चात्या अपि शान्तिं लभन्ते। यत्रत्या ब्राह्मणाः निखिलदेशीयान् नरान् धर्माचरणादीन् शिक्षन्ते स्म यथाह मनुः—

> एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
> स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।

परन्तु करालकलिकालकलनादेतद्देशस्था अपि पाश्चात्यशिक्षाशिक्षितास्तदीय-लौकायतिक-हेत्वाभासैकपक्षपातिनः शास्त्रीयसिद्धान्तानां निर्वापं विधायापवचनम् मन्वाना व्यवस्थापरिषदि प्रलपन्ति। सम्प्रति व्यवस्थापरिषदि प्रमीतपतिकानां अनपत्यानां पैतृकसम्पत्तौ विद्यमानेऽपि भ्रातृवर्गे पतिवद्दायाधिकार इति विधानं प्रस्तुतम्। तत् समीचीनमाहोस्वित्तर्काभास एव। तत्रावसरप्राप्तसङ्गतिप्रदर्शनाय तावद्दायपदार्थः निरूप्यते। तस्मिन्निरूपिते तद्भागिनोऽपि निरूपणीया भवन्ति। तदाह नारदः—

> विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते।
> दायभाग इति प्रोक्तं तद्विवाद पदं बुधैः। इति।

पित्रोरयं पित्र्य इति कृतैकशेषात् पितृशब्दाद्यत्। मातृधनस्यापि विभागकथनात्। पित्र्यस्य पुत्रैरिति च द्वयमपि संबन्धिमात्रोपलक्षणम्। पत्नीत्यादीनामन्येषामपि भर्त्रादिधने तन्निरूपणात्। अतएवोपक्रमे मनुना पित्र्यादिपदं नोपात्तम्।

> एष स्त्रीपुंसयोरुक्तो धर्मो वो रतिसंज्ञितः।
> आपद्यपत्यप्राप्तिश्च दायधर्मं निबोधत इति।

दायधर्मोऽप्यत्र विभागरूपोऽभिप्रेत स्तस्यैवाग्रे लक्षणकथनपूर्वकं निरूपणात्। उद्देशावसरेऽपि स्त्रीपुंधर्मविभागश्चेति तस्यैव विवाद पदत्वेनोद्देशात्, अतएवाग्रे यावत् संबन्धिधनविभागमेव प्रदर्शितवान् मनुः।

दायशब्दश्चायं स्वामिसंम्बन्धमात्राद्यत्र द्रव्ये स्वत्वं तद्द्रव्यं वदति। तथा च निघण्टुकारः "विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिणः" इत्याह। अत्रापि पितृपदं सम्बन्धिमात्रोपलक्षणमन्यत्रापि दायशब्दप्रयोगात्। अयमत्राभिसन्धिः। यद्यपि—दायभागे योगीश्वरेण प्रमीतपतिकानां पुत्राभावे सर्वतः प्रथमं दायाधिकार इति अनुपदश्लोके निरूपितमन्यैश्च तदनुयायिभिर्निरुपितम्। तथाहि—

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।
तत्सुता गोत्रजा बन्धुः शिष्यसब्रह्मचारिणः॥
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥

अमुमेवार्थं प्रजापतिरप्याह—

पूर्वंमृता त्वाग्निहोत्रं मृते भर्तरि तद्धनम्।
लभेत् पतिव्रता नारी धर्म एष सनातनः॥

वृद्धमनुरपि—अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता।
पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमंशं लभेत चेति॥

बृहस्पतिरपि—आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः।
शरीरार्धं स्मृता जाया पुण्यापुण्यफले समा॥
यस्य नोपरता भार्या देहार्धं तस्य जीवति।
जीवत्यर्धशरीरेऽर्थं कथमन्यः समाप्नुयात्॥
सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः।
अपुत्रस्य प्रमीतस्य पत्नी तद्भागहारिणी॥ इति

योगीश्वरयाज्ञवल्क्योऽपि पूर्वाभावेऽपराधिकारं ब्रुवन् सर्वतः प्राथम्येन पत्न्या एवाधिकारमाचष्टे। तमेवानुवदन्तौ विष्णुकात्यायनावप्यभिदधाते—

अपुत्रस्य धनं पत्न्यभिगामीति।
पत्नी पत्युर्धनहरी या स्यादव्यभिचारिणी॥
तदभावे तु दुहिता यद्यनूढा भवेत्तदा। इति च।

तथाप्येतद् विपरीतानि वचनान्यपि उपोद्बलकतया दृश्यन्ते। तथा च नारदः—

भ्रातॄणामप्रजः प्रेयात् कश्चिच्चेत् प्रव्रजेत वा।
विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना॥
भरणञ्चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात्।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तु इति॥

पत्नी सद्भावेऽपि भ्रातॄणां धनग्रहणं भरणञ्च तत्पत्नीनामाह मनुरपि।
पिता हरेदपुत्रस्य रिक्थं भ्रातर एव चेति।
पितृभ्रात्रोर्विकल्पेनापुत्रधनग्रहणाधिकारं वदति न तु पत्न्याः—
अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्।
मातर्य्यपि च वृत्तायां पितुर्माता हरेद्‌ धनम्॥

इति स्मृतिर्मातापितामह्योरपुत्रधनाधिकारमभिदधाति। शङ्खलिखित पैठीनसयोऽपि।

"अपुत्रस्य स्वर्यातस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा-पत्नीति"। भ्रातुः पित्रोश्चाभावे पत्न्यधिकारं निगदन्ति॥ देवलोऽपिः—

ततो दायमपुत्रस्य विभजेरन् सहोदराः।
तुल्या दुहितरो वापि ध्रियमाणः पितापि वा॥
सवर्णा भ्रातरो माता भार्य्या चेति यथाक्रमम्।

इति पूर्वपूर्वाभावेन याज्ञवल्क्येन प्रतिपदोक्तायाः पत्न्या भ्रात्राद्यभावेऽधिकारं वदति। भ्रातृशब्देनात्र भिन्नोदराः सहोदराणां पृथगुपादानात्। कात्यायनोऽपि—

विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत्।
भ्राता वा जननी वाथ माता वा तत्पितुः क्रमात्॥

इति पित्रादिषु दायग्राहकेषु सत्सु पत्न्या निर्देशमपि नाङ्गी करोति। किमुत धनग्रहणम्। एतेषां परस्परविरुद्धानां प्रमाणभूतानां वचनानां धारेश्वर-इत्थं व्यवस्थामाह-"विभक्ता संसृष्टभ्रातुरपुत्रस्य पत्नी यदि नियोगमङ्गीकुरुते तदैव धनं लभते,—अनियोगार्थिन्यां तु तस्यामविभक्तसंसृष्टपत्नीवद्‌भरणमात्रमेव, नियोगद्वारैव अपुत्रपत्न्याः पतिस्वापतेयस्वामित्वन्नयबीजमनेकस्मृतिषु अपत्यद्वारैव तस्या धनसम्बन्धबोधनात्। तथा च गौतमः-

"पिण्डगोत्रर्षि सम्बन्धा रिक्थं भजेरन्।
स्त्रीवानपत्यस्य बीजं वालिप्सेतेति"।

अनपत्यस्य रिक्थं धनं पिण्डगोत्रर्षि संबन्धा भजेरन्। तस्य स्त्री वा, रिक्थं

भजेत्, यदि बीजं लिप्सेत। अत्र 'वा' शब्दो 'यदि' शब्दार्थ बोधकोऽन्यथा रिकूथग्रहण बीजलिप्सयो रतुल्यत्वेन विकल्पार्थत्वानुपपत्तेः। तथा मनुरपि—

धनं यो विभृयाद् भ्रातुर्मृतस्य स्त्रियमेव वा।
सोऽपत्यं भ्रातुरुत्पाद्यदद्यात्तस्यैव तद्धनम्॥

इति विभक्तधनसम्बन्धमपि अपत्यद्वारैव दर्शयति तथा विभागाभावेऽपि-

कनीयान् ज्येष्ठभार्यायां पुत्रमुत्पादयेद् यदि।
समस्तत्र विभागः स्यादिति धर्मोव्यवस्थितः॥

इति कथयन्नपत्यद्वारेणैव दाय सम्बन्धोऽस्तीत्याह। तस्मादन्वय व्यतिरेकाभ्यामपत्यद्वारक एव पत्न्या धनसम्बन्धो नान्यथेति निष्पन्नम्। वशिष्ठोऽपि— "रिकूथलोभान्नास्ति नियोग" इति धनलोभप्रयुक्तं नियोगं प्रतिषेधन्नङ्गीकृत नियोगया एव धनसम्बन्धो नापरस्या इति स्पष्टमेव वदति। एवञ्च भ्रातॄणाम प्रज इत्यादीनि नारदवचनानि नियोगार्थिनी विषयाणि पर्य्यवस्यन्ति।

अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तमाः।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च॥

इति याज्ञवल्क्योऽपि अपुत्राणामन्धादि योषितां भरणं भाषमाणस्तनयस्येव दायसम्बन्धप्राधान्यात् तत्कृत एव तत्स्त्रीणां धनसम्बन्ध इति निगमयन् न्यायसाम्यात् तत् सर्वत्रापत्यमूलकमेव स्त्रीणां रिकूथग्रहणं ज्ञापयति।

यज्ञार्थं द्रव्यमुत्पन्नं तत्रानधिकृतास्तु ते।
अरिकूथभाजस्ते सर्वे ग्रासाच्छादनभाजनाः॥

इति स्मृतिरपि पुरुषाणामपि पुत्रादीनां यज्ञानधिकारिणां रिकूथानधिकारं वदन्ती दण्डापूपन्यायेन सुतरामभर्तृकाणां तदनधिकारिणीनां धनसम्बन्धं निरस्यति। तथा स्मृत्यन्तरमपि—

यज्ञार्थं विहितं वित्तं तस्मात्तद्विनियोजयेत्।
स्थानेषु धर्मजुष्टेषु न स्त्रीमूर्खविधर्मिषु॥

इति स्त्र्यादिषु धनविनियोगमपि प्रतिषेधत् साक्षात् तस्या एव निखिलरिकूथग्रहणं सुदूरं दूषयतीति। एवं शास्त्राणां पूर्वापरविचारणेनाधुनिका ये दायभागे प्रमीतपतिकानामेव दायाधिकारो न तु भ्रातृवर्गाणां वदन्ति। ते तु स्मृतितत्त्वानभिज्ञा एव। तासां दाये सर्वाधिकारे जाते व्यभिचारादिदोषगणापातसम्भवेनानर्थपरम्परा सम्भवात्।

---

# स्वागतम् ।

—:*:—

[ स्वस्ति प्रेङ्खतवरखड्ग खण्डिताऽरिव्रातकीर्त्तितति-धवलिताऽखिल संसार-समराङ्गण-क्रीडनपरायण-सततयुद्धार्थोद्यत-नेपालोत्तरद्वाराधीश-श्रीयुतहिरण्य-संशेरजङ्गराणाबहादुरमहोदयानां जनकपुरधाम्नि शुभागमनोपलक्षे । ]

नरनाथ ! मही मिथिला सकला
विमलाऽद्य हिरण्यपदाऽऽप्तिफला ।
लपनस्य निभालनभाग्यबला
मुदमेति तवाऽऽगमलास्यपरा ॥ १ ॥
तव लाभज लोचनलोलजलं
प्रतिपाद्य पदे शुभपाद्यमियम् ।
लपितञ्च सुधामधुरं मधु ते
निलयं विदधाति मनोमुकुरे ॥ २ ॥
भ्रमरी भ्रमरी भुवमेत्य दिवो
ललितं तव कीर्त्तिलतासुमजम् ।
मकरन्दममन्द सुगन्धधरम्
परिपीय कलं किल रौति मुदा ॥ ३ ॥
वलिना विविधाऽऽगमसारविदा
भवता निखिला नयपालरसा ।
वररत्नवती सुरराजपुरी
हसतीह सदा समदा सरसा ॥ ४ ॥
भवताऽऽकलितं श्रुतिभूषणतः
कलयामि हिरण्यपदं निपुणम् ।
यदि दृष्टि पथं न भवे इह त-
च्छ्रुतभूषणमेव तदाकलये ॥ ५ ॥
जयशत्रुचयं चरितैः सकलं
परिमोदय लोकममुं मुदितः ।
धनधान्ययुतः प्रजया सहितो
महितो भव वर्षशतं धरणौ ॥ ६ ॥
सुखदं भवदागममोदभरम्
वसुधासुर बालक वृन्दनुतम् ।
तव मानसमन्दिर मोदकरम्
भवतात् शिवशंकरशर्म्मकृतम् ॥ ७ ॥

# को जानाति जनो जनार्दनमनोवृत्तिः कदा कीदृशी ।



( समस्याः )

प्रणेता—चन्द्रकुमारशर्मा शाण्डिल्यशास्त्री मौलत्राणः ।

कल्ये दाशरथिं भविष्यति नृपः श्रुत्वेति सर्वे नराः,
मोदन्तो मणिभिः सुचारुनगरं दीपैश्च संशोभयन् ।
सोऽयं याति वनं क्षणे च भविता राज्यादवस्थेदृशी-
"को जानाति जनो जनार्दनमनोवृत्तिः कदा कीदृशी" ॥ १ ॥

हं हो पाण्डुसुता धृतामरबलास्साक्षात्स्समन्तात्सदा
कृष्णां वीरपिता सुताश्च सततं रक्षन्ति सोपायकाः ।
एषा भोः ! कुरुराजसंसदि कृता नग्ना कथं तैरहो-
"को जानाति जनो जनार्दनमनोवृत्तिः कदा कीदृशी" ॥ २ ॥

येयं भारतभूस्सदा बहुधना वीरैर्गुणैर्भूषिता,
भक्तैः पण्डितपुञ्जधीरनिकरैः श्रेष्ठैर्नृपैर्मण्डिता ।
प्राप्ते कालकलौ सदा हि यवनैराक्रम्यतेऽघादहो-
"को जानाति जनो जनार्दनमनोवृत्तिः कदा कीदृशी" ॥ ३ ॥

सेयं याति शकुन्तलापतिगृहं सौख्याऽऽशयोत्कण्ठिता,
कण्वः प्रेषयतीति भो निजसुतां दृष्ट्वा मुहूर्तं शुभम् ।
अग्रेभावि* कथं सुमूढहृदयो नालोचतेऽसावदः-
"को जानाति जनो जनार्दनमनोवृत्तिः कदा कीदृशी" ॥ ४ ॥

मर्त्यो नित्यमहो विचिन्तयति भोः ! कार्य्यं करिष्ये स्वयम्,
तल्लाभैस्ससुतो हि दारसहितो यातास्मि दिव्योन्नतिम् ।
हा हा हन्त मनो विचारयति यत् भावी कथं स्याद्यतः
"को जानाति जनो जनार्दनमनोवृत्तिः कदा कीदृशी" ॥ ५ ॥

मृत्युं यान्ति नराः कुमारतरुणा वृद्धाश्च ये भूतले,
शेषा मोहयुता विहीनहृदया ध्यायन्ति नेमां व्यथाम् ।
ईहन्तेऽधममीश्वरन्ति च ततः शृण्वन्तु वार्तां हिते,

---

* सामान्ये नपुंसकम् ।

"को जानाति जनो जनार्दनमनोवृत्तिः कदा कीदृशी" ॥ ६ ॥
याता निर्धनतां धनी च निधनो भावी धनाढ्यः स्मृतः,
मत्ता ये तरुणा भवन्ति, जरया श्वः पीड़िताः स्युश्च ते।
एतत्सत्यपि धर्मकर्म्मणि जना रक्ता न भीताः पुनः
"को जानाति जनो जनार्दनमनोवृत्तिः कदा कीदृशी" ॥ ७ ॥
सिंहव्याघ्रशशावृतं घनवनं देशीकृतं येन भोः,
नानाहट्टगृहैर्युतं जनपदं यस्मादरण्यीकृतम्।
एतत्स्थास्यति पूर्ववज्जगदहो विश्वास्यते नो यतः
"कोजानाति जनो जनार्दनमनोवृत्तिः कदाकीदृशी" ॥ ८ ॥

## महाप्रलय-सूचको भूकम्पः।



( ले०—पण्डित शिवकुमारशास्त्री जगन्नाथपुरस्थः )

यदा जनपदा धर्मशास्त्रविहित-स्वस्वधर्म-विरहिता घोरपापकर्मपरायणा भवन्ति, तदा महाप्रलय-सूचकं पृथिव्यादिकम्पनादिकं महदनिष्टकरं कार्यं यदा कदा यत्र कुत्र सम्भवति। अधुना प्रायः सर्वे मानवाः स्वविहितधर्म-विरहिता घोर-पापमाचरितुं प्रवृत्ता दृश्यन्ते। यतो ये खलु तपसा क्षीणकल्मषाः शुद्धमानसाः परोक्षापरोक्ष-ज्ञानसम्पन्नाः समाधिस्था ज्ञानदृष्ट्या सर्वं भूतं भवितव्यं पश्यन्ति, त एव ऋषयोऽमलाशया यं सदाचारादिकं धर्म-पथम् उपदिष्टवन्तः तेन पथा चरन्तः स्वे स्वे कर्मणि लीना मानवा धर्ममेवाचरन्तः श्रेयसा सम्पन्ना आसन्। त एव भाग्यहीना नियतिलभ्यविषयस्य राज्यपदस्य प्रलोभनेन मानवा इदानीं तं मार्गं परित्यज्य आधुनिकैः अल्पज्ञानविभवसम्पन्नै नेतृवर्गैः उपदिष्टं मार्गमनुसरन्तः यद्यद्कर्म श्रुतिविरुद्धम् आचरन्ति, तत्तत्सर्वं अनिष्टकरं अधर्म एव जायते। तस्यैव धर्मस्य कुपरिणामो भूकम्पोऽयं जातः। येन असंख्यका मानवा गृहविहीनाः। तत्र केचित् पुत्रदारविहीनाः संजाताः प्रलयकालिकामेव व्यथां अनुभवन्ति। पूर्वमपि यत्र यत्र देशे भूयो भूयो भूकम्पो जातो मानवाश्च विनष्टाः। तत्रापि विहितधर्माननुष्ठानमेव कारणं स्यात् तत्वज्ञानिनो महर्षयोऽधुनापि सन्ति ते जानन्ति एव, यत् सम्पूर्ण-विश्वस्य रक्षायै

एत्र देशग्रामजात्यादिभेदैः महर्षिभिः सदाचारस्य मार्गभेदो निर्दिष्टो विद्यते। केचन धर्मशास्त्र ज्ञानविहीना हिन्दुसंस्कृतिशून्याः पाश्चात्यभावापन्ना स्तद्भेदं सर्वं इदानीं कुबुद्धिकुठारेण छित्वा सर्वान् देशान् सर्ववर्णान् सहभोजेन विवाहादिसम्बन्धेन च एकीकृत्य संसारस्यैव एकरूपतां विधातुं प्रवृताः सन्तो महाप्रलय कालीनं दृश्यमेव द्रष्टुकामाः सन्ति । इत्यहो महत्पापं कर्तुं व्यवसिताः। यदीश्वरो जगन्नियन्ता एकस्यैव मृत्पिण्डस्य बहूनि अनेकरूपाणि अन्तर्बहिर्भेदवद्भिः मानवादिभिः स्वानन्दाय क्रीडावस्तूनि विरचय्य क्रीडति । तान्येव सर्वाणि अनधिकारिण इमे एकरूपतां नेतुं प्रवृत्ताः । न प्रभविष्यन्ति । एतत् कथमपि न सम्भाव्यते । ईश्वर एव एकीकर्तुं अकर्तुं अन्यथा कर्तुं शक्तः स्यात् । मन्ये अत एवास्माकं एकीकरणप्रवृतिं दृष्ट्वा असहमानः स्वयं भगवान् अधर्मवृद्ध्या संभूतं पापं असहमानया देव्या वसुन्धरया समेषां मानवानां असून् निहत्य एकीकर्तुं एव प्रवृत्तो दृश्यते । ईदृशी एव अनधिकारिणाम् अमीषाम् अपि इदानीं प्रवृत्तिः दृश्यते। रुष्टो देवः अनेक विधदण्डं विदधाति, प्रज्ञाचक्षुर्हीनाश्च मानवा न पश्यन्ति ।

सावधाना भवन्तु, जानन्तु च यदि वयम् भगवतो जगत्कर्तुः नटस्य वानरा इव कन्दुका एव तन्निर्दिष्टश्रुत्यादिविहितेन पथा यथानिर्दिष्ट-स्थानं च नानुसरामः, स्वेच्छाचारिणो भवामः, तदा यथा बालकाः खेलनके आनन्दजनकोऽपि कन्दुकः, दुष्टः इति तदा तं गर्ते निक्षिपन्ति, तथैव दुष्टान् अस्मानपि आनन्दे विघ्नभूतान् धरणीगर्भे कम्पजनितविवररूपे निपात्य असुविरहितान् कृत्वा क्षेप्स्यति। अथवा क्रीडावसाने नियतकालात् महाप्रलयात् मध्ये अकाल एव अस्माकं कुचेष्टितस्य परिणामः पृथ्वीकम्पजनितः प्रलय एव भविष्यति । स्मरामो यदिदानीं विहारप्रान्ते माघमासे चन्द्रवासरे जातो भूकम्पः स नूतनपापस्यैव फलम् । शास्त्रेषु लिखितम् यत्पापस्य फलम् दुःखम् । पुण्यस्य फलम् सुखम् । यदि वयम् अधुना घोरे कष्टतरे दुःखे मग्नाः तदा वर्तमानदुःखमेव व्याख्याति यदयम् महाप्रलयसूचको भूकम्पोऽस्माकं पापस्यैव फलम् । भगवन्! शीघ्रं अस्मभ्यं मोहमग्नेभ्यो मानवेभ्यः सद्बुद्धिं वितर । यया अग्रे मार्गं फूत्कृत्य गच्छेम स्वात्मानं च गोपायेम । स्मरेम नायम् अनीश्वरः संसारः । पापाचरणात् संनिहितो महाप्रलय इति ।

# लेखवक्तृतयोस्तारतम्यविमर्शः ।

निबन्द्धा—श्रीदीनानाथशास्त्री सारस्वतश्शुजाबादाऽभिजनः ।

( 'मुलतान' स्थ-श्रीसनातनधर्मसंस्कृतकालेजाऽध्यापकः )

## "शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते"

असारेऽस्मिन् संसारे जीवनमेव सारम्; तदपि नाऽसहायं किन्तु यशस्संहितमेव जीवनं जीवनम्। परं यशस आसक्तिरपि न भवति समर्घा; यद् यः कोऽपि सर्व्वसाधारण एतल्लब्धुमीशीत, एतदर्थं–लब्धनैपुण्यानामस्मत्पुण्यानामेवाऽत्र व्ययो भवति; 'यशः पुण्यैरवाप्यते' इत्ययमाभाणकोऽप्येतन्मूलक एव। यशस्यानि भूयिष्ठकर्म्माणि भवितुमर्हन्ति। तथा च कतिपये तदर्थमर्थव्ययञ् कृत्वा इष्टापूर्त्तपूर्त्त्यै कूपारामदेवायतनप्रपादिनिर्म्मितिकर्म्म कुर्व्वन्ति। एके च कस्याञ्चित्सभायां वित्तप्राचुरीविश्राणनेन यशोऽर्थमेव दारिद्र्यमपि चिकीर्षन्ति। अपरे च स्वाख्याविख्यापयिषायै विविधान् विद्यालयानुद्घाटयन्ति। इतरे स्वनामकामा अनाथालयान् विधवाश्रमान् वा प्रचालयन्ति। अन्ये सदा सौन्दर्य्यसौष्ठवमेव कलयन्तो मरुत्तरायारोहणमेव नोनूयाजनकस्प्रमाणयन्ति। केचन च तीर्थसार्थेषु धर्म्मशालानां निर्म्माणमेव तौष्ट्यानिदानमध्यवस्यन्ति। फलतः स्वार्थत्यागः परार्थविधानञ्च सामान्यतो यशोहेतुर्निश्चीयते लोके। परन्तु वयन्तु 'यद्विवाहस्तद्गीतगानम्' इति भणितिमनुसरन्त इतरान्त्सर्व्वान्(१)उपेक्ष्य यशोबीजं शीर्षकोक्तयोर्लेखवक्तृतयोर्द्वयीमुभयीं(२)वा मन्महे। तत्र व्यतिरेककारणमेतदेव, यत्–प्रागुक्तेषु कारणेष्वधिकृतिर्व्यापृतिर्वा धनिकानामेव, न सर्व्वसाधारणानाम्। येभ्यो वराकेभ्यः श्रीमती श्रीरेव रुष्टा स्यात्, अथच्चैतदेव कथ्यम् (३)यत्तदीयमुखदर्शनेन आत्मानं या कलङ्किताम्मन्वीत; ते महाभागाः कथं तावद्दुस्साध्यानि साध्यानि साधयितुं प्रभूस्युः (४)कथं वा यशः प्रपत्तुमीशीरन्। किं तदर्ज्जनविचार-वर्ज्जनमेव कृत्वा जृम्भाऽऽरम्भणमेव विदध्युः, आकाशाद्वा यशोवृष्टिं प्रतीक्षेरन्, अर-

( १ ) इतरान्त्सर्व्वान्। 'नश्चे'ति सकारस्य धुट्। 'खरिचे'ति चर्त्वम्।

( २ ) उभयीम्। 'टिड्ढे'ति तयन्निमित्तको ङीप्। 'उभादुदात्तो नित्यम्' इति तयपोऽयच्।

( ३ ) कथ्यम्-कथधातुरदन्तः। 'अचोयत्' 'अतो लोपः'।

( ४ ) प्रभूस्युः। अत्र 'कृभ्वस्तियोगे' इति च्विः। 'च्वौ च' दीर्घः।

ण्यानीषु वा कस्यचिद् वृत्तस्य फलमेव यश आकलयेरन्? अतएव लेखो वक्तृता चैव प्रातिजनीनौ। धनिकानान्निर्धनानां वा, सुन्दराणामसुन्दराणां वा, येषां केषाञ्चिदपि यशोराशिं सम्पादयितुमिमावेव(१) अलम्भूष्णुनी साधने· नाऽत्र संशीतिदोषलेश प्रवेशाऽवकाशः ।

## वक्तृता ।

सम्प्रत्येतद्विमर्शनीयम्—यदनयोरुभयो꣸कोऽतिशेते। एवञ्चोभयोरन्यतर एव यशस्साधनम्? तदुभयी वाऽन्योन्याश्रिता यशस्या? तत्र विमृश्यते। उभयो꣸प्राग् वक्तृतैव समालोचनीया। वक्तृता नाम तात्कालिकप्रसिद्धि-स्थानम्। एतया सर्व्वसाधारणेन सह परिचयो जायते। एतयैव यत्किमपि आन्दोलनं दृढीभवति। सर्वसाधारणानां मतीः(२)स्वाऽनुकूला꣸कर्तुं वक्तृतैव रामबाणवदमोघाऽस्त्रम्। अद्यत्वे सुधारकाणां यत्र तत्र वक्तृताबलादेव धर्म्म-विरुद्धा अपि वार्त्ता धर्म्मधनैर्जनैरपि सम्मन्यन्ते। धर्म्मस्य नाशे कारणमस्मदीय· सनातनधर्म्मणां तद्विषयकवक्तृतात्यागः। अद्यत्वे धर्म्मविप्लवसमयेऽपि यद् धर्म्मेशतः श्रद्धा वर्त्तते; तत्र कारणमस्माकं प्राचीनशैल्यां कथादिवाचनमेव; तदपि वक्तृताव्यपदेशभागेव। वक्तारम् आबालाद् आस्थविरं सर्व्व एव क्रमश꣸परिचिन्वन्ति; यदि तस्य (व्याचिख्यासोः) वक्तृता प्रभावशालित्वं कलयति तदा। प्रभावशालित्वे च निदानं हार्द्दिकभाषाश्रयणमेव। मौखिकी भाषा हार्द्दिकभाषातो नाऽतिरिच्यते, न वा स्वातन्त्र्यम्बिभर्त्ति। वस्तुतस्तु हृदयमेव वदति, नाऽऽननम्; तत्तु हार्दिकभाषाप्रकाशकं द्वारमात्र· मेव। परन्तु वक्तार꣸कदाचन हार्द्दिकीम्भाषां निह्नुत्य मौखिकीमेवाऽवल-म्बन्ते। तदनेहसि (हार्द्दिकभाषापिधित्सायां) तन्मुखं तदीयहृदयं न सम्बध्नाति; तेनैव सा भाषा प्रयत्ननिष्पाद्यत्वाच्छ्रोतॄणां हृदयं न स्पृशति। एकं पुरुषं वय-मन्तर्घृणास्पृशा दृशा पश्यामः; परन्तस्मात्पुरुषात्तं स्वमानसिकाऽभिसन्धिं गोपयित्वा वयं बाह्यं तस्मिन्नैर्जीं निष्कपटश्रद्धां व्यञ्जयामः। सा खल्वास्मा-कीनभाषाऽऽस्माकहृद् प्रेरिता न भवति; अतएव सा तस्मिन् स्वप्रभावं नाऽर्पयति, अस्मदीयमनोभावं स पुरुषस्तत्क्षणमेव विभावयति। एतदुदा-हरणे ते वक्तृमहाशया अवसेयाः; यदीयव्याख्यानानि केवलं पुस्तकघोषणं; भवन्ति; तेषां प्रभाव꣸कियत् पतति जनतायाम्। अद्यत्वे ईदृशवक्तॄणां न

जीवन्मुक्तिपदं श्रेष्ठं कर्म्मणा सहजेन च ।
सार्थकं स्वं त्रिनेत्रत्वं विदधेऽहं स्वधाभुजः ॥

आनन्दो हि जीवानां जीवनशक्तेर्निखिलपुरुषार्थानाञ्च मूलं विद्यते । अतश्चानन्दान्वेषण-बहुलप्रयासो जीव आनन्दकन्दस्य सच्चिदानन्दस्य चरणारविन्दमाश्रयन् क्रमेण च वैध्या रागात्मिकायाश्चानन्ददायिनीमुन्नतावस्थामासाद्यावसाने भक्तेः परां काष्ठामधिगत्य कृतकृत्यो भवति । परभक्तेश्चरमपदे समारूढा जीवन्मुक्ता महापुरुषा ज्ञानतः स्वात्मना विभोः परमात्मनः सादृश्यमुपलभन्ते । तदानीं च तदात्मनो न जडात्मिकया प्रकृत्या सम्पर्कः । यतोहि वासनयैव त्रिविधकार्यैरात्मनो बन्धनं भवति । सैव कारणमात्मनस्त्रिविधैः कार्यैर्बन्धने । व्यपगतायां तस्यां कारणाभावात् कथं कार्य्यप्रसक्तिः । परभक्त्या परमात्मस्वरूपावगतौ श्रुत्या प्रतिपादितम्—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चाऽस्य कर्म्माणि तस्मिन् दृष्टे परावरे ॥

इत्यतश्च चितः पुनर्जडेन सह नैव ग्रन्थिस्तिष्ठति । पुनश्चोदीरितं श्रुतिस्मृत्योः—

यदा सर्व्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥
यदा सर्व्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।
अथ मर्त्योऽमृतो भवत्येतदेवानुशासनम् ॥

तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।
यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् इति ।

एवं हि परभक्तिमधिगतो भक्तचिदंशोऽद्य यावत् जडेन सह सम्बलितो ग्रन्थिलः पृथग्भावापन्न आसीत्स साम्प्रतं सर्वव्यापके सच्चिदानन्दमयार्णवे विलीनो न नामरूपात्मकेन जडेन पुनः सम्बद्धो भूत्वा ग्रन्थिलो भवति । किन्तु तदंशवती प्रकृति र्महाप्रकृत्यां चित्सत्ता च सच्चिदानन्दमये महाब्धौ विलीयते इति विवेकः ॥ ७ ॥

प्रसङ्गतो ब्रूते—

**स बीजदाता प्रकृतिश्च योनिः ॥ ८ ॥**

सृष्टिविस्ताराय बीजदाता ईश्वरः पिता क्षेत्रभूता जननी तु प्रकृति र्विद्यते। यथा च क्षेत्रेऽङ्कुरोत्पत्त्यै बीजवापः क्रियते, तथैव प्रकृतिरूपे क्षेत्रे पुरुषबीजाधान-द्वारा सृष्टिचक्रं प्रचलति । यथा हि मनुष्यादि-जीवजगतः सृष्टि-विस्ताराय मातुःक्षेत्रे पितु र्वीर्य्याधानमावश्यकं तथैव प्रकृतेर्मातुःक्षेत्रे परमपितुःपरमेश्वरस्य वीर्याधानद्वारा अनन्तकोटि-ब्रह्माण्डात्मिकायाः विराट्सृष्टेरुद्भवः । यथोक्तं भगवता श्रीमद्भगवद्गीतायाम्—

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत !
तेषां ब्रह्म महद्योनिरहं बीजप्रदः पिता ।

इत्थं हि श्रुतिस्मृत्योरप्युपलभ्यते—

कामस्तदग्रे समवर्त्तताऽधिमनसो रेतः प्रथमं यदासीत् ।
त्वं नः सुराणामपि सन्निधानात् कूटस्थ आद्यः पुरुषः पुराणः ।
त्वं देवशक्त्यां गुणकर्म्मयोनौ रेतस्त्वजायां कविरादधेऽजः ॥
ततः स च परिश्रान्तस्तस्या योनौ जगत्पिता ।
चकार वीर्य्याऽऽधानञ्च नित्यानन्दे शुभक्षणे ॥
अथ सा कृष्णचिच्छक्तिः कृष्णगर्भं दधार ह ।
शतमन्वन्तरं यावज्ज्वलन्ती ब्रह्मतेजसा ॥
शत-मन्वन्तरान्ते च कालेऽतीतेऽपि सुन्दरी ।
सुषाव डिम्बं स्वर्णाऽऽभं विश्वाधाराऽऽलयं परम् ॥

इदमण्डमेव सकलजीवानामाधारो ब्रह्माण्डमुच्यते । संहितायामपि विज्ञानस्यास्य प्रतिध्वनिः संश्रूयते—

द्विधा कृत्वाऽऽत्मनो देहमर्द्धेन पुरुषोऽभवत् ।
अर्द्धेन नारी तस्यां स विराजमसृजत्प्रभुः ॥

पूर्वोक्तविज्ञानेन प्रकृते र्ब्रह्मशक्तित्वेन निरूपणमप्यनया संहितया स्फुटं समर्थ्यते । इत्थमन्यत्रापि स्मृतिभि र्द्धः प्रमाणीकृतम्—'तथा हि—

योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव ह ।
पुमांश्च दक्षिणार्द्धाङ्गो वामार्द्धा प्रकृतिः स्मृता ॥
सा च ब्रह्मस्वरूपा च नित्या सा च सनातनी ।
यथात्मा च तथा शक्तिर्यथाग्नौ दाहिका स्थिता । इति ।

कंश्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त विश्वे ।

( ऋग्वेदसंहिता । )

संस्त्यानं स्त्री प्रवृत्तिश्च पुमान् । ( महाभाष्यम् । )

स्त्रिया आपो भवन्ति स्त्यायनात् । ( निरुक्तम् । )

तम आसीत्तमसा गूढमग्रे प्रकेतं सलिलं सर्व्वं इदम् ।

( ऋग्वेदसंहिता । )

सलिलं सलगतौ औणादिकः इलच् इदं दृश्यमानं सर्व्वं जगत् सलिलं कारणेन संगतं अविभागापन्नं आः आसीत् । ( सायनाचार्य्यः । )

इयं हि महाप्रलय-कालीना प्रकृत्यवस्था वर्णिता दृश्यते । इदानीं हि अव्याकृताया महाप्रकृतेर्गर्भे सर्वोऽपि विश्वः सूक्ष्मतया विलीनस्तिष्ठति। ब्रह्माण्डोपादानीभूता समस्तापि शक्तिः प्रच्छन्नतया प्रकृत्यङ्के विवर्तमाना विराजते ।

अनन्तकोटयो जीवसंस्काराणां महाकाशे विलीयमानास्तिष्ठन्ति । श्रुत्यापि समर्थ्यते चैवम्—

नाऽसदासीन्नो सदासीत्तदानीम् नाऽऽसीद्रजो नो व्योमपरो यत् ।
किमावरीवः कुहकस्य शर्म्मन् अम्भः किमासीद्गहनं गभीरम् ॥

( ऋग्वेदसंहिता )

आपो अग्रे विश्वमावन् गर्भं दधाना अमृतो ऋतज्ञाः ।
यासु देवीष्वधिदेव आसीत्कस्मै देवाय हविषे विधेम ॥

( अथर्व्ववेदसंहिता । )

आपो वत्सं जनयन्ती गर्भमग्रे समैरयन् । ( अथर्व्ववेदसंहिता । )

प्रलयकाले किञ्चिदपि न तिष्ठति। केवलं सर्वव्यापी तमःसञ्चारस्तिष्ठति । "अम्भः" सलिलं तिष्ठति । इदमेवाम्भः कारणवारिशब्देन स्मृतिपुराणादिषु वर्णितं दृश्यते । इयमेवानन्तजीवानां संस्कारराशिसम्वलिताऽव्याकृता प्रकृतिः भाविनो विश्वस्य संस्त्यानशक्तिर्निगद्यते । अस्यामेवाव्याकृतायां महाप्रकृतौ परमेश्वरो वीर्य्याधानेन प्रथमं गर्भं जनयति। अमुमेवाश्रित्य स्मृतिषूपवर्णितं विलोक्यते यद् परमेश्वरो गुणमय्या प्रकृत्या सह लीलाविलासं विदधत्तद्गर्भतोऽसंख्याताः प्रजाः सृजतीति । तदीयवीर्य्याधानैन महत्तत्त्वादिरूपेण क्रमशः सृष्टिविस्तारो भवतीत्यादि । अयमेव विषयः संहिताप्रभृतिषु कियतोपभेदेनोपदिष्टो दृश्यते ।

सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जाऽऽदौ तासु बीजमवासृजत् ॥

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ।
तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम् ।
स्वयमेवाऽऽत्मनो ध्यानात्तदण्डमकरोद् द्विधा ॥
ताभ्याञ्च शकलाभ्यां स दिवं भूमिञ्च निर्ममे ।
मध्ये व्योम दिशश्चाष्टावपां स्थानञ्च शाश्वतम् ।
उद्बबर्हात्मनश्चैव मनः सदसदात्मकम् ॥
मनसश्चाऽप्यहंकारमभिमन्तारमीश्वरम् ॥
महान्तमेव चाऽऽत्मानं सर्व्वाणि त्रिगुणानि च ।
विषयाणां ग्रहीतृणि शनैः पञ्चेन्द्रियाणि च ॥
तेषांस्त्ववयवान्सूक्ष्मान्षण्णामाप्यमितौजसाम् ।
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ॥

इदमेव प्रकृतिक्षेत्रे परमपितुः परमेश्वरस्य बीजाधानफलमूह्यम् । इह बीजशब्देन मनुष्यलोकव्यवहृतं बीजं न गृह्यते । किन्तु यस्याश्चेतन-सत्तायाः प्रभावेण जडापि प्रकृतिश्चेतनायमाना सृष्टिस्थितिप्रलयान् विधत्ते सैवेह चेतनसत्ता 'बीज' शब्दवाच्या ज्ञेया । यतो हि जडतत्त्वे स्वय चैतन्याभावा त्कार्य्य-कर्तृत्वं नैव सम्भवतीति जडायामपि प्रकृतौ कार्य्यकर्तृत्वनिर्वाहार्थं चेतन-सत्ताऽप्यपेक्ष्यत इत्येतदेव श्रुतिस्मृत्युक्तं प्रकृतिक्षेत्रे परमात्मनो गर्भाधानं नान्यत् किञ्चित् । स्मृतिष्वप्युक्तमिदम्—

जडाऽहं तस्य संयोगात्प्रभवामि सचेतना
अयस्कान्तस्य सान्निध्यादयसश्चेतना यथा । इति ।

अस्याश्चेतनसत्तायाः कृते सांख्यदर्शने तु पुरुषसान्निध्यमेव हेतुत्वेनो पन्यस्तं विद्यते । तथा हि—

पुरुषस्य विमोक्षार्थं प्रवृत्यर्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संसर्ग स्तत्कृतः सर्गः । इति० सा० का० ॥

समष्टि व्यष्टिसम्बन्धेन ब्रह्माण्डं पिण्डञ्चेत्युभयमपि एकेनैव सम्बन्धेन गुम्फितं विद्यते । ब्रह्माण्डसृष्टेः पूर्वोक्त-नियमानुसारं पिण्डसृष्टिरपि पुरुष-वीर्य्यप्रकृतिक्षेत्रसम्बन्धेनैवोद्भवति । उद्भिज्ज-स्वेदजाण्डजजरायुज-मनुष्य-पिण्डसृष्टिरपि अनेनैव नैसर्गिकेण नियमेन प्रचलति । उद्भिज्जसृष्टौ तु प्रकृति-बीजशक्ति-विकाशः प्रथमं पुष्पपरागेषु प्रारभते । अन्ते च बीजभूमिसम्बन्धेन कार्य्यरूपे परिणमते । स्वेदजाण्डजादिष्वप्ययमेव नैसर्गिको नियमः स्फुटं

कार्य्यकारी दृश्यते। सुतरामुभयत्रैव ब्रह्माण्डे पिण्डे चायमेव सिद्धान्तः सूक्ष्मतया विराजमानोऽवलोक्यते ॥ ८ ॥

सृष्टितत्त्वे नान्यत् किञ्चिदपेक्ष्यत इत्याह—

चिदचितो नान्यत् ॥ ९ ॥

चिच्च चित्-शक्तिश्च अचिच्च जडशक्तिश्चेति चिदचितौ तयोस्तथोक्तयोः चिज्जडशक्त्योरन्यदपरं न सृष्टौ समपेक्ष्यत इत्यर्थः।

ब्रह्म-तच्छक्त्यो र्व्यतिरिक्तं न किञ्चिदपेक्ष्यते। सृष्टिः वैभवविस्ताराय ब्रह्म तच्छक्तिं विहाय अन्यत् किञ्चिदपि तत्त्वं नापेक्षितमस्ति। चित्प्रधानः पुरुषः सत्प्रधाना च प्रकृतिः परस्परं संगत्य चराचरजगदुत्पत्तिं सञ्चालयतः। विराट् रूपस्यानन्त्यमूले प्रधानकारणतामाश्रिताविमौ प्रकृतिपुरुषावेव स्तः। इत्यत एवोपनिषदि श्रूयते—

> मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्
> तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्। इति।

स्मृतावपि तथैव—

> एका शक्तिः शिवैकोऽपि।
> यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम्।
> क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ !

चित् पुरुषशक्तिः अचित् प्रकृतिशक्तिश्चेत्युभयादृते न किमपि तत्त्वं सृष्टिमूले विद्यते। सन्देहापगत्यै पुनरुच्यते—यत्, सृष्टे र्ये चत्वारः स्तराः सन्ति। यथा—जगज्जनन्या ब्रह्मप्रकृतेः प्राकृतिकी सृष्टिरेका, द्वितीया च भगवतो ब्रह्मणो ब्राह्मी सृष्टिः, प्रजापतीनां मानसिकी सृष्टिश्च तृतीया, चतुर्थी च स्त्रीपुंसयो र्बैजी सृष्टिरिति। इत्येतासु चतसृष्वपि सृष्टिषु इदमेव मौलिकं चिदचिद्रूपं विज्ञानमन्तर्निगूढं विद्यते न किञ्चित्तत्त्वान्तरम्। प्रथमायाम् ईश्वर-स्तत्प्रकृतिश्चेत्युभयं मिलित्वा कार्य्यं सञ्चालयति। द्वितीयस्याञ्च भगवान् ब्रह्मा तत्प्रकृतिं मिलित्वा सम्पादयतस्तत्कार्य्यम्। तृतीयस्यान्तु प्रजापतिगणा स्तदीया इच्छाशक्तयश्च परस्परं संगत्य कार्य्यं प्रचालयन्ति। चतुर्थ्यां सृष्टौ स्त्रीशक्तिः पुरुषशक्ति श्चेत्युभे एव विस्तारयतः स्वकार्य्यं तदिति। इत्थञ्च सर्वत्रैवोक्ते चिदचिच्छक्ती एव कार्य्यसम्पादिके स्तो न किञ्चन तत्त्वान्तरमिति निर्विवा-दसिद्धम् ॥ ९ ॥

सृष्टेः प्रागुभयोस्तत्त्वयोरभेदं संसाधयति ।

प्राग्वियुक्तेर्युक्तौ ॥ १० ॥

वियुक्ते र्वियोगात् प्राक् पूर्वं उभौ प्रकृतिपुरुषौ युक्तौ संसक्तौ स्तः, इति सूत्रार्थः ।

परिदृश्यमानसृष्टेर्विकाशात् प्राग् ब्रह्म तच्छक्तिः प्रकृतिश्च उभे अपि अद्वैत-सत्तायामेव विलीने तिष्ठतः । यथा कस्मिँश्चन व्यक्तिविशेषे शक्तिमति विद्यमाना तच्छक्तिररणि-काष्ठेविद्यमानाऽग्निवत् आविर्भावात् प्राक् तच्छरीरे एवान्तर्निहिता तिष्ठति तद्वदेव ब्रह्मशक्तिस्वरूपा प्रकृतिः सृष्टिविलासविस्तारात् पूर्वं तस्मिन्नेव ब्रह्मणि परमपुरुषेऽन्तर्निलीना तिष्ठति । तदानीं त्रिगुणात्मिकायां साम्यावस्थापन्नायां तस्यां वैषम्याभावात् विषमपरिणामावरोधात् अव्याकृततया ब्रह्मणि सच्चिदानन्दात्मके विलीयमानायां सत्यां न भवति सृष्टि-विभ्रम इति ।

यथा च कस्यचन गायकस्य गानशक्ति स्तस्य गानात् पूर्वं तस्मिन्नेव विलीनाऽद्वैतभावमाश्रिता तिष्ठति, तथैवेयमपि प्रकृतिपुरुषावस्था सृष्टेर्विलासात् प्रागहं ममेतिवदभिन्नानुमेया । यदा च स गायकः स्वगानमारभते तदा ततस्तदीया संगीतशक्ति स्ततः पृथग्भवन्ती व्यक्ततामापद्य विविधैर्लयमूर्च्छना-स्वरैः श्रोतॄन् मुग्धयति । तथैव प्रकृतेरपि व्यक्तावस्थायां जगत्प्रपञ्चसृष्टिरनुमेयेति । यथा च तस्यैव गायकस्य तस्या गानशक्तेस्तस्मिन् विलयनावसरे तद्गीतसङ्गीतैः सह साऽपि शक्तिस्तस्मिन् विलीयाऽव्यक्ततामाश्रयति, तथैव मूलप्रकृतेरव्यक्तावस्थायां तया सहैव जगत्प्रपञ्चं संस्कारात्मकं सच्चिदानन्द-रूपे ब्रह्मणि अद्वैतेऽन्तर्निहितं तिष्ठतीत्यनुमेयमेव । इममेवाभिप्रायमृग्वेदोऽपि श्रावयति । तथा हि—

नाऽसदासीन्नो सदासीत्तदानीं । नाऽसीद्रजो नो व्योम परो यत् ॥
किमावरीवः कुहकस्य शर्म्मन्नम्भः किमासीद्गहनं गभीरम् ।
न मृत्युरासीदमृतं न तर्हि न राज्या अह्न आसीत्प्रकेतः ॥
आसीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास ।
कामस्तदग्रे समवर्त्तताऽधिमनसोरेतः प्रथमं यदाऽऽसीत् ॥
सतो बन्धुमसति निरविन्दन् हृदि प्रतिष्या कवयो मनीषा ।

सृष्टिविमुक्तेः प्राक् अद्वैतभावतो विद्यमानः परमात्मा स्वकार्यं द्विधा विभज्य प्रकृतिमाविर्भाव्य तद्गर्भे विराड्विश्वस्योत्पत्तिं विदधाति । सृष्टेः पू॰ प्रकृतिरव्यक्तावस्थायां पुरुष एव विलीना तिष्ठतीति पर्य्यवस्यति ॥ १० ॥

सृष्टिसम्बन्धतो मतविशेषं निराकरोति—

नानृतत्त्वं शक्तिमत्त्वात् ॥ ११ ॥

शक्तिरस्ति कारणतया अस्मिन्निति शक्तिमान्, तस्य भावस्तत्त्वम् तस्मान्न अनृतत्वम् मिथ्यात्वम् ( तस्य जगतः ) इति सूत्रार्थः। शक्तितो हि जगदुत्पद्यत इति तन्मृषा मिथ्या भ्रमो वेत्यादि वेदान्तादिदर्शनशास्त्रे स्वस्वज्ञानभूमितारतम्यानुसारमेव जगतो मिथ्यात्वप्रतिपादनम्। इह दर्शने तु शक्त्यात्मकप्रकृतेर्नित्यत्वात्ततश्चोत्पन्नस्य जगतः सत्यत्वमेव स्थिरीकृतम्। यस्यां ज्ञानभूमौ साधकः प्रकृत्यतीतं ब्रह्मैव साक्षात्करोति। तत्र प्रकृते स्तद्विलासस्य च जगतोदर्शनागोचरत्वात्तन्मिथ्यात्वप्रतिपादनं युक्तमेव। अस्या एव भूमेर्वेदान्तादि दर्शनमस्ति। परन्तु यत्र भूमौ परमात्मनः साक्षात्कारे जातेऽपि प्रकृतिविलासो यथापूर्वमेव तिष्ठति न तत्र काचिदव्यवस्था भवति। तत्र भूमौ प्रकृतेर्नित्यत्वात् तत्सम्भूतः सृष्टिप्रवाहोऽपि नित्यः सत्य इति सिद्धान्त एव साधुः। इत्यस्मादेवास्मिन्दर्शने सत्यस्वरूपाद्ब्रह्मणः शक्तेरुत्पन्नं, सत्यरूपायाः प्रकृते विलसितं जगत् सत्यमेव गीयते। स्मृतावप्युक्तम्—

सत्याद्भूतानि जातानि सत्यं भूतमयं जगत्।
ध्रुवा द्यौः ध्रुवा पृथिवी ध्रुवा सपर्वता इमे।
ध्रुवं विश्वमिदं जगत् ध्रुवो राजा विशामयम्।
ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः।
ध्रुवन्ते इन्द्राग्नी च राष्ट्रं धारयतो ध्रुवम्।

सत्यादेव भूतगणानामुत्पत्तिः। भूतमयञ्चेदं जगदपि सत्यस्वरूपमेव। इत्थञ्च पृथिव्या आकाशस्य पर्वतानां विश्वस्य जगतो देवानां च ध्रुवत्वे कः सन्देहः। विशेषतश्च यदा आध्यात्मिकायाः सृष्टेरनाद्यनन्तत्वं स्वीक्रियते, यदा प्रवाहरूपेण चानन्तकोटिमितायाः ब्रह्माण्डसृष्टे नित्यस्थायित्वमपि दार्शनिक-विज्ञानतः संसिध्यति, यदा च विज्जडग्रन्थिरूपाणां जीवाना मुत्पत्ति प्रवाहस्तथा प्रवाहात्मना अनन्त-कोटि-पिण्डोत्पत्तिरूपायाः सृष्टेः सत्तापि दार्शनिक युक्त्यनुकूलौ एव स्तः, तदा ब्रह्मशक्त्युत्पन्नस्य तद्विलासात्मकस्य सृष्टिप्रपञ्चस्याऽप्यस्य सत्यत्वमवश्यमङ्गीकर्तव्यमेवेति ॥ ११ ॥

सम्प्रति मतान्तरन्निराकरोति—

ब्रह्मेशयोरैक्यं पार्थक्यन्तु प्रकृतिवैभवात् ॥ १२ ॥

ब्रह्म च ईशश्च ते तथोक्ते तयोरैक्यम् अभेदः। पार्थक्यं भेदस्तु प्रकृते र्मायाया वैभवात् विलासाद् प्रतीयत इति सूत्रार्थः।

ब्रह्म ईश्वरश्चेत्युभेऽपि अभिन्नेएव तत्र या कापि भेदप्रतीति र्भवति तत्र मायासम्बन्ध एव कारणम् । वेदान्तादि-शास्त्रेषु स्वकीय-ज्ञानभूमिपुष्टि-सम्पादनाय ईश्वरं मायोपाधिकमुक्त्वा तस्य ब्रह्मपदान्न्यूनस्थानाधिष्ठातृत्व-मभिहितम् । तथा हि—

चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता ।
तमोरजः सत्त्वगुणा प्रकृतिर्द्विविधा च सा ॥
सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते ।
मायाबिम्बं वशीकृत्य तं स्यात्सर्वज्ञ ईश्वरः ॥
मेघाकाशमहाकाशौ विविच्येते न पामरैः ।
तद्वद्ब्रह्मेशयोरैक्यं पश्यन्त्यापातदर्शिनः ॥
उपक्रमादिभिर्लिङ्गैस्तात्पर्य्यस्य विचारणात् ।
असङ्गं ब्रह्म मायावी सृजत्येष महेश्वरः ॥
सत्यं ज्ञानमनन्तञ्चेत्युपक्रम्योपसंहृतः ।
यतो निवर्त्तते तस्मादसङ्गत्वविनिर्णयः ॥
मायी सृजति विश्वं सन्निरुद्धस्तत्र मायया ।
अन्य इत्यपरा ब्रूते श्रुतिस्तेनेश्वरः सृजेत् ॥
आनन्दमय ईशोऽयं बहुस्यामित्यवैक्षत ।
हिरण्यगर्भरूपोऽभूत् सुप्तिः स्वप्नो यथा भवेत् ॥

इत्थं चानेकानि प्रमाणानि वेदान्तादिशास्त्रेषु समुपलभ्यन्ते । सांख्य-दर्शने यत्स्वज्ञानभूम्यनुसारेण प्रत्यक्षस्यानुमानस्य च लक्षणं कृतम् तेन लौकिकेन प्रमाणेन नेश्वरसिद्धिर्भवतीति 'ईश्वरासिद्धेः' इतिसूत्रभाष्ये "ईश्वर-स्यालौकिकेन प्रत्यक्षेण सिद्धौ सत्यामपि एतेन प्रत्यक्षलक्षणेन नेश्वरः सिध्यती-त्यादिना स्वज्ञानभूमौ ईश्वरासिद्धिः प्रकल्पिता विद्यते । अग्रे च "योगिनाम-बाह्यप्रत्यक्षत्वान्न दोषः" इति सूत्रेण अलौकिक प्रत्यक्षविचारणयेश्वरसिद्धिरपि कृतैवास्ते ।

# सूर्योदयः।

नवमे वर्षे } चैत्रस्य पूर्णिमा सं० १९९१ { दशम-संख्या


## सम्पादकीया अभिप्रायाः।

---

### सनातनधर्म्मः संस्कृताध्यायि-वर्गश्च।

इह काश्यां सम्प्रति पञ्चसहस्रतोऽप्यधिकाः संस्कृताध्यायिनश्छात्राः सन्ति। ये खलु सर्वथा सनातनधर्मश्रद्धालुभिरेव वृत्तिप्रदान-विद्यालयोद्घाटनादिभिः साहाय्यकरणेनाध्याप्यन्ते। परन्तु इहत्या वा वहिस्था वा सर्वेऽपि संस्कृताध्यायिनः सनातनधर्मस्य किमुपकुर्वन्ति। इमे तु केवलं राजकीय-संस्कृतपरीक्षापरायणाः सन्तः सन्ध्यावन्दनादिकमपि परित्यज्य परीक्षापाठ्य-ग्रन्थाभ्यासपरा एव समयं यापयन्ति। न किमपि धर्मशास्त्रपुस्तकमधीयते नापि धर्मोपदेशादिकं कर्तुं व्याख्यानकलासु शिक्षन्ते। किं बहुना एतेषां प्रमादालस्यत एव लब्धावसरा अन्ये इङ्लिश-भाषाध्यायिनोऽज्ञात-धर्मगन्धा अपि सर्वतः सभायां, धर्मप्रचारे सर्व-विधान्दोलने, यस्मिन् कस्मिन्नपि धार्मिक-विचारे, धर्मविवादेऽग्रेसरा भवन्ति। इमे चाधीतव्याकरणाचार्य्यग्रन्था अपि धर्मशास्त्रीयोपदेशकग्रन्थाध्ययनाभावतो मूका भूत्वा, तत्रैव संसदि समुपविष्टास्तेषामधर्मव्याख्यानं शृण्वन्तो मनसि समुद्विजमाना अपि वाक्शक्ति-शैथिल्यादुपदेष्टुमसमर्था वैपरीत्येन तेषामधर्मव्याख्यानमेव समर्थयन्ति। यतोहि तत्र संसदि अधर्मव्याख्यातॄनविरोधयत इमान् दृष्ट्वा साधारण-जनता तु इदमेवावगच्छति। यदस्य व्याख्यातुरुपदेशनं समीचीनमेव धार्मिकञ्च विद्यते। यतो हि सनातनधर्मधुरन्धरोऽयं पण्डितोऽत्र वर्तमानोऽपि न विरोधमाचरतीति।

एवमिदानीं संस्कृताध्यायिनः सनातनधर्मं हसयन्ति एव, नाण्वपि तमुपकुर्वन्ति। स्वयमपि सदाचारादि-शिक्षाभावा देशकालात्मादि-विज्ञानाभावाच्च वर्तमानसभ्यसमाज-बहिर्भूता एव तिष्ठन्ति। इदानीं सर्वत एव प्रसृतं देशप्रेम्णः प्रथमं चिह्नं स्वदेशनिर्मित-परिधानं स्वदेशिव्रतपालनमपि इमे न कुर्वन्ति। यद्वि

एषां प्रधान-कृत्यमासीत् जनतायाः प्रबोधनं तासु स्वदेशिव्रतपालनादिप्रचारः, वैदेकशि शर्करा-वस्त्रादि-वस्तुपरित्यागकरणोपदेशः। तत् किमपि इमे न कुर्वन्ति येनाधुनिका नवशिक्षिता इमान् देशभारभूतानवगच्छन्ति। तत्पथानुगाश्च जनाः शनैः शनैः संस्कृतशिक्षायां मन्दादरा भवन्तः सनातनधर्मे श्रद्धामपि शिथिलयन्ति। मया च बहवः परस्परम् एवं कथयन्तो धनिका अवलोकिता यत् "संस्कृतच्छात्रेभ्यो वृत्तिं दत्वा किं फलं भविष्यति। ते तु किमपि देशोपकारकृत्यं न कुर्वन्ति। स्वदेशजं वस्तु जातमपि न व्यवहरन्ति। केवलं स्वोदरभरणं कृत्वा किमपि विकृतं ज्ञान मुपार्जयन्ति। येन ते नापि धार्मिक-प्रचारं नैव सामाजिकं कृत्यं नैव किञ्चिद्देशकालोपयुक्तं कर्माचरन्ति। अतो वै इंग्लिशाध्यायि वर्ग एव वृत्तिप्रदानादिनाऽनुग्राह्य इति।"

पश्यन्तु एवन्तु भवतां सहायका भवद्विषये विमृशन्ति। भवन्तश्च नेत्रे निमिल्य केवलं राजकीयपरीक्षादान-पराः स्वधर्मशास्त्रादि-ग्रन्थाध्ययनमपि नाचरन्ति। यद्येवमेव शनैः शनैः सनातनधर्मह्रासदशैव वर्द्धिष्यते चेत्कथमृषीणामृणाद्भवतां विमुक्तिः? कथं वा स्वजीविकानिर्वाह एव सामग्रीगसा प्रकारेण सेत्स्यति। यत्साम्प्रतं भवन्तो महदुरुस्थलीयान श्रेष्ठिनोऽत्र काश्यां स्वसहायकान् पश्यन्ति। तांश्च सनातनधर्म-श्रद्धया द्रवीभूतान् पश्यन्तु। ते तु यथाकथमपि स्वपापसंगोपनायैव दृश्यं धर्मकृत्यं कुर्वन्ति। येन च वैदेशिक-वस्तु-विक्रयतो देशद्रव्य-बहिः प्रेषण-पापेन कियतैव कालेन दरिद्रायमाणाः सर्वमपि स्वीयं धर्मकृत्यं त्यजन्ति। तेषां धर्मश्रद्धापि स्वख्यातिपरायणा वैदेशिक व्यापारसमेधनपरा कियद्दिनं यावत्स्थास्यति। "यावत्तैलं तावद् व्याख्यानमिति" न्यायानुसारं यावत्ते घृतादिषु वसा-मेदःप्रभृतिमिश्रणेन पापद्रव्यमुपार्जयन्ति तावत् तस्यैव स्वपापस्य संगोपनार्थं विद्यालयादिकं चालयन्ति।

"अधर्मेणैधते तावत् समृद्धिश्चापि पश्यति।
ततः सपत्नान् जयति समूलं तु विनश्यति॥"

इति नियमाद्विनष्टे द्रव्ये (दिवाला निकालकर) आत्मानं ततो मोचयित्वा मुक्ता भूत्वा सर्वमपि स्वधर्मकृत्यं परित्यजन्ति। तर्हि तेषामाश्रयेण कियान् लाभः स्यात्सनातनधर्मस्य कियत्कालं वा इति हृदये विमृशन्तु। तेषामाश्रयेणैव सनातनधर्मेऽपि कूपमण्डूकत्वादि दोषः समापतितो दृश्यते। किं बहूक्तेन विज्ञा विद्वांसः सर्व मिद मवगच्छन्त्येवेति अल मेतावता।

अतो वै सम्प्रत्यपि समये उत्तिष्ठन्तु इतोऽखिलभारतवर्षीयसंस्कृतविश्वविद्या-

लयतः प्रचालितां धर्मोपदेशकादि परीक्षां दत्वा सम्यक् व्याख्यानशक्तिं वर्द्धयित्वा स्वसनातनधर्म-गौरवं रक्षन्तां सर्वर्द्धयन्तां जनतायां स्वसनातन-धर्मश्रद्धां संस्कुर्वन्तां स्वबुद्धिं धर्मोपदेशदान-शक्तिसम्बर्द्धनेन। विद्यालयाध्यक्षाश्चेतो नियमावली गृहीत्वा स्वविद्यालये केन्द्रसंस्थापनेनोपकुर्वन्तु संस्कृताध्यायिवर्गं। यत्र दशच्छात्रा धर्म परीक्षां दातारो भविष्यन्ति। तत्रैव केन्द्रस्थापनं भविष्यति। नास्ति कियानपि व्ययो विश्वविद्यालयीय-धर्मकेन्द्रस्थापने। एतादृशः शोभनोऽवसरो न विस्मरणीयः संस्कृताध्यायिभिःस्वाभाविकालस्य-प्रमादादि-दोषाभिभूतैरिति भूयो भूयो विज्ञापयामः। सनातनधर्म-रक्षार्थं पुनरपि तानेकदा बद्धपरिकरान् द्रष्टुकामा वयं सर्वथापि तेषां साहाय्यं करिष्यामः। ते मार्गेऽस्मिन्नग्रेसरास्तु सन्तु। स भगवान् सनातनधर्म-गोप्ता मनुरप्येवमेवाभिदधाति।

"धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।"

यदि संस्कृताध्यायिनश्छात्राः सनातनधर्म-रक्षार्थं सन्नद्धा भविष्यन्ति। तर्हि तेषामपि वर्तमानकालिकी दुरवस्था नैव स्थास्यति। तेऽपि सर्वत्र समाजे सभायां जनसम्मर्दे समादृता भवन्तः स्वजीवनोपायमपि साधु सञ्चालयिष्यन्तीति विरमामो विस्तराद्।

× × × × ×

## व्याख्यान-विशारदादिपरीक्षाः।

—:०※०:—

सूर्योदयपाठकानां संस्कृताध्यायिनामिदं विदितमेवास्ति यद् अखिल-भारतवर्षीय संस्कृतविश्वविद्यालयीय-(परीक्षायूनिभर्सिटी) परीक्षाणां वृहती नियमावली मुद्रयित्वा प्रकाशिता विद्यते। प्रार्थयितृभ्योऽमूल्यं वितीर्य्यते च। तत्र विशेषतोऽवधान-दानयोग्यमिदं विद्यते यदिदानीं सर्वत एव सुधारकाः पाश्चात्यशिक्षया विकृतमस्तिका विदूषितान्तःकरणाश्च स्वज्ञानानुरूपं सर्वत्रैव भारतीयसंस्कृतौ तेषां ज्ञानतस्तु सुधारं वस्तुतस्तु कुधारमेवाभिलषन्ति।

यो हि पन्था स्तेभ्यो रोचते तेनैव पथा सर्वानेव भारतीयान् जनान् नयन्ति जनता अपि अस्माकं संस्कृतज्ञानां प्रमादालस्यादि दोषात् किं कर्तव्य-विमूढा तयैव दिशा व्रजति। इत्येवं विकटे समये समुपस्थिते किमस्माकं संस्कृतज्ञानां कर्तव्यम् इति विचारयन्तु भवन्तो ब्राह्मणाः क्षत्रिया वैश्या वा भारतीय-सभ्यतानुरागिणः? इत्यस्माकं प्रश्नः?

अस्तु नाम, अत्रावधान-दानेन विमृशन्तु कार्य्यक्षेत्रे च समायान्तु भवन्त इत्यस्माकमभ्यर्थना। इत्येवं सर्वतो धर्मश्रद्धाह्रासं सनातनधर्मप्रचाराभावं च विलोक्य श्रीभारतधर्ममहामण्डलसञ्चालकैः अ० भा० सं० विश्वविद्यालयतो धार्मिक-परीक्षाणां प्रबन्धो विहितः। यत्र १ धर्माचार्य्य २ महोपाध्याय-३ पुरोहितरत्न-४ देवार्चनविशारद-५ व्याख्यान वाचस्पति-६ राष्ट्रभाषाभास्कर—७ राष्ट्रभाषाविशारद प्रभृतयः—इत्येताः परीक्षा निबन्धलेखेन भविष्यन्ति। यत्र कुत्रापि स्थित्वा इमाः परीक्षास्तु निर्दिष्टानां ग्रन्थानामभ्यासम् विधाय केवलं प्रतिवर्षं निर्दिष्टनिबन्धं लिखित्वा प्रधानकेन्द्रे प्रेषणेनैव भवन्ति।

अवशिष्टाः १ व्याख्यानविशारद—२ आचार्य्य-३ शास्त्रि-४ प्रभृति-परीक्षास्तु प्रतिवर्षं केन्द्रेषु समुपविश्य प्रश्नपत्रोत्तर-लेखेनैव गृहीता भवन्ति। तत्र सर्वासां परीक्षाणां पाठ्यग्रन्थ-नियमादि-निदर्शन मत्यावश्यकमितिसंक्षेपेण दर्शयामः।

१ व्याख्यान-विशारदपरीक्षा, २ धर्मप्रवेशिका-परीक्षा, ३ (धर्म) प्रथमा ४ (धर्म) मध्यमा चेति। इमाः परीक्षास्तु सम्प्रति संस्कृतच्छात्राणां कृते कल्पवल्लीकल्पाः सन्ति। यतो हि आसु परीक्षासु त एव धर्म-ग्रन्थाः सन्ति। येषामध्ययन मनायासं कृत्वा संस्कृतच्छात्राः सम्यग् व्याख्यानं दातुं योग्याः भविष्यन्ति। धर्मस्य, सदाचारस्य च ज्ञानेन सह स्वजीविकोपार्जनादि-कर्मणि सम्यक् कुशला भविष्यन्ति। इदानीमुत्तीर्णाऽचार्य्यपरीक्षा अपि संस्कृतच्छात्राः स्वजीवननिर्वाहं कर्तुमसमर्था एव भवन्ति। यदि ते व्याख्यान-विशारद-परीक्षा मुत्तरिष्यन्ति चेत्तदा ते व्याख्यानादिना स्वजीविकोपार्जनं कुर्वन्तः सम्प्रति सर्वतः सर्वथा प्रवर्द्धमानं सुधारकाणामधर्म—प्रवाहमपि निरोद्धुं समर्था भविष्यन्ति। अतः शीघ्रं समुद्यता भवन्तु भवन्तः। अयमेव समयः परीक्षावेदन-प्रदानस्य। अस्मिन् वर्षे शुद्धवैशाख पूर्णिमां ( मई मासस्य २८ विंशतिं तिथिं यावत् ) यावत् परीक्षाऽवेदनपत्राणि गृहीतानि भविष्यन्ति। परीक्षाश्च कार्तिक-मासे कृष्णपक्षे पञ्चमीतः प्रारब्धा (अक्टूबरमासस्य २७ सप्तविंशतितमतिथितः) भविष्यन्ति। आसु परीक्षासु अधिकमङ्कं लप्स्यमानानां छात्राणां कृते पारितोषिकमपि दीयते। इति स्वर्णे सुगन्ध-समवायः। परीक्षोत्तर-पत्राणां लेखनं संस्कृत-हिन्दी-भाषयोरन्यतरस्यां दातुं शक्यते। सर्वविधो नियमोऽस्यैवाङ्कस्य क्रोडपत्रे द्रष्टव्यः।

## शोकोच्छ्वासः।

—०❀०—

काशीस्थानानां मरुदेशाभिजानानां परम-प्रसिद्धानां पण्डितदेवकीनन्दन शास्त्रिणां मार्चमासस्य ४ चतुर्थ्यां तिथौ रवि वासरे इह श्रीभगवतो विश्वनाथस्य नगर्य्यां निधनमभूदिति विषीदति काशीस्था विद्वन्मण्डली तद्वियोगे। ते हि पण्डिता दर्शनशास्त्रे निष्णाताः स्वोद्योगेनेह काश्यां स्वशिष्यान् श्रेष्ठिनः समुपदिश्य टेकमणि कालेज नामकमेकं संस्कृतमहाविद्यालय मपरां विश्वनाथसंस्कृतपाठशालाञ्चेति संस्थाद्वयं समुद्घाटितवन्तः। याभ्याञ्च सहस्रशः संस्कृतच्छात्रा अधीत्य विद्वांसः संजाताः। एवमेव तेषा मुद्योगेनैव विद्याविरहिते मरुदेशेऽपि शेखावाटीसंस्कृतविद्यालयः श्रेष्ठिभिः समुद्घाटितोऽधुनापि प्रचलति। ते हि महोदयाः काशीस्थस्य श्रीविशुद्धानन्द-संस्कृतविद्यालयस्याभ्युदयार्थं साधु परिश्रमं कृतवन्तः। श्रीभारतधर्ममहामण्डलीयोपाधिना अलङ्कृताः सन्तः अ० भा० सं० वि० विद्यालय-सञ्चालक-समितिसदस्या अपि आसन्।

किं बहुना तेषां महात्मनां बहुत्र संस्थासु काशीस्थासु बहिस्थासु च परामर्श-साहाय्यदानादिना सम्पर्क आसीदिति। अधुना तेषामभावात् संस्कृत-वाङ्मयस्य महती क्षतिः सञ्जाता। तेषां शोकेन विदीर्ण हृदयाः काशीस्था विद्वांसः श्रीगोयनका महाविद्यालयाध्यक्षाणां श्रीमतां चण्डीप्रसाद शुक्लमहोदयानां सभापतित्वे शोकसभां कृत्वा तदीयकुटुम्बेभ्यः सान्त्वनां प्रददतस्तच्छिष्यानुनुरोधितवन्तश्च यत् "धनिनः श्रेष्ठिनस्तच्छिष्याः काशीस्था बहिस्थाश्च सर्वेऽपि तेषां स्मृतिरक्षार्थं दशानां दर्शनविद्यार्थिनां कृते दर्शनशास्त्राध्ययनार्थं वृत्तिप्रबन्धं सार्वकालिकं विदध्युरिति।"

तद्धि कृत्यं तच्छिष्याः श्रेष्ठिनोऽवश्यं विधास्यन्तीत्यस्माकमपि धारणा दृढास्ति। अन्ते च सर्वथा काशीपतिं श्रीविश्वनाथं तेषामात्मनश्चिरशान्त्यै तत्कुटुम्बेभ्यो धैर्यप्रादानार्थञ्चाभ्यर्थयामहे। इति।

---

## राजा सर मोतीचन्दः।

—:❀:—

श्रेष्ठिवर्य्योऽयं विहायेमं लोकं परलोकं प्रस्थित इति काशीस्था जनता परं

विषादमश्नुते। सर्वा हि शिक्षा-धर्म-समाज-राजकीय-संस्थास्तस्य निधनेन शोक-सन्तप्ताः तस्मिन्नहनि निरुद्धाः समजनिषत। स हि महाभागो नागरिकाणां यथा परमप्रिय आसीत्तथैव राजकर्मचारिणामपि श्रद्धास्पदमभूत्। धर्मसंस्थाया यथा सञ्चालयिता आसीत्तथैवान्यासामपि संस्थानां। बह्व्यः समाज-शिक्षासंस्था अपि तस्य साहाय्येन संरक्ष्यमाणा आसन्। श्रीभारतधर्ममहामण्डलस्य तु बहुकालात् स परम-सहायक आसीत्। निधनकालावधि स महाभागः तदीयार्थ विभागसदस्योऽभूत्। ततः प्राप्तः 'काशीरत्नम्' इत्युपाधिस्तस्यैव समुचितोऽभूत्। काशीस्थैश्च स नगर-श्रेष्ठीत्यभिधीयते स्म। तस्मात् बहवो जना इहोपकृता भवन्ति स्म। ते सर्वेऽपि विषण्णचेतसो रोरुद्यमाना अवलोक्यन्ते। इदानीं राज्ञः सर मोतीचन्द्-निधनतो या हि हानिः श्रीभारतधर्ममहामण्डलस्य संञ्जाता सा हि दुःसहा विद्यते। सर्वथा काशी-विश्वेश्वरस्तदात्मनः शान्ति वितरन् तदीय-कुटुम्बेभ्यस्तद्वियोग सहनधैर्य्यञ्च वितरत्विति महामण्डलीयाः सर्वे तद्वियोग-सन्तप्ता स्तत्कुटुम्बैः सह समवेदनां प्रकटयन्ति।

---

## उपदेशकमहाविद्यालयः।

—:*:—

इह काश्यां बहुकालादासीदीदृशस्य उपदेशकमहाविद्यालयस्य प्रयोजनम्। यतो हि काशीनगरी संम्प्रति हिन्दुधर्मस्यादर्शभूता विद्यते। अत्र हि सहस्त्रशः संस्कृतज्ञा विद्वांसो विद्यार्थिनश्च तिष्ठन्ति। परन्तु तेषु उपदेशकला शिक्षाया अभावाद् हिन्दुधर्मस्य तादृशः प्रचारो न भवति स्म, यथा साम्प्रत मपेक्ष्यते। इदानीमस्य विद्यालयस्य संस्थापनया सर्वथा सोऽभावो दूरीभूतो भविष्यति। अस्मिन् विद्यालये श्रीभारतधर्ममहामण्डलतः प्रतिष्ठापिताखिलभारत-वर्षीय संस्कृत-विश्वविद्यालय-( परीक्षा यूनिवर्सिटी ) परीक्षायां निर्धारिता एव ग्रन्था अध्याप्यन्ते। अत्राधीयानेभ्यश्छात्रेभ्यः समुत्तीर्ण-परीक्षेभ्यः पारितोषिकमपि वितीर्य्यते।

अस्माद्वर्षादिहैव विद्यालये काशीस्थानां अखिलभारतवर्षीय-संस्कृतविश्व-विद्यालयीय-सर्वविधपरीक्षादीत्सूनां छात्राणां कृते परीक्षाकेन्द्रव्यवस्थाऽपि कृता विद्यते। प्रतिदिनञ्च नियमतो वाद्मत्रयतो ( लक्ष्मीकुण्ड परिव्राजक महा-मण्डले ) व्याख्यान-विशारद धर्मप्रवेशिका प्रभृतिपरीक्ष्यग्रन्थानामध्यापनं

भवति। प्रत्यष्टमि प्रतिप्रतिपदश्च सर्वेषामेव काशीस्थच्छात्राणां कृते व्याख्यानकलाशिक्षायाः परीक्षणं भवति। अस्य विद्यालयस्य प्रधानसञ्चालकाः काशीस्थाः परम प्रसिद्धा दर्शन केशरिणः महोपदेशकाः श्रीमन्तः पं० श्रीगोपालशास्त्रिणः साहित्याचार्य्या न्यायतीर्था व्याकरण शास्त्रिणः सन्ति। अध्यापकाश्च शास्त्रमर्मवेत्तारो वेदान्तशिरोमणि श्रीस्वामि ब्रह्मानन्द-महोदयाः, साहित्यशास्त्रिणः पं० श्रीसरयूप्रसादशास्त्रिणः हिन्दीरत्नमहाशयाः तथा महोपदेशक पं० शिवकुमारशास्त्रि काव्यतीर्थ-प्रभृतयः सन्ति।

अस्यैव उपदेशकमहाविद्यालयस्य विशेषाधिवेशनं राजकीयसंस्कृतपरीक्षावसरे भारतप्रसिद्धानां व्याख्यानवाचस्पतीनां श्रीमतां श्रीस्वामि-दयानन्दजी महाराजमहोदयानां सभापतित्वे महता समारोहेण सम्पन्नम्। यत्र च संस्कृतज्ञानां छात्राणां विदुषाञ्चोपदेशक-कलाशिक्षणस्यावश्यकता-विषये प्रस्तावः सर्व सम्मत्या स्वीकृतोऽभूदतश्चेह संक्षेपतो वयं सर्वानेव काशीस्थान् विदुषोऽनुनयविनयपुरःसरमनुरुन्ध्महे। यदिह उपदेषक विद्यालये स्वच्छात्रान् सम्प्रेष्य धर्मोपदेशकशिक्षां दापयेयुरिति।

इदानीं हि धर्मोपदेशककलाया अभावादेव संस्कृतज्ञा विद्वांसो ज्ञातधर्ममर्माणोऽपि सभासमित्यादिषु न किञ्चिद्वदन्ति। येन धर्मप्रचारः शैथिल्यं गतोऽस्ति सर्वथाऽधर्मप्रचार एव यत्र तत्र पाश्चात्यशिक्षाविकृतमस्तिष्कैः कृतो दैनंदिनं समेधते। ग्रामादिषु नगरेषु वा सर्वत्रैव सम्प्रति पाश्चात्यन्यायालय-शिक्षालय प्रभृतिभ्यो मिथ्याव्यवहारादयो दोषा दिने द्विगुणा रात्रौ चतुर्गुणा वर्द्धन्ते। अतश्चाधुना नास्ति विचारावसरः। सर्वथा बद्धपरिकरा भूत्वा सर्वेऽपि संस्कृताध्यायिनोऽस्मिन् कर्मणि व्याप्रियन्ताम्।

श्रीभारतधर्ममहामण्डलतो धर्मप्रचारार्थमेव अ० भा० सं० विश्वविद्यालय-(परीक्षायूनिभर्सिटी) तः धर्मपरीक्षा अपि विविधा व्यवस्थापिता विद्यन्ते। यासां सूचना इहैवान्यत्र संक्षेपेण प्रकाशिता विद्यते। ताः परीक्षा अपि दातुं सर्वेऽपि छात्राः काशीस्था वहिस्थाश्च सन्नद्धा भवन्तु।

उपदेशकमहाविद्यालय सञ्चालका अपि विज्ञाप्यन्ते यत्ते सर्वत्रैव काशीस्थविद्यालयेषु गत्वा स्वविद्यालयीयं साप्ताहिकमधिवेशनं कुर्य्युः। येन स्यात्संस्कृताध्यायिषु धर्मोपदेशशिक्षासमुत्साह इति विरमामो विस्तराद्।

अ० भा० सं० विद्यालयस्य मुख पत्रम् ।

## सूर्य्योदयः ।

श्रीमन्तो महानुभावाः

सूर्य्योदयोऽयं श्रीमतां लेखानुग्रहमपेक्षते । अतो वयं श्रीमन्तः सादरं सविनयमभ्यर्थयामहे यदवश्यं कस्मिंश्चिदपि धार्मिक-सामाजिकैतिहासिकादि संस्कृताभ्युदयसमद्र्धके विशेषतश्च संस्कृतच्छात्रोपयोगिनि विषये सरलसरलं सुस्पष्टं भावसम्भृतं नातिदीर्घं लेखं सम्प्रहित्यानुग्रहीष्यन्ति इति ।

सम्प्रति पत्रमिदं देशे विदेशे सर्वत्रैव प्रसृतप्रचारं संस्कृतवाङ्मयस्याद्वितीयं रत्नं विद्यते । अतश्च श्रीमतां लेखकाञ्चन संयोगमपेक्षमाणं ।

'रत्नं समागच्छतु काञ्चनेन'

इति सदुक्तिमपि सफलयेदित्यवश्यं विधेयैव लेखप्रेषणानुकम्पेति ।

निवेदको मन्त्री—
सूर्य्योदय सम्पादकसमितिस्थः ।
भारतधर्ममहामण्डल जगत्गञ्ज काशी ।

---

## समभ्यर्थना ।

अयि संस्कृत सेवकाः सुधियः सुमेधसोऽन्ते वासिनश्च ।

सर्वगुणसम्पन्नस्य सर्वथा संस्कृताभ्युदयार्थं यतमानस्यास्य सूर्य्योदयपत्रस्यायं नवमोऽङ्कः समाप्ति मेति । अस्य पत्रस्य बहवो ग्राहकाः सन्ति, प्रचरति पत्रमिदं भारतवर्षस्य प्रतिमण्डलं प्रतिप्रान्तं च । तथापि अस्माकं सन्तोषकरीअस्यग्राहकसंख्या नाद्यापि सञ्जातेति विषीदति चेतः ।

पश्यन्तु भवन्तः, सर्वेऽपि स्व-स्ववर्गाभ्युदयार्थं सर्वथा यतमाना आकाश पाताल मेकीकुर्वन्तोऽवलोक्यन्ते । परन्तु भवतां सर्वप्रकारेण सेवकस्य संस्कृत-परीक्षाफलञ्च सर्वप्रथमं निःसार्य्य भवतां सन्तोषप्रदस्यापि अस्य सूर्य्यदयस्या ल्पीयसी ग्राहक-संख्या भवतो न लज्जापयतीत्याश्चर्य्यास्पदम् ।

अस्तु सम्प्रति भवन्तः परीक्षातो विमुक्तास्तिष्ठन्ति । अतश्च भवन्तु प्रत्येकमेकं नूतनं ग्राहकं सम्वर्द्धयितुं प्रतिजानीयादित्यस्माक माग्रहः । संस्कृत विद्यालस्थाश्छात्राश्च प्रतिच्छात्र मेकमाणकं संगृह्य षोडशभिश्छात्रैरेकं रूप्यकं सम्पाद्य प्रतिसंस्कृतपाठशालं सूर्य्योदयमवश्यं गृह्णीयुरिति सानुरोधं सानुनयं सविनयमभ्यर्थयामहे । भवतां कृते हि रूप्यकमेव तस्य मूल्यमस्माभिर्निर्धारितम् । संप्रति भवन्त ईदृशमौदासिन्यं विहाय कियदपि तु कार्य्य-कर्तृत्वं दर्शयन्तु । किं बहुना गिरा देव्या भवन्त एवेदानीं हस्तावलम्बदातारः सन्तीत्यलं विज्ञेषु बहूक्तेन ।

भवतामनुग्रहेच्छुः, मंत्री—
सूर्य्योदयसञ्चालनसमितेः
भारतधर्ममहामण्डल जगत्गंज बनारस ।

## श्रीरामचन्द्रं भजे ।

( ले०—वासुदेव द्विवेदी, श्रीछत्रधारिसंस्कृतविद्यालय हथुवाराज्य । )



दृष्टिः पश्यति हर्षिता, वितनुते शब्दग्रहोऽप्याग्रहम्-
वाद्यादिश्रवणाय, नृत्यति पुनस्तृप्ता रसज्ञाऽऽनने ।
मौग्ध्यं गन्धवहा दधाति, मुदितं चेतश्च यस्योद्भवे
तं प्रीत्या परया प्रसन्नवदनं श्रीरामचन्द्रं भजे ॥ १ ॥

—:०:—

## मोहमदीय·कवीनां नन्दनन्दने भक्तिः ।

प्रणेता—चन्द्रकुमारशर्म्मा 'शाण्डिल्यः' शास्त्री मौलत्राणः ।

पुरा किल कविशिरोमणिः श्रीतुलसीदासः तथा भक्तराण्महामनाः श्रीसूरदासश्च हिन्दीसाहित्यरत्ने बभूवतुः । इमौ द्वावेव भगवल्लीनमनस्कौ भक्तिरसं सम्यक्तया स्वमस्तिष्कसिन्धुं सुमथ्य विचार-मन्दिरगिरितो निरगमवताम् , इति जानन्त्येव सर्वे सुविद्याः ।

तयोः प्रभुपदानुरागः सर्वत्र जागर्ति । परं ते यवनाः, अपि धन्या ये खलु "शेख, मुगल, पठान" जातौ गृहीतजन्मानोऽपि विष्णौ विश्वासवितानं विस्तारयन्तः स्वजनित–प्रारभ्यामरणं गोपेशभक्तिं न मुमुचुः । वाचकमहोदयाः ! यथा श्रीसूरदासः "गणिकागजगोतमपत्नीनां" कथानकैर्देवे स्वश्रद्धाभावमदर्शयत् तथैव यवनेषु रसखानकवि–तत्र श्रद्धधे—

द्रौपदी औ गनिकागजगीध अजामिलसों कियो नेकु निहारो ।
गोतमगेहिनी कैसे तरी प्रहलादको जु तू हर्यो दुःख भारो ।
काहे तू सोचकरे रसखान ! कहा करि है रविनन्द बिचारो ।
कौन की संक परी है जु माखन चाखन हारो है राखन हारो ।

'गजादयोऽपि भगवता प्रसादेन तेरुः, ममापि तरणं तत् प्रसादेन भावि, इति महाकविः रसखानोऽत्र पद्ये निर्दिशति ।

अपि च— या लकुटी अरु कामरिया पर
हौं तिनहुँ पुरको तजि डारौं ।
आठहुँ सिद्धि नवो निद्धिको सुख
नन्दकी गाय चराय बिसारौं ।

रसखान कवौं इन आँखन सों
ब्रजके तरु, बाग तड़ाग निहारौं।
कोटिन हौं कलधौतके धाम
करीरके कुञ्जन ऊपर वारौं।

ब्रजोपमाने लोकत्रितयी न योग्यतमा, करीरतरवे स्वर्णगृहा अपि(१)न शोभनाः।

'रहीम' महोदयेन तु 'हैन्दवी यावनी' धर्मसीमा व्यर्थी कृता। यद्यपि तेन लोकोक्तिबहुला पद्यात्मका लेखा उट्टङ्किताः, तथापि रामकृष्णयोर्गुणगुम्फिता अपि रचिताः। नहि केवलं हिन्दीभाषायां कवितां ससर्ज, अपि तु संस्कृतात्मकानि कानिचित् पद्यानि निभाल्यन्ते तस्य। यथा हि—

आनीता नटवन्मया तवपुरः श्रीकृष्ण! या भूमिका।
नीरूपाः खणिकाऽम्बराब्धिवसुवत् त्वत्प्रीतयेऽद्यावधिः॥
प्रीतस्त्वं यदि चेन्निरीक्ष्य भगवन् मत्प्रार्थितं देहि मे।
नोचेन्मा नय मा नयेति च पुनः मामीदृशी भूमिकाः॥

हंहो भवतु नामाऽर्थाणां गीर्वाणवाण्यां पटुता, परं यवनेनापि रहीमकविना किमवशेषितम्। यद्यपि साम्प्रतिका यवनाः सन्ति संस्कृतज्ञाः, परमीदृशी भगवद्भक्तिस्तेष्वपि न विद्यते। यवनस्त्रियोऽपि तस्मै भगवते स्वहृदयमर्पयन्ति। एका यवनी आर्यत्वमपि उररीकर्तुमनाः कवितां हिन्दीभाषामयीमाह—

सुनो दिलजानी मेरी दिलकी कहानी तुम
दस्तमें बिकानी बदनामी भी सहूँगी मैं।
देवपूजा ठानी औ नमाज हूँ भुलानि तजि-
कलमाँ कुरान, तेरे गुनन गहूँगी मैं।
साँवरा सलोना, सिर कुल्ला तिल्लेदारदीखे,
तेरे नेह दागमें निदाघ ह्वै दहूँगी मैं।
नन्दके दुलारे! कुरबाण ताणी सूरतपै,
हौं तो मुगलानी हिन्दुवानी हो रहूँगी मैं।

आः! एतत् स्मारं स्मारं चेतो द्रवति। सत्यं भगवन्महिमाऽप्रतिमो विद्यते। अधुना यवना आर्याश्च परस्परं सङ्गरन्ते। तत्कालीनान्, अधुनातनान् यवनानार्यान् विलोक्य महान्खेदो ऽनुभूयते। विद्यते कश्चन यवनः, यः प्रभौ प्रभूतभक्तिं स्वीकरोतु। नास्ति। इति शम्।

(१) अत्र बहुत्वे पुंस्त्वम्।

# वर्तमानयुगस्य परीक्षाप्रणाली संस्कृतशिक्षा च।

ले०—भट्टश्रीमथुरानाथशास्त्री साहित्याचार्यः,
( जयपुरराजकीय सकलसंस्कृतविद्यालयानां निरीक्षकाः । )



भारतवर्षे शिक्षायाः क्षेत्रं पुरा एतावद्विस्तृतं नासीदिति स्वीकर्तुं शक्नुमः, किन्तु एतेन सहैव एतदप्यवश्यमालोच्यत् सा पुरातनी शिक्षा वार वारमाहिण्डमाना घोरतरमपमानमपि कदाचिदेव असहिष्ट। प्राक्तनशिक्षायाः कृते यद्यपि भूयान् समयोऽपेक्षितोऽभवत्, कष्टान्यपि अनेकानि सोढव्यान्यभूवन, परं सा शिक्षा स्थायिप्रभावा बहुमूल्या चाभवत्। एषु दिनेषु कालेजस्था विद्यार्थिनो हसन्तः खेलन्तश्च स्वल्प एव वयसि 'एम० ए०' अथवा 'आचार्य्य' पदाङ्किता भवन्ति, किन्तु पूर्वमाचार्यतासम्पत्त्यर्थं भूयसः समयस्य अनल्पस्य चानुभवस्यावश्यकताऽभवत्। एतदर्थं ते गुरुकुले तीव्रां तपस्यां कठिनाञ्च गुरुशुश्रूषामकुर्वन्। गुरुकुले तदेतत्क्लेशसहनं काचिन्निन्दनीया वार्ता नासीत्, प्रत्युत अस्मिन् भूयानभिमानो गौरवञ्चागण्यत। अनर्घराघवस्य कर्ता मुरारिकविः साभिमानमाह—

"गुरुकुलक्लिष्टो मुरारिः कविरिति !"

गुरुगृहस्थो विद्यार्थी यस्मिन् समये स्वाभिमतां विद्यां पर्य्यसमापयत् तस्मिन् समये स निजमनसि कामं कीदृशीमपि कृतकृत्यतामभ्यमन्यत, परं गुरुकृतां परीक्षां विना विद्यायां कृतकृत्यतां न कथञ्चिदप्यमन्यत। यद्यपि शिष्यस्य योग्यता गुरोः सकाशान्न कथञ्चिदप्यपरिचिता तिष्ठति परम् अध्ययनानन्तरं गुरवः पुनरप्येकवारं विद्यार्थिनां परीक्षामकुर्वन्। वास्तविकपरीक्षानन्तरं विद्यार्थी गुरुकुलाद्विसृष्टोऽभवत्। देवोत्सवे तीर्थस्थानेषु राजसभादिषु च अवसरानुसारं यत्र यत्र पण्डितानां समवायः समभवत् तत्र तत्रैव गुरुकुलागतानां तेषां नवीनपण्डितानां परीक्षा शास्त्रविचारद्वारा समभूत्। ये किल तस्यां परीक्षायां सफलाः समभवन् तेषां नाम नानादेशेभ्यः समागतानां पण्डितानां तद्विद्यार्थिनाञ्च द्वारा देशदेशान्तरेष्वतिशीघ्रमेव प्रासिद्ध्यत्। तेहि सर्वस्मिन्नपि देशे तद्विषयस्याचार्य्याः स्वीकृता अभवन्।

किन्तु यथा यथैव समयस्य परिवृत्तिरभूत् तथा तथैव शिक्षायाः प्रकारेष्वपि परिवर्तनमभवत्। गुरूणां गृहाद् आश्रमेभ्यश्च शिक्षा निर्वासितेवाभवत्। विदुषां शिक्षालयाः 'टोल' नाममात्रार्थमवशिष्टा अभवन्। वर्तमानेन राजभाषायाः प्रवाहेण तेषां स्थाने 'स्कूलानां कालेजानाञ्च' सृष्टिरक्रियत। तेषु

प्रतिवर्षं सहस्रसहस्रसंख्यासु शिक्षिताः समवेताः समभवन्। एतात्रद्विस्तृतायाः संख्यायाः पूर्वमिव सहसैव परीक्षणमपि नासीत् सामान्यं कार्य्यम्। अत एव एतेषां शिक्षितानां परीक्षणाय नानाविधपरीक्षाणां सृष्टिरभवत्। मन्येऽहम्, परीक्षायुगस्यारम्भः षष्टिसप्ततिवर्षेभ्यः पूर्वमेवासीत्। परीक्षायुगस्यारम्भे साम्प्रतमिव परीक्षानियमेषु कामं कठिनता न भवेत् परं पाठ्यग्रन्थेष्ववश्यं कठिनतासीत्। किन्तु तस्मिन् समये यादृशी परीक्षासु कठिनतासीत् तथैव तत्परीक्षासु परीक्षिता विद्यार्थिनोऽपि वर्तमानसमयापेक्षया अधिकतरं योग्याः सम्पन्ना अभवन्। संख्यायां कदाचन न्यूना अवश्यं भवेयुः। परं विद्यायां न्यूना कदाचिन्नाभवन्।

भारतीयैस्तत्तद्विश्वविद्यालयीयैर्यानि किल विवरणानि (रिपोर्ट) वर्तमानवर्षेषु प्रकाशितानि तेषां द्वारा, प्रत्यक्षानुभवेन च विवेकिभिः सज्जनैस्तदिदं निर्धारितमस्ति यत् वर्तमानपरीक्षाभिः परीक्षिता अधिकांशा विद्यार्थिनो न तादृशव्युत्पत्तिशालिनो निष्पद्यन्ते यादृशाः किल ते अपेक्ष्यन्ते। राजभाषाया इव संस्कृतभाषाया अपि शिक्षाः परीक्षाश्च साम्प्रतं नवीनेनैव प्रकारेण प्रचलिताः सन्ति। अतएव एतया परीक्षाप्रणाल्यां वर्तमानसमये संस्कृतशिक्षायाः का दशा समजनि, एतस्याश्च शोधनस्यावश्यकताऽस्ति न वा, एतद्विषये संस्कृतपण्डितानामवधानमाकर्ष्टुं वर्तमानायाः परीक्षाप्रणाल्याः सम्बन्धे किञ्चिद्धस्तान्निवेदयामि। मन्ये, संस्कृतहितैषिणः पण्डितास्तदेतत्सम्यग्विचार्य्य अनन्तरकरणीयाय सज्जा भवेयुरिति।

वर्तमानायाः परीक्षाप्रणाल्याः प्रवर्तकैः "एम० ए०" अथवा "आचार्य्य" परीक्षा सर्वाभ्यः परीक्षाभ्यः उत्कृष्टा परिगणितास्ति। इमां परीक्षां यदा किल प्रविशति विद्यार्थी, ततः पूर्वमेव क्रमानुसारं स हि तद्विषयस्य बहुतरान् ग्रन्थान् परिसमापयति। एतस्यां परीक्षायां प्रविष्टेन तेन तद्विषयस्य उच्चतमाः कठिनाश्च ग्रन्थाः अध्येतव्या भवन्ति। एतस्यां परीक्षायां कठिनकठिनानाम् उत्कृष्टोत्कृष्टानां च ग्रन्थानां स्थापनेन तदिदमाशास्यते यद् एतद् ग्रन्थानामध्ययनेन स परीक्षार्थी तथा योग्यो भविष्यति यथा अवशिष्टान् तद्विषयकग्रन्थान् स स्वयमेव द्रक्ष्यति, तेषां तत्त्वं च स्वयमेव भोत्स्यते इति। एतन्नास्ति यत्त एव ग्रन्थास्तद्विषयस्य सर्वस्वभूता इति। यद्येवमभविष्यत्तर्हि 'व्याकरणाचार्य्यः' 'न्यायाचार्य्यः' इत्यादि व्यापकं नामधेयं नाभविष्यत्। न्यायस्याथवा व्याकरणस्याचार्य्यो न भूत्वा स ह्याचार्य्योऽभविष्यत् केवलानां तेषां ग्रन्थानामेव। यथा ग्रन्थविशेषपरिपूर्णाधिकारेण 'भाष्यब्रह्मचारी' 'नैषधपण्डितः' इत्यादिप्रसिद्धिः पूर्वकाला-

त्प्रचलितास्ति किन्तु आचार्य्य-परीक्षामुत्तीर्णवन्तो जनाः स्वविषये तु पूर्णं पण्डिता अमन्यन्त एव किन्तु तज्ज्ञानबलेन ते सर्वस्मिन्नपि संस्कृतसाहित्ये निःशङ्कं व्यहरन् तत्र च पूर्णतां प्रापन् ।

परीक्षायुगस्य मध्यसमये सोऽयं संक्षेपप्रकारः प्राचलत् यत् परीक्षार्थिनः स्वपरिगृहीतायां परीक्षायामेव नियतान् ग्रन्थान् यथावदभ्यस्यन्, तेष्वेव च पूर्णमधिकारं प्राप्नुवन् । परीक्षोत्तरणानन्तरं तु जीविकाद्युपार्जनकार्य्येषु संसक्ततया, एकस्मिन्नेव शास्त्रे रुचेः प्रबलतया वा, इतोऽधिकानां ग्रन्थानां विलोकनस्य न तेषामवकाशः समभवत् । परं पठितेषु तेषां पूर्णोऽधिकारः समभवदत्र तु न सन्देहः ।

इतोऽग्रे शनैः शनैः सोऽयं प्रकारः प्रारभ्यत—यत् परीक्षानियतेषु ग्रन्थेष्वपि मुख्यमुख्या अंशा एव सपरिश्रममधीयन्तेस्म, न किल पूर्णास्ते ग्रन्थाः । परीक्षाप्रवर्तकैरधिकारिभिः कठिनकठिनास्त एते ग्रन्था अनेनाभिसन्धिना नियमिता आसन् यदेतेषां ग्रन्थानामध्ययनेन तद्विषयस्यान्ये ग्रन्थाः सहजमेव बुद्धिगता भविष्यन्ति—इति । किन्तु संक्षेपप्रवर्तकैः परीक्षाचतुरैर्नरैः सेयं युक्तिराविष्कृता—यत् परीक्षानियतेषु ग्रन्थेष्वपि एतानि स्थलानि कठिनानि सन्ति। ततश्च कठिनस्थलाधिगमे जाते ग्रन्थस्यास्य सरलानि स्थलानि स्वयमेव बुद्धिगतानि भवेयुरेव । तथा च परीक्षायां नियतस्सोऽ ग्रन्थस्तदेतेन प्रकारेण अवगत एव । एवञ्च इतोन्ये तद्विषयका ग्रन्थाः परीक्षोत्तीर्णविद्यार्थिना मनसैव बुद्धिस्था भवेयुरिति सोयं परीक्षोत्तीर्णः स्वविषयस्य पूर्णपरिज्ञाता भवेदिति स्पष्टमेव । यत् किमप्यस्तु—परीक्षार्थिनो जना यद्यपि परीक्षानियतेषु ग्रन्थेषु मुख्यमुख्यनियुक्तविषयानेव परिश्रमेण सह अध्यैयत, यतस्त एव विषयाः परीक्षासु प्रष्टव्या आसन्, परं नियतग्रन्थस्य अन्यान्यस्थलान्यपि ते गुरुमुखादवश्यमपठन् । एतन्नासीद् यत् पूर्णो ग्रन्थस्तस्मिन्समये पाठित एव नाभूदिति ।

किन्तु वर्तमान-समये संक्षेपस्यापि परा काष्ठा परिकल्पिता लोकैः । संक्षेपः किम्, ग्रन्थानां प्रक्षेपः, परिसमाप्तिरेव वा परिकल्पिता तैः । मुख्यमुख्यानामथवा कठिनस्थलानां का कथा, याः किल वार्ताः परीक्षायां प्रष्टुं शक्याः, अथवा गतवर्षाणां प्रश्नपत्रेषु ये ये विषयाः पृष्टाः, तानेव बहवः परीक्षार्थिनोऽभ्यस्यन्ति लोकेभ्यश्च तान् परिपठन्ति । परीक्षानियतग्रन्थानामूलचूडं पठन्ति—एव न । यदि केनचित् कारणेन बलात् पाठनीया अपि भवन्ति तर्ह्यपि ग्रन्था अवगता भवेयुरिति धारणया न पठ्यन्ते । किन्तु परीक्षाप्रदानार्थमेव । इदानीं भवन्त एव कथयन्तु, परीक्षार्थिनां व्युत्पत्तिः कथङ्कारं भवेत् ?

अस्माकं महर्षीणां सर्वतः प्रधानं लक्ष्यमासन् भगवन्तो वेदाः । ते हि बलपूर्वकमाज्ञापयन्ति 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति ।' अस्माकं प्रतिष्ठाऽसीद् दर्शनग्रन्थैः । अस्माकमाध्यात्मिकतत्त्वोपरि उन्नतंमन्या अपि वैदेशिकाः साम्प्रतमपि पूर्णतया न प्रगतवन्तः । आर्य्यग्रन्थानामनुवादेन यद्यपि तैर्भूयानुपकारः प्राप्तः परं तन्मर्मपर्य्यन्तमद्यापि ते यथावन्न प्राप्तवन्तः । ये वैदेशिका विद्वांसोऽस्माकं दर्शनानां यत् किञ्चन तत्त्वमधिजग्मुस्ते उन्मुक्त-हृदयेन प्रशंसन्ति—"यस्मिन् देशे उपनिषत्सदृशानि ग्रन्थरत्नानि प्रसूयन्ते अवश्यं स देशो ज्ञानज्योतिषामाकरभूतः ।" कथनस्य सारमेतदेव यद्भारतीया-नामार्य्याणां चरमं ध्येयमासीदात्मतत्वम् ।

आत्म-तत्व-पर्य्यन्तां गतिं सम्पादयितुम्, भाषाया उपरि अधिकारमधि-गन्तुम्, प्रथमतो व्याकरणस्य न्यायस्य चाध्ययनं प्रचलितमभूत् । यतो हि व्याकरणादिपरिज्ञानं विना शास्त्रग्रन्थेषु सम्यक्तया प्रवेशयोग्यता न भवति । अतएव पण्डितमण्डल्यां प्रसिद्धमभूत्—'काणादं पाणिनीयञ्च सर्वशास्त्रोप-कारकम्' इति ।

पुनः किञ्चित्समयानन्तरमिदमभूत् यद् व्याकरणन्यायसदृशे एकैकस्मिन् शास्त्र एव लोकानामध्ययनविरामोऽभवत् । तेषां मनसि दृढाग्रहोऽभवत् यत् यावत् किल व्याकरण-न्यायसदृशानां गहनशास्त्राणां पूर्णतत्वज्ञा न भवेम ताव-त्पर्य्यन्तं शास्त्रज्ञतैव कीदृशी ? एवं किल मध्यसमये एकैकशास्त्राणां पाण्डित्यं बहुलतया प्राचलत् ।

अस्तु नाम, एतदपि सम्यगेवासीत् । अस्माकमेकैकशास्त्राणां रक्षा तु यथा—कथञ्चिदभवत् । यद्येकैकशास्त्रेष्वेव निपुणा बहवो विद्वांसो भवेयुः, कश्चन न्याये, कोपि व्याकरणे, कश्चिच्च मीमांसायां धुरन्धरःस्यात्तर्हि तेषां द्वारा पठनपाठनप्रचारे सति पूर्वोक्तानां शास्त्राणां रक्षा सहजमेव सम्भवेत् । परमप्रे-मत्या अस्यामपि प्रणाल्यां संक्षेपप्रकारः सोयं कर्तव्योऽभूद्यदत्रापि परीक्षाप्रकारो नियमनीयोऽभवत् । परीक्षार्थिनो बाला लघुकौमुद्यादितः आरभ्य भाष्यपर्य्य-न्तान् कठिन-कठिनग्रन्थान् पूर्वं गुरोः सकाशादपठन् ततो ग्रन्थाधिगमोत्तरं तास्ताः परीक्षा अददुः । परीक्षोत्तरणानन्तरं तु गुरुसकाशादधिगतस्य ज्ञानस्य बलेन अन्यानन्यानपि ग्रन्थान् स्वयमवलोक्य अपेक्षितं वैदुष्यं सम्यक्सम्पा-दयामासुः ।

महात्मानः प्रगतवर्षाणां प्रश्नपत्राण्येव सम्यग् रटित्वा परीक्षाप्रदानाय साहसं कुर्वन्ति, संयोगाच्च ते तस्यामुत्तीर्णा अपि भवन्ति !! सम्प्रति हि प्रायः सर्वासामेव परीक्षाणां गतवार्षिकाणि प्रश्नपत्राणि मुद्रितान्युपलभ्यन्ते। पण्डितमहाभागैः द्रव्यलाभलोभेन तदुत्तराण्यपि मुद्रापितानि सन्ति। अनेनैव प्रकारेण सिद्धान्तकौमुद्याः सर्वासां पङ्क्तीनां व्याख्या अपि 'पङ्क्तिप्रकाशः' 'पंक्तिचन्द्रिका'-दिनामधारिण्यो मुद्रिताः सन्ति। गतवार्षिकेषु प्रश्नपत्रेषु पृष्टानां पङ्क्तीनां विशदीकरणमेभिरेव पुस्तकैः परीक्षार्थिनो रटन्ति, तासामाशयस्तेषां हृदयेऽङ्कितो भवेन्न वा इति त्वन्यत्, परीक्षायां येन केनचित् प्रकारेण उत्तरणमेव तेषां परमं लक्ष्यम्। यतो हि शतपूर्णाङ्केषु त्रयस्त्रिंशद्योग्यताङ्कलाभ एव तेषांकृते शास्त्रज्ञतायाश्चरमा सीमा। ये पण्डितमहोदयाः संस्कृतोपरि किञ्चित् कृपां कृत्वा स्वयमपि किञ्चित् परिश्रमं कर्तुं वाञ्छन्ति, ते परीक्षायां नियतानि यानि काव्यानि सन्ति तच्छ्लोकानां व्याख्यां स्वयं लिखित्वा निजसमीपे स्थापयन्ति। परीक्षाकाले सन्निहिते ते पञ्चिकामेतां विद्यार्थिभ्यस्समर्पयन्ति येन ते तां व्याख्यां लिखित्वा रटेयुः।

प्रथमन्तु परीक्षाप्रवर्तकैरेव पाठ्यग्रन्थेषु सरलतायाः परिसीमा समापितास्ति। काश्यादिस्थानेषु सिद्धान्तकौमुद्याः परीक्षा चतुर्भिर्वर्षैर्भवति। पूर्वपूर्ववर्षेषु कौमुद्या यो भागः पठ्यते (नहि नहि यस्य भागस्य परीक्षा दीयते) अग्रिमवर्षेषु स भागो विद्यार्थिभिः स्पृश्यतेऽपि न, यतोहि अग्रेतनवर्षेषु पूर्वभागस्य परीक्षा न भवति। यस्मिन् समये विद्यार्थी चतुर्थखण्डे कौमुद्या अन्तिमभागस्य परीक्षां ददाति तावत्पर्य्यन्तं प्रथमखण्डे पठितं भागं स हि बहुतरं विस्मरति। प्रकारान्तु स सिद्धान्तकौमुदीं समापयति परमितो बोध-विषये स तां सर्वकालार्थं विसर्जयति। आचार्य्यपरीक्षायामयं नियम आसीत् पूर्वं यत् परीक्षार्थी स्वेच्छानुसारं खण्डविनिमयं कर्तुमशक्नोत्। स यद्यवाञ्छत् तर्हि चतुर्थखण्डं प्रथममदात् पुनः स्वसौकर्य्यानुसारं चरमसमये प्रथमखण्डस्य स्पर्शमकरोत्। अस्तु, इदानीं तु परीक्षार्थिभिरस्मिन् विषये एतावदुन्नतिः कृता यत्ते पाठ्यग्रन्थैः साकमेव अधिकं सम्बन्धं न स्थापयितुं वाञ्छन्ति। ते हि तैर्विषयैः स्थलैर्वा ऐच्छिकं सम्पर्कं पुष्णन्ति ये किल परीक्षासु प्रष्टुं शक्यन्ते। अत एव ते पुरातनप्रश्नपत्राणां द्वारा अथवा गुरुमहोदयस्य हस्तलिखितानां पञ्चिकानां द्वारा तत्तत्स्थलानि मुखस्थानि कुर्वन्ति, तैर्ग्रन्थैः साकं तेषां साक्षात्सम्बन्धः कियान्?

मम परिचिता एके महोदया आसन् तेषां नामप्रकाशेनाऽपि न किञ्चित्फलं यतो हि तेषां देहावसानं जातमस्ति। ते प्रथमप्रथमं साहित्याचार्य्यपरीक्षामुदतरन् किन्तु तदनन्तरं ते प्रायः प्रत्येकवर्षं एव यस्य कस्यचिद्विश्वविद्याल-

यस्य आचार्य्यपरीक्षां तीर्थपरीक्षां वा अवश्यमददुः । ते हि 'आत्मैव गुरुरात्मनः' इत्याभाणकस्य प्रत्यक्षमुदाहरणमासन् । स्वबुद्धिबलेनैव ग्रन्थान् दृष्ट्वा वेदान्त-सांख्यन्यायादीनां न जाने कियतां कियताञ्चन शास्त्राणां तैः परीक्षा दत्ता अभूवन् । एकदा मया पृष्टास्ते मित्रतावाः सम्पर्कान्मामवोचन्—'यदा हि परीक्षाया दिनानि सन्निहितानि—भवन्ति तदानीमेकवारं नियतग्रन्थानेतान् सामान्यतया विलोकयामि । मम तावाननुभवः सञ्जातोऽस्ति यत् अस्मिन् ग्रन्थे एतान्येतानि स्थलानि प्रष्टुं शक्यन्त इति । अथाहं स्वयम्, अन्येषां वा पण्डितानां साहाय्येन तानि स्थलानि परीक्षोपयुक्तानि सज्जीकरोमि ।

एवं किल पूर्वोक्तप्रकारेण व्याकरणादिशास्त्राणां परीक्षा उत्तीर्य्यन्ते किन्तु व्याकरणाध्ययनस्य फलं यत् शब्दसाधुत्वं व्युत्पत्तिर्वा, तत्कथमपि न भवति । अस्यां दशायां 'व्याकरणाचार्य्य' इत्यनुक्त्वा 'परीक्षाचार्य्य' इत्युक्तिः समञ्जसा स्यात्, अथवा 'व्याकरणं पठितम्' एतस्यस्थाने– तत्परीक्षा पठितास्ति' इति कथनमुचितं भवेत् ।

पूर्वं हि रक्तपीतादिवर्णैः रत्नानां भस्मौषधानां वा बाह्या परीक्षा समभवत् किन्तु सम्प्रति कृत्रिमोपायैस्तान् तान् रक्तपीतादिवर्णानुत्पाद्य कृत्रिमरत्नानि भस्मौषधयो वा चतुरैः सृज्यन्ते यानि समर्घमूल्येन देशेऽस्मिन्नितरततो विकीर्य्यन्ते । एवं किल प्रत्यक्षं पश्यतामेवास्माकं कृत्रिमसृष्टिः ( इमीटेशन ) प्रारब्धास्ति । धावनादिना शरीरस्वास्थ्यं भवतीति विचार्य्य किञ्चिद्दूरस्य यत्किञ्चित् परिमाणं स्थिरीकृत्य तत्र हि सङ्केतितं किञ्चिद्वस्तु स्थाप्यते च यो वा जनः एतद्वस्तु नियतसमये समानेष्यति स एव वीरः परिगणयिष्यत इति । किन्तु चतुरंमन्या नराः स्वास्थ्यस्य विचारमकृत्वा येन केनाऽपि धौर्त्येन सङ्केतितं तद्वस्त्वेव आनेतुं वाञ्छन्ति, तावत् दूरं धावनस्य कष्टं न ते सोढुमिच्छन्ति । परं शारीरिकव्यायामेन यः किल लाभो भवेत् स एतस्यां प्रवञ्चनायां कथं सम्भवेत् ?

मम विचारानुसारम्, एतस्मिन् व्यतिकरे परीक्षार्थिनां तावान् दोषो नास्ति यावान् किलाध्यापकमहाभागानाम् । अनेन अध्यापनरूपप्रतारणेन वयं बालकानां जीवनं क्षतिग्रस्तं कुर्मः । यतो हि संस्कृतमधीयाना जनाः संस्कृते व्युत्पत्तिशैथिल्यात् आत्मतत्वाद्यन्वेषणद्वारा जायमानमदृष्टलाभमपि न प्राप्नुवन्ति, तथा स दृष्टलाभोऽपि ( सांसारिकलाभः ) तेषां दुष्प्रापो भवति यो हि राजभाषाध्ययनद्वारा साम्प्रतमुपलभ्यमानो विलोक्यते । एवमुभयतो भ्रष्टाहत इमे संस्कृताध्यायिनः स्वाध्यापकानपि घोरतरस्यापराधस्योत्तरदायिनो निर्मान्ति ।

( क्रमशः )

# लेखवक्तृतयोस्तारतम्यविमर्शः।

निबन्द्धा—श्रीदीनानाथशास्त्री सारस्वतश्शुजाबादाऽभिजनः।
( 'मुलतान' स्थ-श्रीसनातनधर्मसंस्कृतकालेजाऽध्यापकः )

पूर्वतोऽनुवृत्तम्

"शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते"

अधुना लेख आदीयताम्—लेखोऽपि पुरुषस्य महाहितसाधकः। स कूपमण्डूकमपि पुरुषं तत्र २ विश्रावयति। यदि पुमाँल्लेखकलापरिचितः; तदा तस्य महिष्ठःप्रभावो न केवलं तद्भाषाभाषिजनतायाम्प्रत्युत राजन्यपि प्रवर्त्तते। तत एवाऽसावितस्ततःपुरस्कारभाजनञ्जायते। लेखो द्विधा भवति—सामयिकः स्थायी च। दैनिकसमाचारपत्रेषु स्वलेखानाम्प्रकाशनं प्रायस्सामयिकत्वम्भजते। मासिकपत्रेषु निबन्धप्रहयणं पुस्तकादिप्रकाशनञ्च स्थिरसामग्रीशालित्वव्यपदेशभाग्। उभय्या विधयैव लेखको जनानामादराऽऽस्पदम्भवति। दूरदूरं यत्र २ तत्पत्रं पुस्तकं वा प्राप्नोति, तत्र २ अभिज्ञास्तन्नाम्ना परिचिता भवन्ति। यदि जना बाह्यं तदीयं सम्मानाऽम्बरञ्चाऽपि विदध्युः, तथाऽपि तेषाञ्चेतसि तत्कृते श्रद्धोद्रेको ध्रुवमेव तिष्ठति, ते च तस्य दैनिककार्य्यप्रणालीमाकृतिं चित्रं वा दिदृक्षन्ते, किम्भूयसा—जनास्तस्य रसखनीं लेखनीमपि अवलुलोकयिषन्ति, यत् कीदृश्यस्य लेखखनी लेखनी, या महासौभाग्यभागस्मद्धृदयस्पृग् भवति। तदीयाँल्लेखान् न केवलञ्जनता स्वयमेव पठति; प्रत्युताऽन्यानपि प्रसह्य श्रावयति। क्वचित्तल्लेखकनाममात्रपठनमेव रोमाञ्चं तनोत्तनोति तेषाम्। यस्मिन् समाचारपत्रे तादृशप्रसिद्धलेखकस्य लेखास्तिष्ठेयुः; तत् समाचारपत्रमपि तेषां प्रणयास्पदञ्जायते। यस्मिन् मुद्रायन्त्रे तल्लेखकस्य पुस्तकानि मुद्रितानि स्युः; तन्मुद्रायन्त्रमपि तद्दृशि महादरास्पदञ्जायते। एतदेव किम्—स एव लेखकपुङ्गवो यस्याऽप्रसिद्धस्याऽपि लेखकस्य साधारणपरीतेऽपि तत्सन्दृब्धपुस्तके भूमिकाया द्वित्रशब्दानेवाऽङ्कयेत्,तत् साधारणपुस्तकमपि जनानां तोषकरञ्जायते। कस्मिँश्चित्पत्रे स एव लेखको यदि कस्यचित् पुस्तकं समालोचमानस्तत् स्तुवीत; तज्जनास्तत्पुस्तकानयनव्यासज्जना अपि भवन्ति। तदीया स्वकीया कादाचित्की साधारण्यपि कृतिस्तैस्तोष्ट्रूयते। प्रसिद्धलेखकस्य विवादास्पदे विषये प्रत्ता सम्मतिरपि सम्मान्यते। यदि लेखकःकवित्वेनाऽपि सध्रीचीनः, तदा तु सुवर्णे सुगन्धयोग इव भवति।

कविसम्मेलनेषु समस्यापूर्त्यर्थं स सर्व्वत्र निमन्त्र्यते । विवाहादिसम्बद्धपद्यनिर्म्मित्यर्थं विविधाभिनन्दनपत्रसज्जीकरणाय जनास्तत्सम्मुखं दीनं मुखङ्कुर्व्वन्ति । समाचारपत्राणां सम्पादकास्तेषामेव लेखैः काव्यैर्वा स्वपत्रकलेवरं गौरवाऽऽस्पदं घटयन्ति । हिन्दीसाहित्येऽप्यत्वे श्रीप्रेमचन्द्र उदाह्रियताम्—प्रायशस्समाचारपत्राणि तत्प्रबन्धमाख्यायिकाप्रकाशने बद्धपरिकराणि तिष्ठन्ति; तदीयोपन्यासानाञ्च यत्र तत्र कीदृश आदरः । स्वर्गीयो 'बाबू देवकीनन्दनखत्री' महोदयः 'चन्द्रकान्ता'ऽऽद्युपन्यासाँल्लिखित्वाऽद्याप्यमर-नामेव वरीवृत्यते; तदीयो 'लहरी' मुद्रणालयश्चाऽद्यापि तत्कारणाल्लोकप्रियत्वमुपास्ते ।

वर्त्तमानसमयस्तु दूरमपास्यताम्—कालि(१)दासादीनां महाकवीनाञ्जातानां शताब्दीनां बंहिमानो व्यतीताः, तेऽद्याऽपि न विस्मर्य्यन्ते लोके लोकेन, तेषां चरमा पाण्डित्यकाष्ठा काष्ठासु (दिक्षु) अद्याऽपि व्याप्ता; तदीययशोभिर्दिशोऽपि व्याप्ताः; कवितारतिपञ्चबाणस्य बाणस्य कीर्त्तिमद्याऽपि जगन्ति गायन्ति—तत्र लेख एव श्रेयो बिभर्त्ति । 'तिलक' महोदयो यद्यपि वक्तृत्वेन परां ख्यातिमलभत, तथापीयं विश्रुतिस्तु तदीया कतिपयवर्षपर्य्यन्तं विलेष्यते एव; ततो 'गीतारहस्य' लेखश्च पुनस्तामुज्जीवयिष्यति, अमरञ्च विधास्यति तल्लेखकम् । संस्कृतमण्डले म० म० प० गिरिधरशर्म्माणो व्याख्यातृत्वख्यातयशस्का अपि 'संस्कृतरत्नाकर' स्य दशवर्षकालिक-सम्पादकतायां संस्कृतसाहित्य-सम्मेलने-निबन्धादि प्रकाशने च यल्लेखकृत्यं व्यधिषत; तदपि तानुच्चकोटिमनैषीत्; विद्वद्धूर्त्सु च स्वश्रद्धास्पदत्वमुद्राञ्चाऽऽश्चकत्, स्थिरग्रन्थलेखनमपि ते प्रत्यशासत एतत्पङ्क्तिलेखकम्प्रति । पाकशासन-शासनमुपेयिवान श्रीमान् प० श्रीमदम्बिकादत्तव्यासः 'शिवराजविजयं' सन्दृभ्य यादृशं यशोराशिं लेभे, स्वकीयनामरत्नञ्च प्रसिद्धिनिधौ निदधौ; तन्न तिरोहितं केषामपि संस्कृतजुषां विदुषाम् । यदि लेखनकला नाऽभविष्यत; तर्हि पुरातनानां वक्तॄणामपि नाम विस्मृतिगर्भे व्यलेष्यतः यतो वक्तृता हृदयपर्य्यन्तमेव तिष्ठति, अतएव न स्थेयसी भवति । लेखस्त्वन्तपर्य्यन्तं तिष्ठति मुद्रायन्त्रादिकृपावशात्, तेनैव स्थेयान् भवति ।

## तारतम्यम् ।

अधुनोभयविषयतारतम्यविमर्शाऽवसरेऽधोङ्किता वार्त्ता अनुभवपथमायान्ति । तथा हि—वक्तृतायास्तात्कालिकः क्षणिको वा प्रभावो भवति, लेखस्य

(१) कालिदासः । 'ङ्यापोः संज्ञाछन्दसो र्बहुलम्' इति सञ्ज्ञात्वाद् वा ह्रस्व, कालीशब्दस्य; अन्यत्र कालीदासोऽप्युपपन्नः ।

प्रभावस्तु स्थायी भवति। एतत्सत्त्वेऽपि व्याख्याता द्राग् विख्यातः सम्भवति, लेखकस्तु किञ्चित्कालाऽतिपातादेव। वक्तारश्शताब्दयन्ते विस्मर्य्यन्ते; लेखकानान्तु परस्सहस्रवर्षैरपि विस्मृतिपदवी दवीयस्येव; अत्र कालिदासादीनां लेखा एव स्वतः प्रमाणम्। वक्तृत्वे लज्जायै तिलाञ्जलिर्दातव्यो भवति; लेखकत्वे तु न तादृश्यावश्यकता। वक्ताऽविद्वानपि वावदूकतया स्वप्रतिष्ठां निर्म्मातुमीष्टे; लेखे तु वैदुष्यस्य नान्तरीयकतैव। व्याख्यानाऽऽख्यानाऽनेहसि शृङ्खलाबद्धता कदाचिच्छिद्यते, विषयान्तरं वाऽऽपित्सति(१)इति महदेव पारतन्त्र्यम्, तेन च प्रतिष्ठाभङ्गप्रसङ्गो वैलक्ष्यलक्ष्यहृदयताप्रसङ्गश्च; लेखे तु न तथा, अत्र परं स्वातन्त्र्यम्। वक्तृतायां क्रियमाणा व्याकरणाद्यशुद्धिरुपेक्षाविषयीक्रियते; लेखे तु न तथा। वक्तृत्वे सामयिकतैव एकान्तकान्ता जञ्जन्यते, यातयामता (असामयिकता) तु तत्र नितरामक्षन्तव्या, राष्ट्रियविचारप्रचारप्रसारे वक्ता व्याकरणस्य फक्किकां विवृण्वन्नुपहासास्पदमेव भवेत्; प्रत्युत सैव प्रसिद्धवक्तुरपि वक्तृता,–या स्वसमये जनतायां प्रबलं प्रभावमानन्दं वा प्रावाहयत, सैव तत्समयेऽपेते पुनः श्राव्यमाणा नीरसा तुच्छा वा प्रतीयते; लेखे तु उभय्या एव विधाया प्रयोगस्सुलभः, न च वैरस्याऽऽधायकः, काममसामयिकपुस्तकं द्राङ् न विक्रीयेत, परं तदधिकारिणो न प्रायो दुरापा भवन्ति। वक्तृतया यत्किमपि आन्दोलनं प्रचिचारयिष्येत(२)तच्छीघ्रम्प्रचरति; लेखेन तावच्छैघ्र्येण प्रचारो न जायते, परं यावज्जायते; तत्र स्थायिता भवति। लेखकस्य नामविश्रुतिस्सम्पद्यते; वक्तुस्तु नाम्न आकारस्य चाऽपि। वक्ता शीघ्रं नेता सम्पद्यते, लेखके तु तत्ता तथा न जायते। वक्तारमाबालाद् आस्थविरञ्जानते; लेखकन्तु पठिता एव जनाः। वक्तृतायामिदं काठिन्यं यत्श्रोतृसमक्षमेव कार्य्यनिर्व्वहणमावश्यकन्तत्र, तत्र व्यवधानम्, अवरोधोऽन्तरं विच्छेदो वा नितरां हानिकृत्; लेखकस्य तु लेखसमये समक्षं कस्याऽपि न भवत्युपस्थितिः, अत एव स व्यवधायाऽपि, विच्छिद्याऽपि लेखनीम्प्रचालयति। वक्तुस्समय परिमितो यौगपद्यपरीत परेच्छाऽनुसारी च भवति; लेखकस्य तु सोऽपरिमिततां स्वेच्छाऽनुसारिताञ्चोपास्ते। वक्तृताकृते श्रोतृकुलाकुलं स्थानम्, स्थानशोभा, दर्शकानां समारोहः, श्रोतॄणां

(१) आपित्सति। आङुपसृष्टात् पततेराशङ्कायां सन्। 'सनि मीमा' इति पकारस्थाऽकारस्य इस्, 'स्को' रिति सलोपः। 'सन्यङो' रिति द्वित्वम्।

(२) प्रचिचारयिष्येत। प्रोपसृष्टाच्चरतेर्णिच्, सन्, ततः कर्म्मणि विधिलिङ्। 'भावकर्म्मणो'रिति तङ्। सनोऽतो लोपो यक्परकत्वात्।

तूष्णीका, इत्यादीनां नान्तरीयकता ( आवश्यभाव्यता ) भवति, तदैव प्रभावो जायते, लेखे तु, नेदृशप्रयत्नस्य आवश्यकता । वक्तरि सर्व्वे आडम्बराशब्दस्य, अर्थस्य, स्वरस्य, वेषस्य, वाग्मितायाः(१)विविधहावभावानां, मनोहरोपक्रमस्य, प्रसङ्गविशेषे उत्तेजनायाः, अवसराऽनुरूपाऽनेकरूपरूपकाणाञ्चाऽपेद्यन्ते; निबन्द्धरि(२)तु तेषामल्पता प्रयोजनीया, रससञ्चारायाऽलम्भूष्णुस्सामग्र्येव तदुपयोगभाक् । वक्तुर्मस्तिष्कमहरहस्तारस्वरेण व्याख्यानाख्यानकारणात् क्षिप्रं ह्रसिमानमेति; लेखकस्य न तावच्छैघ्र्येण । वक्तुश्च प्रसिद्धस्याऽपि जनतायां प्रभावो नाऽपि जायते कोलाहलादिवशात् कदाचित्, तेन तस्य लज्जाऽसन्तोषो वाऽपि भवति, लेखकस्य कृते तु न तत्सत्ता; परं तदीयपुस्तकानामविक्रये तस्याऽपि परमाऽसन्तोषो जायते ।

## उपसंहारः ।

यदि लेखकत्वं वक्तृत्वञ्च-इत्युभयगुणभाक्त्वं स्यात्, तदा तु सुवर्णे सुगन्धयोगः । अन्यथा-यत्सन्निधावनयोरन्यतर–प्राकृतिकताप्रपञ्चः स्यात्; तमेव गुणमुपयुञ्जीत जनः । यतः—स्वाभाविकावेवेमौ गुणौ तु भिन्नभिन्नावपि विच्छित्तिविशेषाधायकौ यशस्यौ च, कृत्रिमौ तु न तथा स्वारस्याधायकौ । स्वाभाविकवक्तुरधिमनोमन्दिरचत्वरं व्याख्यानविषया नरीनृत्यमाना–पुरः स्फुरन्त एव तिष्ठन्ति; प्रतिदिनं तं भिन्नभिन्नविषयाञ्छ्रावयन्तं(३)वलोक्य जनतैव श्राम्यति, न सः; विस्मेरीभवति च सा ( जनता ), यत्–किमेतदभ्यन्तरे व्याख्यानानां खनिरजनि । एवमेव स्वाभाविकलेखकानामपि पुरस्ताल्लेखविषया हस्तौ संयोज्य तिष्ठन्ति, तदीयलेखविषयान् द्रौपदीवस्त्रराशीनिव असमाप्नुवतोऽवेक्ष्य पत्रसम्पादका यन्त्रालयाऽध्यक्षा वैव श्राम्यन्ति; विश्रम्य विश्रम्य च तल्लेखकलेखान् ग्रन्थाँश्च समयं व्यवधाय चिरात् प्रकाशयन्ति । कृत्रिमलेखकवक्तृणाञ्च(४)कथा तु न प्रष्टव्या । ते वराकास्तु विचारयन्ति-अद्य कस्मिन् विषयेऽङ्क्ष्येत, को वा विषयो व्याख्यायेत । तादृशां निबन्धॄणां लेखनी, वक्तॄणां हृदयञ्च

( १ ) वाग्मी । 'वाचो ग्मिनिः' 'चोः कुः' जश्त्वम्; अतो गकारद्वयी ।

( २ ) निबन्द्धरि । तृजन्ताद्बध्नातेर् 'ऋतो ङी'ति गुणः ।

( ३ ) विषयाञ्छ्रावयन्तम् । 'शितुक्' जश्त्वं श्चुत्वं चर्त्वञ्च, नस्य श्चुत्वम्, 'शश्छोऽटि' 'झरोझरी'ति चलोपः । अन्यत्र ञ्च्छ्, ञ्चश्, ञ्श्, इति संहितरूपाणि ।

(४) लेखक वक्तृणाम् । 'अल्पाच्तरम्' इति द्वन्द्वे वक्तृशब्दस्य पूर्वनिपातप्रसङ्गेऽपि 'लक्षणहेत्वोः ३।२।१२६, 'समुद्राऽभ्राद्' ४।४।११८ इतिनिर्देशात् पूर्वनिपातव्यभिचारः । ततश्च 'कृत्रिम' शब्देन विशेषणसमासः ।

कम्पेते, अतस्तदीयाङ्कर्था खलु खलूदित्वा(१)। तेन स्वाभाविकस्यैव गुणस्य परिवृंहणाय विशिष्टं चेष्टनीयम्। तथापीतरस्मिन्नपि प्रयत्नो न हेयः, नह्येकेन हस्तेन तालिका सम्प्रपद्यते—इत्यास्माकीनो विमर्शः। अलमत्र ॥

———

## संस्कृतपरीक्षा ।

अस्मिन् वर्षेऽखिल-भारतवर्षीयसंस्कृत-विश्वविद्यालय-(परीक्षायूनिवर्सिटी)-स्य सर्वासामपि परीक्षाणामावेदन पत्राणां भरणं कृत्वा प्रधान कार्य्यालये प्रेषणस्यान्तिमः समयः शुद्धवैशाखस्य पूर्णिमा विद्यते। परीक्षा प्रारम्भश्च कार्तिककृष्ण पञ्चमीतो भविष्यति। परीक्षानियमावली च परीक्षाकार्य्यालयतो विना मूल्यमेव -) चिटिकाप्रेषणेन प्राप्यते—

सूचयिता—
रजिष्ट्रार परीक्षावोर्ड (अ० भा० सं० विद्यालय,
भारतधर्म महामण्डल, जगत्गंज काशी।

———

## सावधानाः शृण्वन्तु ।

महाशयाः पत्र लेखप्रेषकाः सावधानाः शृण्वन्तु। पत्रे प्रथमेव उपरि दक्षिणपार्श्वे पूर्णं स्वसंकेतं सुस्पष्टाक्षरैर्लिखित्वा तदनन्तरं विमलाक्षरैः, विरलपङ्क्तिभिः पत्रवृत्तं स्पष्टं संक्षिप्तं पुनरप्यवसाने स्वीयं पूर्णं संकेतं लिखन्तु। नूतनग्राहकैः (मनिआर्डर) द्रव्यादेशपत्रेचाधः 'नूतनोग्राहकोऽहं'मिति पूर्णं संकेतं लिखन्तु। प्राचीनै ग्राहकैश्च स्वीया ग्राहकसंख्याऽवश्यं लेख्या।

श्रीरामचन्द्र शास्त्री (विजयचणः) हनुमद्दुर्गतः पणपञ्चकस्य चिटिकां प्रेषितवान्। स्वीयं पूर्णं संकेतन्तु लिखितमेव नहि। एवं व्यतिकरे कुत्र वयमुत्तरं प्रेषयामः। इति स एव कथयतु। एवं मनिआर्डरप्रेषका ये कूपनपत्रे स्वसंकेतं न लिखितवन्तः तेषां सूर्य्योदयं कुत्र प्रेषयाम इति त एव कथयन्तु। एतावान् समयस्तु नापि पत्रवाहकस्य नाप्यस्माकं विद्यते यदुपरि द्रव्यादेश (मनिआर्डर) पत्रे लिखित तदीयं संकेतं स लेखयतु वयं च लिखाम इति सावधानाः शृण्वन्तु पत्र-लेख-द्रव्य-प्रेषकाः सर्वेऽपि।

मन्त्री—सूर्य्योदयसञ्चालकसमितिस्थः।

---

(१) खलूदित्वा। तत्कथा न वक्तव्येत्यर्थः। 'अलंखल्वोः प्रति' इति क्त्वा। 'वचिस्वपी'ति वदतेस्सम्प्रसारणम्।

# गीतावितरणम् ।

फिरोजपुर कालेजस्थसंस्कृत प्रोफेसर पं० बी०बो० शास्त्री एम्०ए० विद्यासागरमहोदयः प्रियगीतायाः स्वर्गतायाः स्वमातुरन्तिमादेशानुसारं ५००० पञ्चसहस्रं गीतापुस्तकं मैनेजरमहोदय, निःशुल्कं वितरति । अतश्च तदभिलाषुकैः कोशलपुस्तकभवन, फिरोजपुर सिटी इति संकेतस्थाने पत्रं प्रेषयित्वा ग्राह्यम् ।

---

# हस्तोदक-दानग्रहणविषये प्रश्नः ।

—:*:—

**ले०—प्र० मन्त्री व्या० शा० सा० आ० सुधाकरः ।**

"सनातनधर्मप्रचारकच्छात्रसंघः" बड़ास्थान सं० पाठशाला, अयोध्या ।

अयि भोः सूर्य्योदय-संस्कृतपत्रपाठका विद्वत्प्रवरा श्छात्रप्रवराश्च श्रीमतः प्रति निवेदनमस्ति यदस्मिन्विकराले कलिकाले बहवो विवादाः समुपस्थितास्तेषां कथनस्य प्रयोजनं नास्त्येव । कैश्चिदेकः प्रश्नः कृतो यद्धस्तोदकदानग्रहणं कर्त्तव्यं किं वा न वेति ? अस्योपरि—विहार-प्रदेशे कुशोपर्य्यैव दानं गृह्यतेऽस्तत्रस्थैर्ब्राह्मणैरभिहितं नैवेति । अत्र निषेधक-वाक्यानि सर्वाणि ग्रन्थनामादिनिर्देशपुरस्सराणि विद्वांसः प्रदर्शयन्तु । हस्तोदकदानग्रहणे निषेधश्च कः कुत्रेत्यपि "संस्कृतपत्राध्यक्ष"—सन्निकटे झटिति यथा स्याल्लेखद्वारा प्रेषयन्तु ।

---

# छात्र-सम्मेलनम् ।

—:*:—

अष्टम्यां तिथौ गुरुवासरे मध्याह्नोत्तर-चतुर्वादनसमये स्थानीय-परिव्राजक-महामण्डले संस्कृतसाहित्य-समाजस्य संस्कृतच्छात्र-सम्मेलनं वयोवृद्धविद्यावृद्ध श्रीयुत पं० काशीनाथ शास्त्रिमहोदयानां सभापतित्वे महता समारोहेण समजनि । तस्मिन् समये स्थानीय-च्छात्राणामपेक्षया बहिस्थानां छात्राणां संख्या सन्तोषप्रदा आसीत् । सम्मेलन-कार्य्यं देववाण्यामभूत् । उपस्थित-सज्जनानां मध्ये संस्कृतसाहित्य-समाजस्य मन्त्रि-महोदयानां दर्शनकेशरिणां श्रीमतां पं० गोपालशास्त्रिणां संस्कृतच्छात्राणां कर्तव्य-विषये मधुर-मधुरं गम्भीरतरञ्च भाषणमुपस्थितानामामोदजनकमजनि । ततः श्रीब्रह्मानन्द वेदान्त शिरोमणिः, स्वामि शिवदत्तगिरिः स्वामि जयानन्दः, श्रीमन्तः पं० शिवकुमारशास्त्रिणः पं०

कृष्णशर्माणः वेदान्तशास्त्रिणः, साहित्यरत्न द्विजेन्द्र पं० सरयूप्रसाद पाण्डेयाः पं० शिवकुमारशर्माणः जयरामपाठकः पं० कपिलदेवपाण्डेयः पं० जानकीवल्लभः पं० श्यामानन्द इमे महानुभावा अस्मिन्नवसरे संस्कृत-साहित्य-समाजोन्नति विषये विशेष-भाषणं दत्तवन्तः। तत्र सर्वमपि कार्यं कविताशिक्षालयस्य सञ्चालकैः कविरत्न-महोदयैः द्विजेन्द्रैः महता परिश्रमेण सुचारुरूपेण सम्पादितम्। त्रयाणां प्रस्तावानामुपरि विदुषां भाषणमभूत, येषामाशयो लिख्यते।

प्रथम—संस्कृत च्छात्राणां संगठनम्।

द्वितीय—व्यवस्थापिका-सभायां मध्यमोपाधिपरिक्षोत्तीर्णछात्राणां मतदाने प्रवेशो भवेत्।

तृतीय—संस्कृताध्यापका एवं विद्यार्थिनः परस्परं देव-भाषायामालापं कुर्वन्तु।

पश्चात् काशीस्थ टीकमणि संस्कृतविद्यालयस्य प्रिन्सिपल पं० देवकीनन्दशास्त्रिणां स्वर्गवास विषये शोक प्रस्तावोऽभूत्।

तत्पश्चात् सभापति—महोदयाय धन्यवादं दत्वा सम्मेलनस्य कार्यं समाप्तमभूत्।

निवेदकः

श्रीधर्मनाथत्रिपाठी,

परिव्राजक महामण्डलस्थोपदेशक-महाविद्यालयस्थः

लक्ष्मीकुण्ड काशी।

---

## "शोकाश्रुविन्दवः"

**श्री० पं० देवकीनन्दनशास्त्रि महोदयानामाकस्मिकनिधने।**

"ले०— विशुद्धानन्द गौड़ ज्यौ० शा० टी० कालेज काशी"

हा ? हा ? हन्त गतोऽयमद्य सहसा साक्षान्मणि र्देशतः।
संप्रत्यत्र सुबन्धुवर्गनिचयान् पुत्रान्, कलत्रं तथा।
त्यक्त्वा तत्र च शोकदुःखपतितान् विद्वद्गणान् यः सुधीः।
किञ्चान्यानपि देशवासिमनुजान् शोकाम्बुधौ पातयन्॥ १॥
नानाज्ञान-विचार-शिक्षणविधौ विद्यालयान् स्थापयन्।

काश्यां टीकमणीतिनामलसितं विद्यालयं शोभयन् ॥
प्राप्तोऽयं कथमद्य तत्र च पुरीं शैवीं हि मुक्तिप्रदाम् ।
भक्तेरेव च हेतुरत्र पतितः ज्ञानस्य वाऽन्यविधा ? ॥ २ ॥

वाराणसी पुरमवाप्य च तत्र विद्याम् ।
संप्राप्य कीर्तिमिह तां बहुलां सुधीषु ॥
सौख्यं स्वकञ्च सकलं सफलं विधाय ।
मार्गं स्वकीयमुचितं सुगतौ चकार ॥ ३ ॥

संस्मृत्य सौम्य-गुण चारुविचार-भावम् ।
गाम्भीर्य्यमस्य मधुरं किल भाषणं वा ॥
दृष्ट्वा च साम्प्रतमहो जगतो गतं तम् ।
चेतः सतां नहि कथं बहुदुःखमेति ॥ ४ ॥

दौभार्ग्यमत्र समये हि सनातनस्य ।
धर्मस्य यो भवति चेद्विदुषामभावः ।
तेनाधुनाऽत्र किल दुःख-समुद्रमग्नैः ॥
संप्रार्थ्यते सुगतये स्वजनैर्महेशः ॥ ५ ॥

खनवनवविधौ वै ख्यात-संवत्सरेऽस्मिन् ।
सुगतिमधिगतश्श्रीदेवकीनन्दनोऽयम् ॥
भवतु भवतु मुक्तिः तस्य विद्वद्वरस्ये—
त्यभिलषति हि गौडोऽयं विशुद्धादिनन्दः ॥

ॐ तत्सत्

# कर्ममीमांसादर्शनम् ।

## क्रियापादः ।

द्वितीय-पादे सृष्टि-प्रवर्तक-निवर्तकानां कर्मवृक्ष-बीजरूपाणां संस्काराणां विज्ञानं वर्णयित्वा सम्प्रति संस्कारमूलकबीजादुत्पन्नस्य वृक्षात्मककर्मणो विज्ञानं वर्णयन्नह तृतीयपादे मुक्तिमार्गं विशदयति—

**प्राकृतिकः स्पन्दः क्रिया ॥ १ ॥**

प्रकृतेरुत्पन्नः प्राकृतिकः प्रकृतिजनित इति यावत् स्पन्दः विषमः परिणामः क्रिया कर्म निगद्यते, इति सूत्रार्थः ।

प्रकृति र्हि त्रिगुणात्मिका । रजोगुणाद्धेतो स्तस्याः परिणामः सदैव सम्पद्यमान एव तिष्ठति । स च परिणामः कदाचन सतो गुणात्तमोगुणाभिमुखं प्रवर्तते कदाचन तु तमोगुणात्सत्त्वाभिमुखं निसर्गत एव विवर्तते । यथा प्रकृतौ त्रैगुण्यं स्वभाव-सिद्धं तथैवायं परिणामोऽपि स्वभावसिद्धः । इदमेव निसर्गसिद्धस्पन्दनं क्रियेत्युच्यते । विषयमिममधिकृत्य प्रपञ्चितं स्मृतिशास्त्रे—

विबुधाः ! साम्प्रतं वच्मि कर्मत्रैविध्यगोचरम् ।
वैज्ञानिकं स्वरूपं वः सावधानै र्निशम्यताम् ॥
स्वभावात् प्रकृति र्मे हि स्पन्दते परिणामिनी ।
स एव स्पन्दहिल्लोलः स्वभावोत्पादितो मुहुः ॥
सदैवास्ते भवन् देवाः ! स्वरूपे प्रतिबिम्बितः ।
तस्मान्मम प्राकृतानां गुणानां परिणामतः ॥
अविद्याऽऽविर्भवेन्नूनं तरङ्गैस्तामसोन्मुखैः ।
सत्त्वोन्मुखैश्च तै र्देवाः ! विद्याऽऽविर्भावमेति च ॥
तदाऽविद्याप्रभावेण तरङ्गाणां मुहुर्मुहुः ।
आघातप्रतिघाताभ्यां जलैः पूर्णं जलाशये ॥
अगण्यवीचिसङ्गेषु नैकवैधवबिम्बवत् ।
चिज्जडग्रन्थिभि र्देवाः ! स्वत उत्पद्य भूरिशः ॥

जीवप्रवाहपुञ्जोऽयमनाद्यन्तो वितन्यते ।
तदैवोत्पद्य संस्कारो नूनं स्वाभाविको मम ॥
कर्मणा सहजेनैव बिश्वविस्तारकारिणा ।
आविर्भावयते सृष्टिं जङ्गमस्थावरात्मिकाम् ॥ १ ॥

को हि क्रियाया नैसर्गिको हेतुरित्याह—

**नैसर्गिको हेतुरस्याः शृङ्गारः ॥ २ ॥**

अस्याः क्रियाया नैसर्गिको निज-स्वभावसिद्धो हेतुः कारणं शृङ्गारः प्रकृति-पुरुषयोरात्मविलासोऽस्तीति सूत्रार्थः ।

जिज्ञासो र्हृदये शङ्केयमुदेतुमर्हति यज्जगति न कोऽप्यहैतुकः पदार्थो विद्यतेऽतश्च स्पन्दजन्यस्य कर्मणः को हेतुः ? कर्मणो बीजं संस्कारः । तस्य च स्वाभाविकस्य संस्कारस्य को हेतुरिति शङ्कापि तदन्तर्गता एव । यदि च स्वाभाविकः स्पन्द एव संस्कारस्य कर्मणश्चोभयोरेव हेतुरुच्येत तर्हि द्वयोरेतयो मौलिकहेतुविषयेऽवश्यं शङ्काऽवशिष्येत । अन्यतश्च संस्कारकर्मोभयजन्यं यद् दृश्यप्रपञ्चात्मकं जगदुत्पद्यते तस्यापि को मुख्यो हेतुः ? संसारश्च कथमुत्पद्यते सृष्टेश्च किं मौलिकं कारणम् ? इत्याद्यनेकशङ्कासमाहितये महर्षिरिदं सूत्रयामास । एतासां सर्वासामपि शङ्कानामेकमेव समाधानं यत्प्रकृति-पुरुषात्मकः शृङ्गार एवैषां सर्वेषां कारणम् ।

इयं ब्रह्मशक्तिः प्रकृति र्यदाऽद्वैतावस्थायां परमपुरुषे परमात्मनि विलीना तिष्ठति, सैव सृष्टिसंस्काररहिता कर्मशून्याऽवस्थोच्यते । सच्चिदानन्दरूपस्य परमपुरुषस्य परमात्मनोऽद्वैतस्वरूपे गुप्तशक्तिवत् प्रकृतिस्तत्र लीना विराजते । तस्याः स्वतन्त्रसत्ता न तदानीं तिष्ठति । यदा परा प्रकृतिस्ततः पृथग्भूय स्वीयां स्वतन्त्रसत्तां दधती परमपुरुषमाश्लिश्यति तदीक्षणाय च परिणमते तदा ह्ययमेव प्रकृति-पुरुषयोः शृङ्गारावस्था सर्वेषामेषां निदानम् । यथा चोक्तं स्मृतिशास्त्रे—

स्वेच्छामयः स्वेच्छया च द्विधारूपो बभूव ह ।
स्त्रीरूपो वाम भागांशो दक्षिणांशः पुमान् स्मृतः ॥
दृष्ट्वा तां तु तया सार्द्धं रासेशो रासमण्डले ।
रासोल्लासे सुरसिको रासक्रीडां चकार ह ।
नानाप्रकारशृङ्गारं शृङ्गारो मूर्त्तिमानिव ।
चकार सुखसम्भोगं यावद्वै ब्रह्मणो दिनम् ॥

विज्ञानमिदमन्यथापि समवबोधयितुं शक्यते । तथा हि-सत् चित् आनन्द

इति त्रिष्वपि ब्रह्मभावेषु सत् चित् इत्युभयन्तु 'अस्ति भाति' इति नियमानुसा स्वयं वेदनीयमस्ति । तत्र आनन्दांश एवैको विनाऽनयोः साहाय्येन वेदनीयो न भवितुमर्हति । यतो हि सतः साहाय्यमन्तरा चिति, चितश्च साहाय्यमन्तरा सति, आनन्दभावांश आविर्भवितुमेव नार्हति । इत्यतश्चानन्दविलासाय प्रकृति-पुरुषात्मक शृङ्गारस्यापेक्षाऽवश्यकी प्रतिभाति । इदमेव सृष्टिप्रपञ्चस्य मौलिकं कारणमूह्यम् ।

तात्पर्य्यतः आनन्दांशस्य स्वतन्त्रतयाऽनुभवाय चितः सतश्च साहाय्य-मवश्यमपेक्ष्यते तदर्थञ्च प्रकृति पुरुषयोः स्वतन्त्रसत्ताऽविर्भवति । नत आर-भ्यैव प्रकृतिः स्वात्मानं विकृत्य स्वसाम्यावस्थां विजहती वैषम्यमुपेत्यैजमाना गुणत्रय-परिणामं दधती महत्तत्त्वादिरूपेणाग्रे परिणमते । अयमेवावस्थापरि-णामः संस्कार-कर्मणोरुभयोर्मौलिको हेतुः ॥ २ ॥

कर्मणो विस्तार-कारणमाह—

**द्वन्द्वशक्त्या वितानम् ॥ ३ ॥**

द्वन्द्वस्य इतरेतरयोगस्य शक्त्या सामर्थ्येन वितानम् प्रसारः कर्मण इति सूत्रार्थः ।

कर्मणः स्वाभाविकत्वेऽपि तस्य विस्तारोऽनन्तशाखापूर्णो दृश्यत इत्यत्र किं रहस्यमिति यदि कश्चन जिज्ञासुराशङ्केत चेत्तत्रोत्तरयति—

प्रथमं प्रकृति-पुरुषात्मकशृङ्गारेण कर्मणः स्वतः समुत्पत्तिः । ततश्च द्वन्द्वशक्तिसाहाय्येन तद्बहुशाखासु प्रवर्द्धमानं भवति । उदाहरणतोऽवगमनीय-मेतदित्थम् यद्—द्वन्द्वशक्ति र्हि बाह्य-जगति रजोमूलिकाऽकर्षणशक्तिः तमो-मूलिका च विकर्षणशक्ति र्गीयते । अन्तर्जगति च रजोमूलको रागः तमोमूलक-श्च द्वेष उच्यते । अनयोरेव शक्त्योर्घात-प्रतिघाताभ्यां कर्म-चक्रमनिशं निर्बाधञ्च प्रचलत्येव । स्थूलजगति ग्रहोपग्रहादीनां गतिः, जैवे जगति गतागत-चक्र-गतिः, मानवान्तःकरणे च कर्मोत्पत्तेरविरतं प्रवाहः सर्वमपीदं द्वन्द्वशक्तिमूलकस्य कर्मणो विस्तार-रहस्यमेवोह्यम् ॥ ३ ॥

सम्प्रति तद्विकाशरहस्यमाह—

**अस्या विकाशो मेघवत् ॥ ४ ॥**

अस्या द्वन्द्वशक्ते र्विकाशो विस्तारो मेघवत् व्योम्नि मेघप्रसारवज्ज्ञेय इति सूत्रार्थः ।

यथा हि मेघशून्ये निर्मले गगने सर्वत्रैव मेघप्रादुर्भावो भवितुमर्हति ।

प्रादुर्भूताश्च मेघाः स्वत एव तद्गगनमाच्छादयन्ति । तदानीञ्च सर्वतो मेघा एव दृश्यन्ते गगनतलञ्च तैराच्छन्नं दृष्टिपथमेव नारोहति, तथैव द्वन्द्वशक्ते र्विकाशः स्थूले सूक्ष्मे प्रपञ्चे सर्वत्र स्वत एव सम्पद्यते । तत्र प्राकृतिक-तरङ्गाणां घातप्रत्याघातावेव निदानतां गच्छतो नान्यत्किञ्चिन्निदानम् ॥ ४ ॥

अन्यच्च —

**रूपशब्दाभ्यामसौ ॥ ५ ॥**

असौ सृष्टिः रूपं च शब्दश्चेति तौ तथोक्तौ ताभ्यां रूपनामभ्यामाविर्भवति इति सूत्रार्थः ।

यत्र सृष्टिरस्ति तत्र रूपशब्दौ ध्रुवं स्तः । स्थूल-सूक्ष्मयोरुभयोरप्यवस्थयोस्तत्सत्ता विद्यत एव । तात्पर्य्यतो यत्रैव दृश्य-प्रपञ्चभानमस्ति तत्र सर्वत्रैव रूपशब्दसम्बन्धोऽनिवार्य्य इति निःसन्दिग्धम् । यतो हि द्रष्टृ-दृश्य-सम्बन्धस्तु रूपं विना सिध्यत्येव नहि । ततश्च रूपसत्त्वे नामसत्ताऽप्यनिर्वार्य्यैव । यतश्चोक्तं श्रुतौ—

"नामरूपे व्याकरवाणि ।"

अन्यदपि—

"सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते ।"

"आकाशो ह वै नामरूपयो र्निर्वहिता" इत्यादि ॥ ५ ॥

कर्मणः प्रत्यक्षफलमाह—

**तया सर्गस्थितिप्रत्यवहारा ब्रह्माण्डपिण्डयोः ॥ ६ ॥**

तया क्रियया ब्रह्माण्डं च पिण्डं च ते तथोक्ते तयोः समष्टि-व्यष्टिसृष्ट्योरिति यावत् सर्गश्च स्थितिश्च प्रत्यवहारश्च ते तथोक्ता उत्पत्तिस्थिति-प्रलया जायन्ते इति सूत्रार्थः ।

ब्रह्माण्ड-पिण्ड-सृष्टिर्हि कर्माधीनेति निर्विवादसिद्धम् । एकं ब्रह्माण्डं यदा प्रलयगर्भे विलीनं भवति तदा तदीय-समष्टिकर्मबीजं संस्कार-राशिः प्रकृत्या सहैव ब्रह्मणि लीनो भवति । तदनन्तरञ्च तस्य ब्रह्माण्डस्य पुनः सृष्टिप्रसङ्गे श्रीभगवान् ब्रह्मदेवः "यथा पूर्वमकल्पयदिति" श्रुत्यनुसारम् तद्ब्रह्माण्डीय-सञ्चित-संस्कारेभ्यः प्रोद्गमनीयानेव संस्कारान् समादाय स्मारं स्मारं तद्ब्रह्माण्डं विरचयति, इत्यनेनेदं सिध्यति यत् कर्मैव ब्रह्माण्डसृष्टे र्निदानमिति ।

यथा हि बीजवृक्षयोरभेदस्तथैव संस्कार कर्मणोरभेदः । तत्रापि कर्मावस्थाया एव प्राधान्यम् । यतो हि कर्मणां स्वातन्त्र्यं विद्यते । संस्कारास्तु कर्मानु-

सारेणैवाऽविर्भवन्ति । अतश्च ब्रह्माण्ड सृष्टौ कर्मणामेव निदानत्वं सिध्यति । द्वितीयतश्च पिण्डसृष्टिस्तु कर्माधीनेति प्रत्यक्षसिद्धोऽर्थः ।

"कर्माधीनं जगत्सर्वम् ।"

इति लोकप्रवादोऽपि विज्ञानमिदं समर्थयति । इदन्तु पूर्वमेव साधु प्रपञ्चितं यद् प्रतिमानवं कर्मबीजात्मकाः संस्कारसमूहाः केन प्रकारेण सञ्चितक्रियमाण-प्रारब्धरूपेण परिणमन्ते । तत्र च प्रारब्धकर्माण्येव केन प्रकारेण पिण्डोत्पादने कारणतां विन्दन्ति इत्यादि । अस्तु तावत्, मानवदेवपिण्डानि सर्वाण्यपि प्रारब्धकर्मत एवोत्पद्यन्त इति तु सिद्धमेव । अधुना सहजपिण्डकथाऽवशिष्यते चेत् तस्यापि साधु विवरणं संस्कारपादे प्रपञ्चितम् । तथा हि कथं स्वाभाविकः सहजो वा संस्कारराशिः कर्माधीनः कथञ्च तदीयो विस्तार इत्यादि तत्रैव कणेहत्य द्रष्टव्यम् । ब्रह्माण्डपिण्डयोरुभयोरुत्पत्तिः सर्वथा कर्माधीनैवेति निगदव्याख्यातोऽर्थोऽवगमनीय एव ॥ ६ ॥

अपरञ्च—

**आकर्षण-विकर्षणे च ॥ ७ ॥**

आकर्षणञ्च विकर्षणञ्चेति ते तथोक्ते अपि कर्मण एव फले स्त इति सूत्रार्थः । कर्मणः साक्षात्फलस्यापरमुदाहरणं ददाति । यत् परमाणुत आरभ्य ग्रहोपग्रहादिषु, पिण्डत आरभ्य ब्रह्माण्डं यावत् याऽकर्षण-विकर्षणशक्ति दृश्यते साऽपि कर्मण एव प्रत्यक्षफलमवभासते। परमाणुपुञ्जं यदा परस्परमुपतिष्ठते तदाऽकर्षणशक्तिरेव तत्र हेतुत्वमेति । तस्यैव परमाणु-पुञ्जस्य परस्परवियोगावस्थायां विकर्षणशक्तिरेव हेतुतां व्रजति । सृष्टिकाले हि परमाणूनां परस्परं योगाः प्रलये तु वियोगाः भवन्ति । प्रस्तरकाष्ठप्रभृति-साधारणतत्त्वादारभ्य पृथिव्यादिलोकेषु सर्वत्रैवेयं क्रिया प्रचलति । तस्या अपि मूले कर्मैव प्रधानं स्थानं बिभर्ति ।

इत्थं हि अन्तर्जगति रागात्मिकाऽकर्षणशक्ति विद्वेषात्मिका च विकर्षणशक्तिरित्युभे अपि यदन्तःकरणं सदैव तरङ्गसम्वलिते कुरुतस्तत्र सर्वत्रैव कर्मणोऽसाधारणशक्तिरेव सञ्चालयित्री विद्यते । प्रस्तरादिस्थावरपदार्थेषु सहजकर्मणः शक्ति ब्रह्माण्डपिण्डात्मक-सृष्टि-क्रियायामन्तःकरणवृत्तिक्रियायां च जैवकर्मणः शक्तिरित्येवं सर्वत्र कर्मशक्तिरेव नियामिका विद्यते ॥ ७ ॥

सम्बन्धेनानेन क्रियाभेदं विभजते—

**ऊर्ध्वगाऽधोगा च ॥ ८ ॥**

सा हि सृष्टिसञ्चालयित्री क्रिया ऊर्ध्वं गच्छति इत्यूर्ध्वगा ऊर्ध्वगामिन अधोगच्छतीति अधोगा अधस्तलगामिनी इत्युभयप्रकारा विद्यते इति सूत्रार्थः ।

अनन्तरूपिणः कर्मसाम्राज्यस्य क्रियाया द्वौ भेदौ स्तः । एकोर्ध्वगामिनी क्रियाऽपरा चाधोगामिनी क्रियेति । पापपुण्यात्मिकयोः कर्मशक्तिजन्यक्रिययोर्मध्ये पुण्यक्रियोर्ध्वगामिनी पापक्रिया चाधोगामिनी ज्ञेया । जन्मान्तरगतिक्रियासु भूर्भुवःस्वर्जनाद्यूर्ध्वलोक-गमनक्रिया हि ऊर्ध्वगामिनी, नरकप्रेतलोकादिगमनक्रिया चाधोगामिनी ज्ञेया । सूर्य्यस्य चोदयगति रूर्ध्वगा क्रिया, अस्तगतिश्चाधोगा क्रियाऽवसेया । इत्थं हि जीवपिण्डस्य कौमारयौवनावस्थे चोर्ध्वगामिन्याः क्रियायाः फलम्, वार्द्धक्यञ्चाधोगामिन्याः फलमूह्यम् । अन्ताराज्ये चाक्लिष्टवृत्तय ऊर्ध्वगति-शीलाः क्लिष्टवृत्तयश्चाधोगतिशीलाः । एवमेव रजोगुणस्य सत्त्वोन्मुखी गतिरूर्ध्वगा क्रिया तमोगुणोन्मुखी च अधोगा क्रियेति विवेकः संक्षेपतो ज्ञेयः ॥ ८ ॥

प्रसङ्गतः शङ्कासमाधाने ब्रूते—

**नैसर्गिकी कर्मसंस्कारजा सृष्टिः ॥ ॥**

कर्म च संस्कारश्चेति तौ तथोक्तौ ताभ्यां जायते इति कर्मसंस्कारजा कर्मसंस्कारजन्या सृष्टिः नैसर्गिकी स्वभावसिद्धेति सूत्रार्थः ।

सृष्टि-क्रिया, कर्म-जन्या संस्कारजन्येत्युभयथाऽप्युच्यते । यतो हि संस्कारः कर्म बीजमस्ति कर्म च संस्कारबीजस्य वृक्षोऽस्ति । इत्थञ्च सृष्टेरुभयजन्यत्वाभिधाने न कोऽपि दोषः । अन्यतश्च त्रिगुणात्मिकत्वं हि प्रकृतेः स्वभावः । कर्म च स्वभावेनैव प्रकृतिकल्लोलतो जायते । संस्कारोऽपि स्वत एव स्वाभावतो जायत इति पूर्वाध्याये प्रमाणितमेव । इत्थञ्चेवमपि तदाङ्गीकरणीयमेव यत् सृष्टिक्रियाऽपि कर्मसंस्कार-जन्या सती प्रवाहरूपतया स्वाभाविक्येव ॥ ९ ॥

प्रकृत-विज्ञानञ्चोदाहरणतः समर्थयति—

**ऊर्णनाभिवत् केशलोमवच्च ॥ १० ॥**

सा हि सृष्टिः ऊर्णनाभिवत् केशलोमवच्च ज्ञेयेति सूत्रार्थः । यथा हि ऊर्णनाभिः कीटः स्वप्रकृतिपरवशः स्वयमेव ऊर्णाजालं निर्माय बृहत्प्रपञ्चं रचयति, यथा च मनुष्यदेहे स्वभावत एव केशलोमानः प्ररोहन्ति, तथैव कर्मजन्यं सृष्टिप्रपञ्चं स्वत एव सम्भवति ॥ १० ॥

प्रसङ्गतःकर्मणा सार्धं शक्तिसम्बन्धं दर्शयति—

**शक्तिः कर्मायत्ता हिमालयैश्वर्य्यवत् ॥ ११ ॥**

सर्वापि शक्तिः कर्मण आयत्ता अधीना हिमालये ऐश्वर्य्यवत् इति सूत्रार्थः । यथा हि जगत्प्रसिद्धो हिमालयो गिरिः सर्वेषामप्यैश्वर्य्याणां निधिभूतो विद्यते,

यतो हि सर्वेऽपि प्रसिद्धा नदीनदा हिमालयत एवोद्भवन्ति, सर्वविधा अपि रत्नराजयः, सर्वेऽपि सुवर्णादयो धातवः, अन्येऽपि यावन्तः खनिजाः पदार्थाः सन्ति ते सर्वेऽपि हिमालयगर्भेऽनायासेनैव लभ्यन्ते। सर्वेऽपि वनस्पतयो वनौषधिविशेषाश्च हिमालयस्यैव सुविशाले वक्षःस्थले समुपजायन्ते। इह जगति नास्ति कोऽपि वन्यो जीवः पशुः पक्षी उद्भिद् वा यो हिमालयाश्रयेण न जीवति। सर्वोऽपि प्राणिसमूहः साक्षात् परम्परया वा हिमालयमाश्रित्यैव जीवतीति निर्विवादः पन्थाः। सामान्य-निदर्शनतः सिध्यतीदं यद् हिमालयः सर्वेषामप्यैश्वर्याणां निधानम्। प्राकृतिकसुषमायास्तु आकर एवायं पर्वतराजो विद्यते। तद्विषये तु जगत्त्रयी सुषमापि जिह्रेति तुलयितुमिमं नगाधिराजमिति कालिदासोक्तिरेव बहु विद्यते। "अनन्तरत्न प्रभवस्य यस्य" इत्यादि।

इत्थमेव आध्यात्मिकाधिदैवाधिभौतिक्यः सर्वा अपि शक्तयः कर्माश्रिता एव प्रादुर्भवन्ति। जगति यावत्योऽपि मानव्यः शक्तयः सन्ति। दैव्यो वा शारीरिक्यो मानसिक्यो लौकिक्य आत्मिकशक्तयो वा स्युः। ब्राह्मशक्तिर्वा स्यात् क्षात्रशक्तिर्वा स्याद् विद्याशक्ति धनशक्ति युद्धशक्ति बुद्धिशक्ति बलशक्तिर्याः का अपि शक्तयः स्युः सर्वा अपि कर्मबलादेव लभ्यन्ते। इति कर्माधीना एव सर्वाशक्ति विज्ञेयेति संक्षेपः॥ ११॥

कर्मोत्पत्ति-विज्ञानं द्रढयति—

**सच्चितो र्गमागमतः कर्म॥ १२॥**

सच्च चिच्च तौ तथोक्तौ तयोर्गमागमतः गमनागमनाभ्यां कर्म क्रियोत्पद्यत इति सूत्रार्थः।

आनन्दानुभवार्थं या चितः सकाशात्सदभिमुखी सतः सकाशाच्च चिदभिमुखी गतिर्भावतरङ्गस्य सैव कर्मोत्पत्तेर्निदानम्। सैव सृष्टिकारणमप्यभिधातुं शक्यते। यद्यपि कर्मोत्पत्तिसृष्टिविज्ञानं पूर्वं साधु प्रपञ्चितं विद्यते, तथापि कर्ममाहात्म्यं द्रढयितुं पौनःपुन्येनाभिधीयते। तथा हि—आनन्दानुभवो हि विना सतः चितश्चोभयोः साहाय्येन नैव भवितुमर्हति। अतश्चानन्दानुभवाय सतः सकाशात् चिदभिमुखानुभवसम्बन्धेन चितः सकाशाच्च सदभिमुखानुभवसम्बन्धेन च यो हि विविधभावानुभवः स्वातन्त्र्येण जायते, स एव कर्मोत्पत्तेर्मौलिकं कारणं निगद्यते। समाधिस्थो योगी विज्ञानमिदं वेत्ति, यत्प्रकृतेर्लयावस्थायां यदाऽद्वैतरूपे ब्रह्म-सद्भावोऽस्ति तदा सच्चिदानन्दानां त्रयाणाम-

ण्यद्वैतावस्थायामेव सद्भावः। एवञ्चेदृश्यां स्वरूपावस्थायां त्रयाणामप्येषां भावानां पृथक् पृथगनुभवोऽसम्भवी। परन्तु यदा हि त्रयाणामेषां पृथगनुभवो भवितुं प्रक्रमते तदा प्रथममेव चिद्भावस्य सद्भावस्य चानुभवः पृथगवभासते। 'अस्ति' 'भाति' इत्येतद्धि द्वय सतः चितश्चानुभवे हेतुर्भवति। इदानीमेव ब्रह्मप्रकृतिरव्यक्तावस्थां विहाय सूक्ष्मावस्थामवलम्बते। इयमेवावस्था कर्मोत्पत्तेः कारणतां याति। यद्यपि प्रकृते गुणत्रयस्य स्फुटविकाशवेलायामेव कर्मणो याथार्थ्येन समुत्पत्ति र्भवति, तथापि इमां पूर्वावस्थामेव मौलिकं कारणं कथयितुमपार्य्यते। इति ॥ १२ ॥

प्रसङ्गतः कर्मणो विशिष्टमहत्त्वमभिदधाति—

## कर्मसमष्टि र्विश्वसामञ्जस्यकृन्नदीप्रवाहवत् ॥ १३ ॥

कर्मणां समष्टिः समुदाय; विश्वस्य जगतः सामञ्जस्यं सुव्यवस्थानं करोति नद्याः प्रवाहेण तुल्यं तद्वत् सरिद्वारासमम् (तेन तुल्यं क्रिया चेद्वति इति तद्धितो वतिः) इति सूत्रार्थः।

यथा हि सरित्प्रवाहः स्वीयजलप्रवाहं नियमतः समुद्रे प्रवाहयन् जलसामञ्जस्यं रक्षति, यतो हि वर्षर्तौ देशं जलप्लावनाद्रक्षन् निम्नोन्नतस्थानं च यथापेक्षितजलपूर्णं कुर्वन् अधिकं जलं सागरे नीत्वा पातयति, तथैव ब्रह्माण्डसमष्टिकर्म सदैव ब्रह्माण्डसामञ्जस्यरक्षणे व्यापृतं तिष्ठति। यतो हि ऋतूनामुत्पत्तिस्थिति-पर्य्यालोचनया, सूर्य्यस्य गतिशक्ति-निरीक्षणेन, मेघराशीनां प्रादुर्भावेन वाष्पकणानाञ्च गगने उड्डीय सङ्घीभूय जलवृष्टिरूपे परिणमन-भावस्य समीक्षणेन महायुद्ध-महामारीप्रभृति-दैवकोपात्मकक्रियायाः मूलानुसन्धानेन, चेदमेव सिध्यति यत् सृष्टेः सामञ्जस्य-रक्षार्थमेवेमाः सर्वा अपि समष्टि-क्रियाः प्रवर्तन्ते ॥ १३ ॥

विज्ञानमिदं स्पष्टयितुं सर्वमूलमनुसन्दधाति—

## त्रैगुण्यमयी सर्वमूलम् ॥ १४ ॥

त्रिगुणानां भावस्त्रैगुण्यं तत् प्रचुरं यत्र सा त्रैगुण्यमयी त्रिगुणात्मिकेति यावत् प्रकृतिः सर्वेषां मूलमादिकारणमस्तीति सूत्रार्थः।

सूक्ष्मातिसूक्ष्मविचारणयापि त्रिगुणात्मिका प्रकृतिरेव सर्वेषां मूलं कारणं सिध्यति। अद्वैतावस्थामधिरूढस्य ब्रह्मणो द्वैतदशायां यः कोऽपि परिणामः स्फुरति तस्य सर्वस्यापि प्रकृतिरेव सम्पादिकेति सैव कारणं सा च स्वयं त्रिगुणात्मिकेति सुप्रसिद्धमेव।

# सूर्योदयः ।

नवमे वर्षे } शुक्ल-वैशाखस्य पूर्णिमा सं० १६८१ { एकादश-संख्या

## सम्पादकीया अभिप्रायाः ।

—०❀०—

**धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।**

—:❀:—

अयि संस्कृताध्यायिनो विद्वांसो विद्यार्थिनश्च !

विमृशन्तु भवन्तो यदियमुपरि निर्दिष्टा मानवोक्तिः कीदृग् अन्वर्था प्रामाण्य-पदवीमारोहतीति । यदि भवन्तः क्षणमिह विषये सावधाना भूत्वा मनोयोगं दास्यन्ति चेत्तदा स्फुटमेवाभिप्रायोऽस्या मानवोक्तेर्हृदयङ्गमो भविष्यति । अव-धानेन पश्यन्तु (१) सनातनो धर्मः (२) संस्कृतविद्या (३) ब्राह्मणवर्गश्चेत्यन्यो-न्याश्रिता इमे सर्वे पदार्थाः सन्ति । यदा सनातनधर्मस्याभ्युदयो भवति । तदैव संस्कृत-विद्याया अभ्युदयः । यदा च संस्कृतविद्याभ्युदय स्तदा ब्राह्मणवर्गस्या-भ्युदयः, ब्राह्मणवर्गाभ्युदयेन देशस्य, भारतीय-सभ्यतायाः, सर्वेषामेव वर्णानाम-भ्युदय इत्यभ्युदयपरम्परैव समेधते । तद्विषये तु पुनरवसरप्राप्तौ समभिधा-स्यामः । सम्प्रति तु सर्वतः प्रथममेषां त्रयाणां पदार्थानां परस्परमन्योन्याश्रयः सम्बन्ध इत्येवाभिधानीयं विद्यते, यच्चेह प्रथमं ज्ञातव्यं मानवानाम् । एवमेव संस्कृताभ्युदयेन सततं सनातन धर्म्मस्याभ्युदयस्तेन च ब्राह्मणानाम् । इत्थं हि ब्राह्मणानामुन्नत्या सनातनधर्मस्य संस्कृतविद्यायाश्चाभ्युदय इति । किं बहुना, परमकारुणिकेन राजधर्मजागरूकेण चाणक्येनाप्युक्तम्—

व्यवस्थितार्य्यमर्य्यादः कृतवर्णाश्रमस्थितिः ।
त्रय्या हि रक्षितो देशः प्रसीदति न सीदति । इति ।

अत एव प्राक्तना महर्षयो विद्वांसो वा स्वसनातन-धर्मरक्षार्थं न कमप्युद्योगमवशेषितवन्तस्तेन च तेषां प्रियोऽयं सनातनो धर्मः सर्वदा सुरक्षितो भूत्वा तानपि तथैव रक्षति स्म। अलौकिकोपकार्य्योपकारकभावस्तु यो विद्यते धर्मेण सह मानवानां तस्य तु विचारणैवेह नास्ति। सर्वेषामेव मानवानां स्व-स्वधर्मरक्षया इहैव लोके तेषां रक्षणं कीदृग् भवतीत्ययमपि विषयो नेह विचार्य्यते विस्तृतिभयाद्। इह तु एको लघुरंश एव विचार्य्यते यत् सनातनधर्मस्य कियतो बाह्यस्वरूपस्यैव रक्षया कीदृशी भवति रक्षा तद्रक्षकवर्गस्येति।

पूर्वजा अस्माकं सर्वधर्मोपदेशकं ब्रह्मणो निःश्वासात्मकं वेदं प्राणपणेन रक्षितवन्तस्तद्रक्षया च तेषां कीदृशी रक्षा इह जगतीतले आसीदिति कथनस्यावश्यकतैव नास्ति। तदनन्तरमपि।

> "स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।
> कर्मश्रेयसि मूढानां तेषां श्रेयः कथं भवेद्॥"
> इति भारतमाख्यानं कृपया मुनिना कृतम्। इति।

महाभारत-पुराणादि-प्रणयनेन सनातनं धर्मं रक्षितवतां तेषां तद्रक्षयैव कीदृशी जगति रक्षा समजनि इति सर्वे मानवा जानन्त्येव। सम्प्रत्यपि भारते वर्षे सर्वत्र ब्राह्मणानाम् पूजा दृश्यते, तदस्माकं पूर्वजानामेव कृतमुपकारं जना अधुनाऽपि न विस्मरन्ति, नह्याधुनिकानामस्माकं ब्राह्मणानां कर्मणः समुद्योगस्यापि फलं तत्। तत्तु पूर्वजानां तपःप्रभावमाहात्म्यं येनाकर्मण्या अपि वयं ब्राह्मणाः सर्वत्र पूज्यामहे इति।

साम्प्रतमस्माकमिदमेव वक्तव्यं विद्यते यदस्माकं पूर्वजाः सर्वथा सर्वदा स्वप्राणपणेनेमं सनातनं धर्मं रक्षितवन्तः। यदा यदा यादृगवसर आयाति स्म तदा तदा तैस्तदवसरानुकूलं धर्मरक्षणं कृतमभूत्। तेषां धर्मव्यवस्थारक्षणं तु एतादृग् दृढं विद्यते यदस्माकमालस्यप्रमादादिदोषबाहुल्येऽपि न तादृग् ह्रासमुपैति। पश्यन्तु प्रतिगृहं प्रतिपर्व किमपि किमपि व्रतकथामाहात्म्यादिकमित्थं प्रकल्पितं तैर्विद्यते यस्याश्रयेणाधुनाऽपि सर्वत्रैव हिन्दूनां गृहेषु स्त्रीवर्गे श्रीसनातनधर्मस्याविहतः प्रचारो दृश्यते। अधुनापि प्रतिगृहं हिन्दुललनाः पर्वणि पर्वणि सनातनधर्मस्याङ्गरूपतः पातिव्रत्य-धर्म-सत्य-पालन-गोमाहात्म्य-जीवदया-दुःखिजनत्राण-देवपूजन-कायेन्द्रियसंयम-प्रभृतीन्यनुतिष्ठन्ति। येन सनातनधर्मस्य हिन्दुपुरुषेभ्योऽपि हिन्दु-महिलासु साम्प्रतमपि नाम्ना कर्मणा चाधिका चर्चा विद्यते। येन तद्रक्षया बहवो ब्राह्मणाः सम्प्रति स्वजीवनयात्रां गोपायन्ति।

अतो वयं ब्रूमः "धर्मो रक्षति रक्षितः"। यदि वयं सनातनधर्मं रक्षिष्यामस्तर्हि प्रत्यक्षत एवायमस्मानपि रक्षिष्यति । यथा सन्ध्यावन्दनं ब्राह्मणानां नित्यं कर्मास्ति । यदि वयं नित्यं सन्ध्यावन्दनरूपं नैजं धर्ममाचरन्तः स्व-ब्राह्मणत्वनिष्पादकं तं धर्मं गोपायामस्तर्हि सोऽपि स्वाभाविको धर्मोऽस्मासु ब्राह्मणत्वयोग्यतां सम्पादयन्नस्मान् सर्वथा रक्षति । यदि वयं प्रात्यहिकं सन्ध्यावन्दनं प्रमादालस्यादिना विस्मृत्यापि सन्त्यजामस्तदा स एवास्मान् सर्वथापि शूद्रवद् ब्राह्मणकर्तव्यकर्मणो बहिष्कुर्वन् हन्ति । एवमेवेदानीं वयं यदि स्वोदरपूरणपरायणाः सनातनधर्मप्रचारं विहाय केवलं स्व-जीविकायै प्रयतामहे । तदा तेनास्माकं यत्नेन सनातन-धर्मस्य न भवति कोऽपि उपकारः। येन च स सनातनोधर्मः ह्रासमुपैति । तस्य च ह्रासेन संस्कृत-विद्याया अपि ह्रासः । तेन च ब्राह्मणवर्गस्यैव ह्रासो हानि र्वा भवति । यतश्च तेषु एव ब्राह्मणवर्गेषु एकतमा वयं प्रत्यक्षतस्तु स्वाभ्युदयार्थं यत्नं कुर्मः परन्तु अप्रत्यक्षरूपेण स्वाभ्युदयमेव विहन्तुं प्रवृत्ता भवामः। येन " यां शाखामुपविष्टस्तामेव च्छिनत्तीति" लोकव्यवहारं चरितार्थयामः । "स्वहस्तेनैव स्वपादं च्छिनत्ति" इति न्यायं वा सफलयामः ।

सम्प्रति सर्वत्रैव हिन्दूनां गृहे न भवति सनातनधर्मस्य तथानुष्ठानं यथापूर्वं भवति स्म । सम्प्रति बालकास्तरुणा वृद्धा वा इङ्गिलशभाषाध्ययनतोऽज्ञातधर्मरहस्या विधर्मिणां प्रचारेण स्वज्ञानदुर्बलतया च दुर्बलतर्केणाप्युन्मूलित-श्रद्धा भूत्वा स्वल्पेनैवाघातेन सनातनधर्मानुष्ठानं विजहति । तेषां स्त्रियोऽपि अस्माकं प्रमादालस्यादिदोषतः सनातनधर्मप्रचारमनुपलभ्य ततो विरता भूत्वा अन्यधर्मानुष्ठानं वा परम्परागतं सनातनधर्मस्यैव बाह्यं रूपमेव वा दैनन्दिनं विगुणयन्ति, अन्यथास्वरूपेण वानुतिष्ठन्ति । येन द्रष्टृणां ततोऽपि द्विगुणा सनातनधर्मतोऽश्रद्धा जायते । येन च स्त्रियोऽपि तैः सनातनधर्मकृत्यानुष्ठानान्निरोध्यन्ते। स्वयन्तु ते ततो विनिवृत्ताः सन्त्येव ।

इत्थं प्रतिदिनं दिने द्विगुणं रात्रौ चतुर्गुणं सनातनधर्मस्य ह्रासो विवर्द्धते। अवशिष्टे स्त्रीवर्गेऽपि पाश्चात्यसभ्यतापोषणकर्त्री इङ्गिलशभाषा-शिक्षा प्रविश्य मूलत एव सनातनधर्ममून्मूलयितुं प्रवृत्ता दृश्यते । सर्वतः प्रविष्टायामस्यां का दशा सनातनधर्मस्य भाविनीति तु ईश्वर एव जानाति । सर्वोऽप्ययमस्माकं संस्कृतज्ञानां प्रमाददोष एवास्ति । यतो वयं केवलं संस्कृताध्ययनन्तु कुर्मः । परन्तु संस्कृताध्ययन-समेधकं सनातन-धर्म-प्रचार-रक्षण-प्रकारोपायादिकं न कुर्मो येन न भवति स्वल्पमपि रक्षणं सनातनधर्मस्य, तद्रक्षाभावाच्च न वर्द्धते ब्राह्मणवर्गस्य समादरणम् । ततश्च ह्रासमुपेता वृत्तिसमुपार्जनव्यग्रा ब्राह्मणाः संस्कृता-

ध्ययनाद्विरमन्ति । संस्कृताध्ययनतो विरताश्च स्वगर्हितानुष्ठानेन सनातनधर्मं विघातयन्ति । विहतश्च सनातनो धर्मः स्वरक्षकानपि विघातयति । एवमन्योन्याश्रय-सम्बन्धसम्बद्धा इमे त्रयोऽपि पदार्थाः परस्परमात्मानं विघातयन्ति । यद्येवम-ग्रेऽपि सनातनधर्मरक्षायै वयं न यतिष्यामहे तर्हि, इतोऽपि सर्वे त्यक्तसनातनधर्मा-नुष्ठानाः संस्कृताध्ययनाध्यापततो विरहिता ब्राह्मणान् नामतोऽपि न प्रदयन्ति । अतश्च यदि 'धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः' इति मानवोक्ति र्भवतो लेश-तोऽपि स्पृशति चेत्तदाऽद्यैव बद्धपरिकरा भूत्वा यथा स्यात्तथा सनातनधर्मरक्षायै सन्नद्धा भवन्तु । इतो भारतधर्ममहामण्डलस्थाखिलभारतवर्षीय-संस्कृतविश्ववि-द्यालय ( परीक्षायूनिवर्सिटी ) तः प्रवर्तितां धार्मिकीं परीक्षां दत्वा प्रति पुरुषं प्रतिग्रामं प्रतिनगरं प्रतिपाठशालं धर्मव्याख्यानादिना सनातनधर्मप्रचारेण च तदीयरक्षां कुर्वन्तः स्वब्राह्मणवर्गस्य, स्वधर्मस्य, संस्कृताध्ययनस्य,तेन च भारत-वर्षीयाणां सर्वेषामेव वर्णानां, सर्वासां जातीनां, संस्कृतेः, सभ्यतायाः, मानमर्यादा-याश्च सर्वथा रक्षां कुर्वन्तु । सफलयन्तु स्वजीवनं ब्राह्मणयोनिषु जायमानम् ।

एतद्देश प्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥

इति डिण्डिमनादं स्वधर्मोपदेशं पुनर्यथापूर्वं चरितार्थं कुर्वन्तः

"धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः" इति

मानवोक्तिं प्रत्यक्षत एवानुभवन्तु, अलम् विज्ञेषु बहूक्तेन ।

× × × × ×

## संस्कृतच्छात्रेषु लेखकलाभावः ।

—०—

अयि संस्कृत-प्रणयिनो विद्यार्थिनो विद्वांसश्च !

वयं सर्वदाऽनुभवामो यत् प्रायः संस्कृताध्यायिनश्छात्रा लेखनकला—विरहिता भवन्ति । प्रथमतस्तु एषु बहूनामक्षराणि एवं भ्रष्टानि भवन्ति, येषां पठने कालव्ययोऽपेक्ष्यते । लेखन-पत्रस्य कोऽपि भाग एभी रिक्तो न त्यज्यते । वाम-भागे उपरि भागे च कियत् स्थानं त्यक्त्वा लेखप्रारब्धिर्विधेयेति साधारण-नियमोऽपि बहुभि र्न पाल्यते । सर्वं लिखित्वा स्वपूर्ण-संकेत-लेखनन्तु प्रायशो बहवो विस्मरन्त्येव । हिन्दी-लेखकेषु इंगिलशलेखकेषु चायं नियमो वर्तते, यत्ते पत्रादि-लेख-प्रारब्धितः प्रथममेवोपरि दक्षिण-भागे तिथिम् स्वकीयम् पूर्णं संकेतञ्च लिखित्वा ततः पत्रादि-लेखनं प्रारभन्ते । इमे तु नियमामिमं सर्वथाऽव-

हेलयन्ति । अवसानेऽपि इतिवृत्तलेखनव्यग्राः सर्वमपि पत्रम् इतिवृत्तलेखनेनैव संभृत्य स्वसंकेतादि-लेखनं तु विस्मरन्ति । तस्मिन्नेव पत्रे साग्रहं सानुरोधश्च लिखन्ति यदुत्तर-प्रदानेनानुग्राह्योऽहमिति । बहवः ~)। पणपञ्चकस्य चिटिकां प्रेष्य कथयन्ति "यदुत्तरं शीघ्रं ददातु-मम लेखः कस्मिन्नङ्के सूर्य्योदयस्य प्रकाशमेष्यति इति" परन्तु स्व-संकेत-लेखनमेव त्यजन्ति ।

इत्येवं बहवस्त्रुटयो बहुभि र्महात्मभिः क्रियन्ते । येन वयन्तु उद्विग्ना भवामः संस्कृताध्यायिनां पत्रादिव्यवहारात् । तेषां पत्रपठनार्थमेव कियतां समयानां व्ययो भवति । तथापि किमयं लिखतीति भावनिःसारणं दुस्तरमेव । लेखाश्च शब्दाडम्बर-बहुला भावशून्या भवन्ति । येषां संशोधने बहुकालव्ययोऽपेक्ष्यते । इत्यादि बहवो दोषा भवन्तीति किञ्चिन्नाममात्रतोऽभिधाय वयं तेषामपाकरण-मार्गमादिशामः । ये भावुकाः सूर्य्योदयपाठकाः सन्ति तेऽवश्यं तदनुष्ठाने प्रवृत्ता भवेयुरिति ।

पश्यन्तु, भवन्तः प्रतिदिनं किञ्चित् लिखन्तु । संस्कृते पत्रं लेखितुमभ्यस्यन्तु । पूर्वमुपरि किंचित् स्थानं त्यक्त्वा स्वलेखाऽऽधारपत्रस्य दक्षिणभागे स्वसंकेतेन सहैव तिथिश्चापि लिखन्तु । तदनन्तरं स्पष्टशब्दैः विज्ञापनीयमितिवृत्तं लिखित्वा साधुलिपिभिरन्तेऽपि स्वीयं पूर्णं संकेतं लिखन्तु । लेखानामपि अभ्यासः कर्तव्यः । समाचारपत्रेभ्यः कोऽपि संक्षिप्तः समाचारः सरलेन स्वसंस्कृतेनानूद्य स्वगुरवे दर्शनीयः । पुनश्च तेन संशोधितः स स्वाक्षरेण सम्पूर्णः सर्वत एव पत्रान्तरे लिखित्वा संस्थापनीयः । एवं रीत्या भवतामनुवाद-सरणिः समीचीना भविष्यति । इदानीन्तु संस्कृतपरीक्षायामपि सर्वस्मिन्नेव खण्डे अनुवाद-पत्राणि भवन्ति । तत्रैवमेवैकदा तत्र परीक्षाकेन्द्रे गत्वा लेखनेन कथं भवतामनुवादः समीचीनो भविष्यति । भवन्तु बहवो लेखदोषादेव परीक्षायां पतन्ति इति निश्चिनुमः । तत्रापि तु प्रश्नोत्तरपत्रे ईदृशमेव भवन्तः लेखिष्यन्ति । वामभागे किञ्चिदपि स्थानं न त्यक्ष्यन्ति । अक्षराणि च ब्रह्मलिपितोऽपि विशिष्टानि लेखिष्यन्ति ।

प्रत्यहं नियमतोऽनुवादनिबन्धादि-लेखाभ्यासाभावाच्च किञ्चित् लिखित्वा पुनस्तत् छित्वा पुनरन्यत् लेखिष्यन्ति । पुनस्तत्राशुद्धि-बाहुल्यं स्वयं दृष्ट्वा तस्य कर्तनं कृत्वाऽन्यल्लेखिष्यन्तीत्येवम् भवतां समयातिपातोऽपि भविष्यति । परीक्षकाश्च भवतामुत्तरपत्राणि दृष्ट्वा उद्विग्नमनसो भूत्वा भवतोऽयोग्यान् मत्वा समीचीनमप्युत्तरं भवतां दुरुत्तरं मन्वाना भवतोऽनुत्तीर्णान् करिष्यन्ति । आहोस्वित् स्वल्पमेव लब्धाङ्कं दास्यन्ति । येन भवतां चरमाङ्कसंकलनं ( टोटल ) न पूर्णं भविष्यति । एवं बहवो दोषा उद्भवन्ति लेखकलाभ्यासाभावादिति ।

वयं हितबुद्धया समुपदिशामः संस्कृतच्छात्रान् यत्ते ऽवश्यं प्रत्यहं किञ्चिल्लिखन्तु । स्व-संस्कृतानुवाद-शक्तिसम्वर्द्धनाय च 'सूर्य्योदयं' पठन्तु । बहून् छात्रान् एवं वदतः शृणुमो वयं यत् "मया तु सम्यक् परीक्षायां प्रश्नपत्राणामुत्तरं दत्तं परन्तु न जाने कथमनुत्तीर्ण" इति । बहवश्च बहुवारं परीक्षां ददति, परन्तु सर्वदा अनुत्तीर्णा एव भवन्ति । तत्र बहूनां लेखकलाभाव एव हेतुरनुत्तीर्णतायामिति निश्चितं विदन्तु । बहवश्च महात्मानो लेखकलाविज्ञानाभावादेव परीक्षकप्रश्नाभिप्रायादधिकं लिखन्ति । बहवश्चापेक्षितादपि न्यूनमेव लेखिष्यन्ति । बहवश्च "आम्रान्पृष्टः कोविदारानाचष्टे" इतिलोकोक्तिं चरितार्थयन्तः प्रश्नार्थविज्ञानाभावादन्यदेव लेखिष्यन्तीति सर्वथा लेखप्रधाने परीक्षायुगेऽस्मिन् ग्रन्थाभ्यासेन समं लेखकलाविज्ञानमपि नितान्तमावश्यकम् ।

अतश्च वयं सर्वानेव संस्कृतज्ञान् छात्रान् सानुरोधं साग्रहं सूचयामो यत्ते स्वलेखकलां सर्वथा संवर्द्धयेयुस्तस्याः कृते सूर्य्योदयप्रभृतिसरल-गद्यमय-संस्कृत-वाङ्मयपठनं प्रत्यहं लेखाभ्यासश्चेत्युभयमेव हेतुः । अतश्च पाठ्यपुस्तकाध्ययनेन समं लेखेऽनुवादे चाधिकं ध्यानं दद्युरित्यप्यस्माकं वक्तव्यम् ।

* * * * *

## काशिक-राजकीय-संस्कृतपरीक्षायाः केन्द्रम् ।

——:※:——

अस्मिन्नेव सूर्य्योदयेऽन्यत्र श्रीचन्द्रशेखरशर्मणः स्नातकस्य संक्षिप्तं पत्रमस्माभिः प्रकाशितम् । तत्पत्रवृत्तेन ज्ञायते यद्देहरादूनमध्ये संस्कृत-परीक्षाकेन्द्रसंस्थापनेनाकिञ्चनानां हरद्वारस्थानां सहारनपुर—मण्डलनिवासिनां च छात्राणां तत्रगमने प्रयासो द्रव्यव्ययश्चाधिको भवति । छात्रा अपि हरद्वारीय-विद्यालयस्था एवाधिका भवन्ति, न देहरादूनस्थाः । सत्येवं व्यतिकरे वयमपि संस्कृतच्छात्राणां सौविध्यचिन्तया परीक्षाधिकारिणो निवेदयामो यदत्र विषयेऽवश्यं स्व-संस्कृत-विद्यालयनिरीक्षकमहोदयैः सह परामर्शं कृत्वा यत्र संस्कृतविद्यालयानां छात्राणाञ्चाधिक्यं स्यात्तत्रैव केन्द्रस्थापनं कुर्य्युरिति । अन्यच्च देहरादूनापेक्षया हरद्वारनगरन्तु तीर्थस्थानमपि विद्यते । तत्र केन्द्रस्थापनेन संस्कृताध्यायिनां विदुषां विद्यार्थिनाञ्च 'एक-क्रिया द्व्यर्थकरी प्रसिद्धा' इति लौकिकाभाणकानुसारं परीक्षाप्रदानं तीर्थस्नानञ्चेत्युभयोः फलयोरुपलब्धिः स्यादिति ।

# "पश्चात्तापः"

—:०ःः०:—

लें०—पाण्डेयः श्रीकुसुमाकरशास्त्री ।

गवर्न्मेण्ट सं० कालेज मुजफ्फरपुरम् ।

"कृतोद्वाहः कान्तः श्रुतिपठनशान्तः प्रियवरः ।
समालेभे कान्तां परमसुखदान्तां विधुमुखीम् ॥
कियत्कालं भर्त्ता रतिसुकृत-हर्त्ताऽब्जनयनः ।
वरेण्यं सस्वाद प्रवर-विधिलभ्यं रतिसुखम् ॥" १ ॥

"कदाचित् कान्तः स द्रविण-विकलान्तर्निज-गृहे ।
प्रियां लब्ध्वा प्राह प्रियमुखि ! विदग्धे ! प्रियतमे !
विदेशं प्रस्थातुं विकलयति चेतः प्रतिदिनं—
अयिष्ये त्वां क्षिप्रं मदनशरशिष्ये ! रतिनिभे !" ॥ २ ॥

"निशायां मे स्वामी वत ! कुपथगामी भियवसुः ।
गतो मां हित्वा यः परमसुखसुस्नामभिनवाम् ॥
इति स्मारं स्मारं भवति वहुधाश्रुप्रपतनं ।
वियुक्तां मां कृत्वा सखि ! किमुचितं तस्य गमनम्" ॥ ३ ॥

"सखी काचिच्छ्रुत्वा धवविरह-दुःखां सहचरीम् ।
अवोचत्तां वालां युवहृदय-मालां शशिमुखीं ॥
वयस्ये ! हे मान्ये ! श्रितकुसुमशय्ये ! तव धवः ।
समागन्ता तूर्णं परमरसिको हृष्टनयनः" ॥ ४ ॥

"विदेशादागत्य प्रचुरधनयुक्तोऽथ रमणः ।
न दृष्ट्वा तां जायां पतिविरहलुप्तां मधुदिने ॥
दधौ कान्तस्तापं "कुसुम"-शरतापञ्च विरहे ।
विधातः ! किं लीना निजवचनहीना प्रियतमा" ॥ ५ ॥

———

## काशीस्थराजकीयसंस्कृतकालेजस्य अधिकारिभ्यः प्रार्थना ।

—०※०—

हिन्दुजातेः परमपुण्यतीर्थस्य हरिद्वारक्षेत्रस्य सर्वासां पाठशालानां संस्थानाञ्च प्रथमामध्यमयोः छात्राः प्रति वर्षं देहरादूनस्थ डी० ए० वी० कालेजे परीक्षार्थं गच्छन्ति । देहरादूनस्थ-केन्द्रे देहरादूननगरस्य छात्रा अति स्वल्पा- वर्तन्ते । ऋषिकेशस्य सहारनपुरस्य च छात्राणां देहरादूनापेक्षया हरद्वारे एव सान्निध्यम् । हरिद्वारे तु बहवः छात्रा भवन्ति, येषां संख्या सर्वतोऽपि आधिक्यमासादयति ।

हरिद्वारे यू० पी० शासकेन साहाय्यप्रदानेन स्वीकृतानि ऋषिकुलम् आयुर्वेदकालेज, मिडिलस्कूल, यूनियनबोर्ड, इति नामकानि बहूनि शिक्षा- स्थानानि सन्ति । यदि एषु एकस्मिन् कस्मिंश्चित् स्थाने प्रथमा-मध्यमयोः परीक्षयोः केन्द्रं सहारनपुर-ऋषिकेश-हरिद्वारस्थानां छात्राणां कृते निर्धारितं स्यात्, तदा विद्यार्थिनां बहुमूल्यः समयो द्रव्यञ्च सुरक्षितं स्यात् । देहरादूनस्य केन्द्रस्य कारणात् छात्राणां समयो द्रव्यञ्च व्यर्थं नश्यति ।

अतः हरिद्वारस्य प्रजापक्षतः संस्कृतकालेजस्य रजिष्ट्रारमहोदयान् सादरं प्रार्थयामहे यत् संस्कृतपरीक्षार्थिनां पाठशालानाञ्च आर्थिक-स्थितिं दृष्टि-गोचरी कृत्य कृपया हरिद्वारे एव-केन्द्र-स्थान-निर्णयकरणार्थं साहाय्यमाचरन्तामिति । यतो हि सहारनपुर-देहरादूनयो र्मण्डलयोरपेक्षया हरिद्वारस्यैव छात्रा अधिक- संख्यया परीक्षार्थिनो भवन्ति ।

हरिद्वारं धार्मिक-स्थानमपि अस्ति । अत्र च ऋषिकुल-ब्रह्मचर्याश्रम, आयुर्वेदकालेज इति द्वे स्थाने केन्द्राय उपयुक्ते अपि वर्तेते । इत्यतः पूर्णतया आशास्महे वयं यत् संस्कृतस्य छात्राणां विद्यालयानाञ्च परिस्थितिं लक्षीकृत्य- संस्कृतकालेजस्य रजिष्ट्रारमहोदया अस्माकं प्राथनाया उपरि विचारं करिष्यन्तीति ।

# वर्तमानयुगस्य परीक्षाप्रणाली संस्कृत-शिक्षा च।

ले०—भट्टश्रीमथुरानाथशास्त्री साहित्याचार्यः,
( जयपुरराजकीय-सकलसंस्कृतविद्यालयानां निरीक्षकाः । )

——०:※:०——

पूर्वतोऽनुवृत्ता

उचितवयःसम्पन्नानां तेषां विद्यार्थिनां कथां साम्प्रतमहं त्यजामि ये किल उच्चपरीक्षाप्रदानार्थमस्मत्समीपे समागच्छन्ति। ये मुग्धाः बालाः प्रथमां परीक्षां दातुं पाठशालायां समागच्छन्ति तैः सार्कं वयं किं कुर्म्मः? वयं हि स्वपरिश्रमस्य समयस्य च लाघवाय पुरातनलिखिताः पञ्जिकाः प्रश्नपत्राणि च घोषयित्वा तान्परीक्षातो यथाकथञ्चिदुत्तारयामः। परमेतेन तेषां किञ्चिज्ज्ञानं सम्पन्नम्? स ह्यव्युत्पन्नो जडमतिरेव। अनेन प्रकारेण उच्चपरीक्षास्वपि यथाकथञ्चित् प्रक्षिप्तं-पाठान्तरमिव बलात् रिङ्गन् रिङ्गन् प्राप्नोत्येव, एतस्मिन् काण्डे मूलतोऽपराधी कोऽस्ति? अहं जाने बालकस्यात्रापराधो नास्ति। भवन्तो बालस्य लक्षणं कुर्वन्ति "अनधीतामुकशास्त्रो बालः।" इति। एष हि अज्ञोऽस्ति तदैव तु भवत्सविधे समागतोऽस्ति। इदानीं श्रीमतामेव कर्तव्यमस्ति यत्तस्मै भवन्तः समुचितं-पन्थानमुपदिशेयुरिति। किन्तु भवन्तस्तम् इतो भ्रष्टं ततो भ्रष्टं कृत्वा परित्यजन्ति। यदि स श्रीमतामनुग्रहेण पाठ्यपुस्तकस्य बोधेऽपि समर्थः स्यात् तदापि किञ्चित् कार्य्यं जातमिति कथञ्चित्सन्तोषः—स्यात्। परं भवन्तस्तु तद्द्वारा केवलं परीक्षामेव दापयन्ति। बोधविषये तु शून्यतैव सर्वथा विलोक्यते भवतामिदमविदितं नास्ति यत् 'अयं बालः पुस्तकविषयं किञ्चिदपि न बुद्धवानस्तीति। अत एव तु भवन्तः पूर्वप्रश्नपत्राणामुत्तराणि तं रटयन्ति। यदि तज्ज्ञानस्योपरि भवतां विश्वासोऽभविष्यत्तर्हि भवन्तः शुष्करटनार्थं घोरामिमामाज्ञां कदापि न अदास्यन्।

स्पष्टकथनं चेत्क्षन्तव्यं भवेत्तर्हि अहं सविनयं निवेदयिष्यामि-यत् बहवः स्वयं पण्डिता एव एतेनैव प्रकारेण परीक्षामुत्तरन्तः प्रमाणपत्राणां-बलेनाध्यापकपदं लब्धवन्तः सन्ति। देवमन्दिरे धर्मपूर्वकं चेत्पृच्छ्येत तर्हि स्वयं त एव आत्मनस्तादृशीं योग्यतां स्वीकर्तुं न शक्नुयुः। परं पाठशालायाः सञ्चालकस्य श्रेष्ठिमहोदयस्यानुरोधेन, जीविकाया लोभेन, किं वा अप्रतिष्ठाया भयेन ते आत्मानं तदभिज्ञं प्रख्यापयन्तो महामहाग्रन्थानप्यध्यापयितुं बाध्या भवन्ति। इदानीं श्रीमन्त एव विचारयन्तु, यद्वराकाणां तेषां सविधे सम्प्रति एतमुपायमन्तरा का वाऽन्या गतिरस्ति यत्ते येन केनाप्युपायेन तान् विद्यार्थिनः परीक्षायामुत्तीर्णान्

कारयेयुः । अत एव ते ग्रन्थस्य वास्तविकं तत्वं बोधयितुमप्रभवन्तोऽपि बाह्यैः उपायैःस्वशिष्यान् परीक्षामुत्तारयन्ति । ते च शिष्याभासाः अनया प्रवञ्चनया उत्तीर्णाः सन्तोऽस्माकं मिथ्याकीर्तिस्थापनस्य निस्सारसाधनानि सम्पद्यन्ते । वयमुपरितः सन्तुष्यामः यदस्माकं शिष्यः शास्त्रिपरीक्षायामुत्तीर्णः, परं जगत्साक्षिण्याः सरस्वतीदेव्याः सन्निधाने, भगवतो धर्मस्य च दृष्टौ अस्माकमन्तरात्मा नितान्तं व्यथते यद्वयमज्ञाः सन्तोऽपि मुधैव पाण्डित्यदम्भं कुर्म्मः ।

प्राचीनपण्डितानां श्रूयते वृत्तं यत्ते पाठनीयग्रन्थेषु यत्स्थलमसंलग्नमभविष्यत्तर्हि तदर्थं ते स्पष्टमकथयिष्यन्–यत् इदं स्थलं समयान्तरे सम्यग्दृष्ट्वा पुनः कथयिष्यामि । अथवा इदं स्थलममुकपण्डितस्य सविधे पठ इत्यादि । परमेतदर्थमपि अध्यापकस्यात्मबलमपेक्ष्यते । ये आदित आरभ्य अन्तपर्य्यन्तमपक्वाः ते एतादृग्बलं कथमिव लभेरन् ।

अस्तु, इदानीमेतदेव कर्तव्यं प्रतीयते यत् परीक्षोत्तीर्णानां संख्यावृद्धौ अधिकमवधानं न क्रियेत । सम्यग् ग्रन्थाभ्यासे सत्येव विद्यार्थिभ्यः परीक्षादानार्थमनुमतिर्दीयेत । परीक्षा किल शास्त्रज्ञानस्य परिचायिका मात्रम् । सा निजस्थाने एव तिष्ठतु नाम । सा स्वयमेव शास्त्ररूपं न धारयेदिति अवधातव्यं भवेत् । यदि भवतां सकाशाद् द्वावपि उत्तमौ विद्यार्थिनौ पारनिष्ठितौ भविष्यतस्तर्हि भवद्भ्यः कीर्तिमाशीर्वादश्च दद्याताम् । रत्नं किल एकमप्युत्तमम् । प्रस्तराणां राशिस्तु द्वारोपान्ते एवमेव सुलभोऽरुन्तुदश्च । भवन्त एव तु कथयन्ति–'एकः शब्दः सम्यग्ज्ञातः स्वर्गे लोके च कामधुग् भवति' श्रीमन्तस्तावदप्येवान् इमान् पण्डितभासानुत्पाद्य असाधुशब्दसृष्टिरक्षार्थमाकारमिव निष्पादयन्ति येन हि कालान्तरेऽपि असाधुशब्दसृष्टिर्न निरुद्धा भवति । किमेष व्यतिकरोऽस्मान् नरकं न दर्शयेत् ।

अहं पूर्वं लिखितवानस्मि यदेषा परीक्षाप्रणाली नाद्यतनी । अस्याः किल प्रचलितायाः व्यतीतानि बहुतराणि वर्षाणि । परं प्राक्तनाः पण्डिताः स्वशिष्यं सम्यक्तया शास्त्रेषु विनयन्तिस्म । ततः समये लब्धे सति परीक्षाप्रकाराणामपि तान् विद्यार्थिनः परिचितानकार्षुः । गतवार्षिकाणि प्रश्नपत्राणि दर्शयित्वा पठितग्रन्थानामावृत्तिं विद्यार्थिभिः कारयन्तिस्म । एतन्नासीद् यत्ते प्रश्नपत्रद्वारा अनुचितं लाभमुपार्जयामासुरिति । यस्मिन् समये तेषां शिष्यः पठित्वा परिनिष्ठितोऽभवत् ततस्ते यत्र कुत्रापि कठिनात्कठिनेऽपि परीक्षकविश्वविद्यालये तमेतं विद्यार्थिनं परीक्षार्थं प्राहिण्वन् । ते अकथयन् यदिदमस्माकं सुवर्णं विशुद्धमुच्चकोटे आस्ति । यः कोऽपि स्वर्णपरीक्षकस्तदेतत् निकषेण स्वैरं परीक्षतां नाम, काऽस्माकं भीतिः ?

किन्तु अद्यत्वे वयमीदृशं विश्वविद्यालयमन्वेषयामो यस्मिन् हि परीक्षायामत्यन्तमेव सारल्यं भवेत् । 'खण्डे खण्डे च पाण्डित्यं' प्राप्य शीघ्रमेवाचार्य्यः सम्पद्येत । ईदृशेभ्यः परीक्षास्थानेभ्यो वयं बिभिमो येषु हि एकवारमेव सर्वेषां ग्रन्थानां परीक्षा भवति । प्रतिवर्षञ्च प्राक्तनपठितानामपि भागानां परीक्षार्थमावृत्तिः करणीया भवति । वयं वाञ्छामो यद्विद्यार्थी द्वित्रैरेव ग्रन्थैः 'तीर्थो' भवेत् । इदमेवावसरान्वेषणमेव सूचयति—यद्भवतां वस्तुनि काचित्त्रुटिरस्तीति । यदि भवतां सुवर्णं विशुद्धं सत्यञ्चास्ति तर्हि अन्धप्रायं नाणकपरीक्षकं ( शरीफ़ ) किमित्यन्वेषयथ ? मध्येराजमार्गं परीक्षणं किमिति न कारयथ ?

अहं परीक्षाप्रणाल्या अन्धविरोधी नास्मि । यतो ह्यहमपि एतस्मिन्नेव परीक्षायुगे शिक्षितगोष्ठ्यामन्तर्गणनीयोऽस्मि संवृत्तः । यदा ह्यस्मिन् समये वर्तमानं परीक्षाप्रकारं विना एतावत्संख्याकानां लोकानां शिक्षा-समीक्षणं सम्भवत्येव न, तदा एतं प्रकारं विहाय अन्य उपाय एव कः ? किन्तु वर्तमानेषु कतिपयवर्षेषु परीक्षार्थिभिर्जनैः परीक्षा-प्रकारस्य योऽयमेकान्ततो दुरुपयोग आरब्धस्तस्याहमवश्यं विरोधी । अहमेव किम्, संस्कृतशिक्षाप्रकारमभिलषन् प्रत्येक-सज्जन एव मन्ये एतस्य विरोधी भवेत् । बहवः किल परीक्षायुगमेवान्यदृष्ट्या पश्यन्ति ।

पूर्वं शास्त्रविचारेण योग्यतापरिचयोऽभवत्, इदानीं परीक्षापत्रैर्भवति शास्त्रविचारः कुत्रापि भवतु तदर्थमवसरान्वेषणं नाभवत् । इदानीमपि व्युत्पत्तिं वास्तवज्ञानं च वाञ्छद्भिर्जनैः कठिनात्कठिनेऽपि विश्वविद्यालये परीक्षाप्रदानान्न विमुखीभवितव्यम् । भवन्तः सुवर्णसङ्ग्रहसमये कियतीं वा परीक्षां न कारयन्ति ? भवन्तो नाणकं ( सिक्का ) कियद्वा परीक्षयन्ति, इदं न भवेत् यत् अवसरे एतदयोग्यं कूटञ्च सिद्ध्येत् । एवमेव निजान् बालकान् वास्तवव्युत्पत्तिशालिन एव किमिति न सम्पादयथ ? सरलतरपरीक्षा स्थानान्वेषणात्तु एतदेव प्रतीयते यद्भवन्तः केवलं परीक्षा-प्रमाणपत्रमेव वाञ्छन्ति येन कुत्रचिद्भृतिकार्य्यं लभ्येत । ज्ञानस्य नापेक्षा प्रतीयते ।

विद्याध्ययनस्य मुख्यतमं फलं हृदयपरिष्कारो ज्ञानञ्च । समयमहिम्ना ये किल महोदया धनलाभमेव शिक्षायाः प्रधानं प्रयोजनं मन्यन्ते तेषांकृते उपरिवर्णितं नेदं सर्वम् । किन्तु धनलाभाय चेद्विद्याऽधीयते तर्हि पश्यतां सामयिकी विद्या ! अथवा यदि धनोपर्य्येव प्रधानं लक्ष्यं दृढतरं बद्धमस्ति तर्हि क्रियतां 'तूलग्रन्थ्यादीनां व्यापारः', ! आश्रीयतां 'तेजीमन्दी' व्यवसायः ! किंवा सर्वतः शीघ्रमेव धनिकता-सम्पादको द्यूतापरपर्य्यायः 'फाटका, नीलाम, फ़ीचर्स

व्यापारो वा निषेव्यतां यस्मिन्नध्ययनकृतः परिश्रम एव न सोढव्यो भवति । किन्तु विवेकिनो जना जानन्ति यत् एभिः कार्य्यैर्धनमवश्यं लभेत परं, ज्ञानरूपो निधिर्येन हि हृदये प्राञ्जलभावः समेति, न हस्तगतो भवति । नवीन शिक्षाप्रणाल्या देशे शिक्षायाः स्वरूपमेव विपरिवर्तितम् । उद्देश्यमेवान्यथा सम्पादितम् । अद्यत्वे हि नवीनपद्धत्या शिक्षिता अपि लोकाः शिक्षाया वास्तविकं फलं नाधिगच्छन्ति । घोरपरिश्रमं कृत्वापि नाममात्रार्थं लाभो भवति । एतद्विषये मम ये विचाराः ते 'साहित्यवैभवे'* अंशतः प्रकाशिता मया । कतिचित् भावार्थ सहितानि पद्यानि तत एव द्रष्टव्यानि ।

अस्मिन् धन लोलुपताया युगेऽपि सत्यं सत्यान्वेषणं यदा क्रियेत तदा साधारण बुद्धिरपि जनो धनापेक्षया ज्ञानस्य गौरवं सुस्फुटमभिमन्येत । निष्किञ्चनावस्थायां निवसतो ज्ञानिनोऽद्यापि जना आदरं कुर्वन्ति । खद्दरमयं कौपीनं धारयन् आध्यात्मिकतासम्पन्नो ज्ञानी अद्य समस्तविश्ववलये महापुरुषः परिगण्यते । यदा च ज्ञानस्य शिक्षायाश्च गौरवं धनेन न परिमातुं शक्यते तदा वास्तवज्ञाननिधिः सेयं संस्कृतशिक्षा कस्मान्न समीक्ष्यते श्रीमद्भिः ?

भारतायैव किं समस्तस्य विश्वस्य कृते आध्यात्मिकतायाश्च आदिमशिक्षयित्रीं संस्कृतभाषां विहाय काचिदन्या दृश्यते ? यदि नास्ति तर्हि तस्या वास्तविकतत्वोपरि किं न दृष्टिः श्रीमताम् ? केवलं परीक्षासु तल्लब्धप्रमाणपत्रेष्वेव श्रीमतां सतृष्णा दृष्टिः किमिति नियतेति ? परिश्रमपूर्वकं साधुरीत्या साधुनीत्या च शास्त्रमधीयताम् । ग्रन्थाभ्यासे सति, उत्साहितेन बलपूर्णेन च हृदयेन परीक्षासु प्रविश्यताम्, उत्तमश्रेणौ चोत्तीर्य्यतां येन परीक्षोत्तरणानन्तरं ज्ञाननिधिरपि श्रीमतां सविधे सन्निहितो भवेत् ।

लोकाः परीक्षासम्पत्तिं विना परिश्रमं स्वल्पश्रमेण वा अधिकर्त्तुमिच्छन्ति । कतिपयकाकिणीभिरेव निधिमाहर्तुमिच्छन्ति । एतत्किल एतेनैव सिद्ध्यति परीक्षानियमेषु दिनं दिनं कठोरता करणीया भवति । अमुकपरीक्षोत्तरणानन्तरम् अग्रिमापरीक्षा द्वाभ्यामेव वर्षाभ्यां दातुं शक्यते । पाठशालायां प्रतिशतम् एतावत्य उपस्थितय अपेक्ष्यन्ते । इयत्पर्य्यन्तमेतस्य नियमस्य कठोरता यत् स्वयमधीयानानाम् ( प्राइवेट ) अपि परीक्षार्थिनां कृते समयनियमोऽपेक्ष्यते । यतो हि पूर्ववर्णितयुक्तीनां द्वारा द्विचतुर्मासैरेव लोकाः तत्तत्परीक्षामुल्लङ्घयितुमिच्छन्ति । अत एव अनिच्छासत्वेऽपि नियमपारवश्यादेव

* लेखकेन कवित्त-दोहा-प्रभृति नवीन-पद्यैरेक मतिमनोहरमेतन्नामकं काव्यं विरचितं विद्यते । यत्तत एव मिलति । सं०

किञ्चिन्न किञ्चित्तु अवश्यं पठितव्यं भवेदेतस्मादेव कारणात् परीक्षासु समय-नियमः कुतोऽस्ति। यदि सत्या ज्ञानलिप्साऽभविष्यत्तर्हि कतिपयमासेषु एवं विधानां परीक्षाणां प्रदानमेव कथं सम्भूतमभविष्यत् एतदर्थमेवं विधा नियमा-र्गलता अपेक्षणीया भवेत्।

इदानीं तु नाममात्र-परीक्षाणामपि परिश्रमं जना न सोढुमिच्छन्ति। सम्प्रति हि विना परीक्षामेव 'साहित्यधुरीण' 'विद्याभास्कर' 'महोपाध्याय' 'साहित्यरत्न' इत्यादयः पदव्यो लभ्यन्ते, यासां द्वारा बाह्यमाडम्बरं सज्जयन्त-श्चतुराः प्रतिष्ठायास्तद्द्वारा च जीविकाया, मार्गं प्रशस्तं कर्तुमिच्छन्ति। यत्किम-प्यस्तु, वर्तमान परीक्षायुगस्य यथादृष्टमिदं वृत्तं श्रीमद्भ्यो निवेदितम्। अस्मिन् हि भगवत्याः संस्कृतभाषायाः सत्यानुरागिणां पण्डितमहाभागानां दृष्टि-निक्षेपो नितान्तमावश्यकः। यद्ययमवक्रमो निर्निरोधं प्रक्रान्तो भवेत्तर्हि स्वल्पेष्वेव वर्षेषु उपाधिधारिणस्तु बहवो लभ्येरन् किन्तु तत्तच्छास्त्रीयग्रन्थरहस्य-बोद्धारो जना इतिहासपुस्तकानां पत्रेष्वेव अन्वेषणीयाः सम्पद्येरन्। सर्वेश्वरो भगवान मैवं क्रियात्। एवंविधदुर्दिनस्य सम्भवात् पूर्वमेव संस्कृतपक्षपातिनः पण्डिताः प्रतीकारार्थं सन्नद्धा भवेयुरिति।

---

## अन्योक्तिः।

### ( वाराही सं० विद्यालयस्य श्रीजटाशङ्करशास्त्रिकृता )

पुरा तरुणतारणातप-विलीनसंज्ञेन य-
त्तरु-श्रित-लता-तता शिशिरशालि-(१)कान्तिः श्रिता।
अपास्य सुख शायिना श्रममिहाधुना छिद्यते
निगील्य पथिक ! त्वया तदुपकारसारन्तरुः ॥ १ ॥
अलिन्दकुलवन्दित-श्रवणपालिदन्तावलो-
न यस्य पुरतः पुरा पदमपि न्यधादाकुलः।
तमद्य शममञ्चितं करिकिशोरमाला हरिम्।
विहस्य ननु हन्त !! हा ! कुटिलयन्ति(२)वाक्षिभ्रुवम् ॥ २ ॥

---

( १ ) छायावाचकः कान्ति शब्दः।
( २ ) वा शब्द इवार्थाभिप्रायकः।

# 'वर्णव्यवस्था' ।

( ले०-देवसहायशर्मणः बी० ए० द्वितीयवर्षस्य, प्रयाग-विश्वविद्यालयस्य )

-:*:-

विदितचरमेवैतत् पाठकवृन्दानां यत् सम्प्रति प्राचीनसभ्यता प्राचीन-कञ्चुकं परिहाय किमपि पाश्चात्यसभ्यतारक्तं नवीनं चोलकं परिधत्ते। वस्तुतस्तु कालस्वभावोऽयम्। इदानीं समालोचनासमये सर्वे विषया नवीनदृष्ट्या दृश्यन्ते।

भारतीयसभ्यता पुराकालाद् वर्णव्यवस्थाभित्त्यां निर्भरा। ऋग्वेदकाले वर्णव्यवस्था पूर्णरीत्या प्रथिता आसीत्। नास्त्यत्रावसरोऽस्य सम्यक् प्रतिपाद-नाय। महाभारतकालेऽपि गीतायां भगवान् श्रीकृष्णश्चतुर्वर्गकर्म प्रतिपादयति। पुनरपि स कथयति।

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः। गीता ४। १३

यवनयात्री मेगस्थनीजोऽपि भारते वर्णव्यवस्थामुल्लिखति फिरदौसी-निर्मितशाहनामा इति पुस्तकेऽपि लिखितं राजा यिमः चतुर्वर्गान् वृत्तवान् इति।

प्राचीनकाले वैबिलोन, पशिरीय, मिश्र, ईरान, मीड, कोल्चिया, आइ-बिरिया, एटूरिया, पेरुमेक्सिको इत्यादि देशेष्वपि वर्णव्यवस्था प्राप्यते। तत्र तु कालवशादज्ञानतया वर्णव्यवस्था लुप्ता। किन्तु भारतदेशः सर्वतः सुरक्षितः। अत्रैवर्षिभि र्वर्णव्यवस्थाया अभेद्यप्रासादो निर्मितः।

प्लेटो यूरोपदेशीयतत्त्वज्ञोऽपि भारत इव श्रमविभागं प्रतिपेदे। अतो न कथयितव्यम् मयाधिकं प्राचीनकाले सर्वदेशेषु अस्याः परिस्थिति-प्रतिपादनाय।

इयं वर्णव्यवस्था सर्वहितकारिणा स्वयं सिद्धाऽद्यापि सर्वत्र दृश्यते। चीनदेशे चतुर्वर्गाः सन्ति। यद्यपि तेऽस्मद्वर्णव्यवस्थावत् क्लिष्टा न सन्ति। महम्मदीयेष्वपि चतुर्वर्गा दृश्यन्ते यथा शेखाः, सैयदाः, मुगलाः पैठाना इति

अमेरिकाख्यातविष्णुक्रान्तेऽपि सम्प्रति वर्णव्यवस्था विद्यत एव। यथा गौराङ्गवर्णाः, यौरोपीयाः, असितवर्णाः 'निग्रो' इतिख्यातजनाः तद्देशवासिनश्च। तत्र सितासिताः परस्परं न मिलन्ति। तेषु भक्षणविवाहसम्बन्धोऽपि न भवति। निग्रोख्यातजनाः सर्वद्वोषवर्णैः परिहीयन्ते दुर्दशया दृश्यन्ते च।

( रेलगाड़ी ) वर्णव्यवस्था विद्यते। यथा प्रथमकक्षा, द्वितीयकक्षा, मध्यमकक्षा, तृतीयकक्षा च। इयं व्यवस्था तु धनकारणादेव वर्तते, आधुनिककार्यालयेष्वपीयं व्यवस्था विद्यते।

अतः सर्वे जनाः समाना उपयोगितायां योग्यतायां वेति विचारः पूर्णतो निर्मूलः। नास्ति कोऽपि दोषो वर्णव्यवस्थायाम्। ग्रामेषु त्वद्यापि भेदो न वर्तते। तत्र ब्राह्मणक्षत्रियवैश्यशूद्राः स्वकार्यरता मित्रभावेन वसन्ति। तेषु प्राचीनकालात् स्वपरिवार इव सम्बन्धोऽपि विद्यते। राजनीतिक्षेत्रेष्वपि का शंका? कथं प्राचीनकाले राजनीतिकसंस्थितिर्नासीत्? पुराऽस्यामेव वर्णव्यवस्थायां हूणाः शकाः गुरुण्डाः तुरुस्काः सर्वेऽप्यन्तर्भूताः। परस्परं भोजनं विवाहश्च राजनीतिक-संघटने आवश्यको नेति महात्मना 'गान्धि' महोदयेनापि प्रतिपादितम्।

वर्णे व्यवस्थिते जीविकाप्रश्नोऽपि नोद्भवति। शूद्रो न ब्राह्मणकर्म कुरुते खलु, ब्राह्मणोऽपि शूद्रकर्म कर्तुं न शक्नोति। अनेनैव प्रकारेण जीविकाप्रश्नोऽग्रे गच्छति। अधुना तु न्यायाधीशस्य पुत्रेषु कश्चिच्चर्मकारस्य कश्चित्तक्षकारस्य कश्चित् कृषकस्य कश्चित् सैनिकस्य तथा कश्चिदध्यापकस्य च वृत्तिं चिनोति। ते नाना संकटं प्राप्नुवन्ति च।

स्मरणीयं खलु पण्डित मदनमोहनमालवीयवचनं यत् स काश्यां त्रिवर्षपूर्वे काशीविश्वविद्यालयदीक्षाकाले कथितवान्। भारतीयबालका ऋषिप्रदत्तमार्गोत्कर्षं न प्रदर्शयन्ति खलु। विदेशीयभाषा-शिक्षणात् पारिवारिकजीवने सुयोग्यशिक्षाभावाच्चेति। आधुनिक-विज्ञानमपि कथयति वर्णव्यवस्थाम्।

मिश्राः सीरियादेशीयाः तिरोहिताः। पश्चिमीयाः खृष्टमतानुगाः स्वधर्माचाराच्च भ्रष्टाः। किन्तु भारतीयार्या एवाद्याप्यपरिवर्तिताः। वर्णव्यवस्थाकारणादेव ब्राह्मणाः ऋषिमहर्षि प्रणीतपरिपाटीस्थितिकरणे समर्थीभूताः। हरिवर्षविष्णुकान्तयोरियं जातिसंस्था धनदरिद्रेषु विद्यते। किन्तु भारतेत्वियं सर्वहितकारिणी स्वयंसिद्धा धार्मिकवैज्ञानिकसिद्धान्तेषु स्थिता। सत्यं हिन्दूनामाचार एव तेषां प्राणः।

इत्थं भूतेऽपि आधुनिकयुरोपीयसभ्यता-रक्तसमाजसुधारको इमां चिरस्थायिनीं सर्वलाभप्रदायिनीं व्यवस्थां रसातले क्षेप्तुं यतन्ते। अयं हिन्दुसमाजस्तु सुधारकैः सुधारयितव्यो न तु रसातले प्रेष्यः। यथा समाजविज्ञानाचार्यः गिडिङ्गमहाशयः कथयति—"कोऽपि सामाजिकसुधारको यो वर्गसंमिश्रणे साहाय्यं करोति खलु। स निश्चयेनासफलो भविष्यतीति।" श्रेयः सर्वदा स्थास्यन्तीति केषांचित् सम्मतिः। मनुरपि शूद्राद्ब्राह्मणं ज्ञानं ग्रहीतुमुपदिशति।

सुवर्णः खलु अयस उद्भवति, तदा खलु कथमस्माभिः शूद्रादपि गुणो न ग्राह्यः ? स्वधर्मो रक्षितव्यश्च । श्रीकृष्णः कथयति । 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इति । अतोऽस्माभिर्व्यासवचनानुसारात् मार्गोऽनुसर्तव्यः ।

वेदा विभिन्नाः स्मृतयो विभिन्ना-
नैको मुनिर्यस्य मतं न भिन्नम् ।
धर्मस्य तत्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥

---

## "विनयः"

( ले०—हनुमद्दुर्गवास्तव्यो रामचन्द्रशर्मा शास्त्री "विजयचरणः" )

—:o:—

त्रायस्व प्रभो ? भारतं दीयते(१) ॥ ( ध्रुवम् )
नाथ ! प्रमादै रसारैश्च वादैः ॥
देशोऽस्मदीयः समाश्रीयते ॥ १ ॥ त्रायस्व०
आर्यैश्च गर्वे निमग्नै रखर्वे ॥
स्वक्षेममार्गो न निश्चीयते ॥ २ ॥ त्रायस्व०
भोगोपगूढा द्विजाः सन्ति मूढाः ॥
शूद्राश्च वेदान् मुदाऽधीयते ॥ ३ ॥ त्रायस्व०
पापेन चित्रा स्वकीया पवित्रा ।
पुत्रीह लोभेन विक्रीयते ॥ ४ ॥ त्रायस्व०
सद्धर्मतत्त्वं प्रयाति (२)क्षयत्वम् ॥
यद् वर्णभेदोऽपि संलीयते ॥ ५ ॥ त्रायस्व०
वस्त्वद्वितीयं हि यद् भारतीयम् ॥
तच्चाऽन्यदेशोद्भवै र्नीयते ॥ ६ ॥ त्रायस्व०
किं तन्नु पङ्कं न यन्निर्विशङ्कम् ॥
हा ! भारतीयै रनुष्ठीयते ॥ ७ ॥ त्रायस्व०

---

( १ ) 'दीङ्क्षये' इत्यस्माद्धातो रूप मिदम् ।
( २ ) "आतिथ्यम्" "विकल्पत्वम्" इतिवत् क्षयत्व मित्यत्रापि सत्यपि भावार्थक-प्रत्यये पुनस्तद्विधानं नाऽनुचितम् ।

# काशीस्थराजकीय-संस्कृतकालेज परीक्षाफलम् ।

[ सन् १९३४ ई० ]

## व्याकरण मध्यमा प्रथम खण्डे ।

१, १०, ११, १२, २०, २३, २७, २८, ३०, ३१, ३२, ३३, ३४, ३६, ३८, ४०, ४१, ४३, ४९, ५०, ५१, ५३, ५७, ५८, ५९, ६१ ६५, ६६, ६७, ६९, ७०, (७१प्र०श्रे०) ७५, ७७, ७८, ८९, ९०, ९१, ९९, १०२ १०४, ११२, ११३, ११४, ११६, ११७, ११८, १२१, १२६, १२७, १२९, १३०, १३४, १३७, १३८, १३९, १४०, १४१, १४२, १४३, १४४, १४५, १५३, १५४, १५५, १५६, १५८, १६४, १६५, १६९, १७१, १७४, १७६, १७७, १७९, १८२, १८५, १८६, १८७, १९०, १९२, १९३, १९५, १९७, १९८, २०२, २०३, २०४, २०६, २०९, २१०, २१२, २१६, २१७, २१८, २२४, २२५, २३४, २३८, २४२, २४३, २४५, २४८, २४९, २५०; २५१, २५२, २६०, २६५, २६८ २६९, २७६, २७९, २८०, २८६, २८७, २८८, २९७, २९९, ३००, ३०१, ३०२, ३०३, ३०७, ३०८, ३०९, ३११, ३१२, ३१४, ३१५, ३१६, ३१८, ३१९, ३२०, ३२१, ३२३, ३२४, ३२५, ३२७, ३२८, ३३१, ३३२, ३३४, ३३६, ३३७, ३३९, ३४०, ( ३४१, ३४२, प्रथमश्रेण्याम् ) ३४३, ३४४, ( ३४५ प्रथमश्रेण्याम् ) ३४६, ३४७, ३४८, ३४९, ३५०, ३५१, ३५२, ३५४, ३५५, ( ३५६, ३५७ प्रथमश्रेण्याम् ) ३५८, ३६०, ३६१, ३६४, ३६५, ३६६, ३६७, ३६९, ( ३७० प्रथमश्रेण्याम्) ३७१, ३७२, (३७४ प्रथमश्रेण्याम्) ३७५, ३७६, ३७७, ३७८, ३७९, ३८०, ३८२, ( ३८३ प्रथमश्रेण्याम् ) ३८४, ३८५, ३८६, ३८७, ३८८, ३८९, ३९०, ३९१, ३९२, ३९३, ३९४, ३९५, ३९६, ३९७, ३९८, ३९९, ४००, ४०१, ४०२, ४०३, ४०४, ( ४०५ प्रथमश्रेण्याम् ) ४०७, ४०८, ४०९, ४११, ४१२, ४१३, ४१४, ४१५, ४१८, ४१९, ४२०, ४२१, ( ४२२ प्रथमश्रेण्याम् ) ४२३, ४२४, ( ४२५ प्रथमश्रेण्याम् ) ४२६, ४२७, ४२८, ४२९, ४३०, ४३१, ४३२, ४३४, ४३५, ( ४३६ प्रथमश्रेण्याम ) ४३७, ४३८, ४३९, ४४०, ४४१, ४४२, ४४३, ४४४, ४४५, ४४९, ४५१, ४५२, ४५३, ४५५, ४५६, ४५८, ४५९, ४६४, ४६५, ४६६, ४६८, २१५८, ४७०, ४७१, ४७३, ४७४, ४७५, ४७६, ( ४७८ प्रथमश्रेण्याम् ) ४७९, ४८२, ४८३, ४८७, ( ४८८ प्रथमश्रेण्याम् ) ४८९, ४९०, ४९१, ४९२, ४९३, ४९४, ४९५, ५०२, ५०३, ५०४, ५०५, ५०७, ५०८, ५११, ५१२, ५१३, ५१४, ५१६, ५१७, ५१८, ५२०, ५२१, ५२२, ५२३, ५२६, ५२८, ( ५२९ प्रथमश्रेण्याम् ) ५३०, ५३१, ५३२, ५३३, ५३४, ५३५, ५३६, ५३७, ( ५३८ प्रथमश्रेण्याम् ) ५३९, ५४०, ५४१, ५४२, ५४३, ५४५, ५४६, ५४९, ५५१, ५५३, ५५४, ५५५, ५५६, ५५८, ५६०, ५६१, ५६३, ५६४, ५६५, ५६६, ५७४, ५७६, ५७७, ५७९, ५८०, ५८३, ५८८, ( ५९४ प्रथमश्रेण्याम् ) ५९५, ५९६, ५९७, ६०२, ६०४, ६०५, ६०६, ६०७, ६०८, ६१६, ६१७, ६१८, ६१९, ६२२, ६२३, ६२४, ( ६२५ प्रथमश्रेण्याम् ) ६२६, ६२७, ६२८, ६३०, ६३२, ६३३, ६३४, ६३६, ६३७, ६३८, ६३९, ६४०, ६४३, ६४९, ६५०,

६५१, ६५४, ( ६५५ प्रथमश्रेण्याम् ) ६५६, ६५७, ( ६६० प्रथमश्रेण्याम् ) ६६२, ६६३, ६६४, ६६५, ६६६, ६६७, ६६८, ६६९, ६७०, ६७२, ६७५, ६७६, ६७७, ६७८, ६७९, ६८०, ६८१, ६८२, ६८३, ६८४, ६८५, ६९०, ६९२, ६९३, ६९४, ६९५, ६९६, ६९७, ६९९, ७०१, ७०६, ७०८, ७०९, ७१३, ७१४, ७१५, ७१७, ७१८, ७१९, ७२०, ७२१, ७२२, ७२३, ७२४, ७२५, ७२६, ७२७, ७२८, ७३१, ७३२, ७३३, ७३४, ७३५, ७३८, ७३९, ७४०, ७४४, ७४६, ७४७, ७४९, ७५०, ७५१, ७५७, ७५८, ७६१, ७६२, ७६५, ७६६, ७६७, ७६८, ७७०, ७७१, ७७२, ( ७७३ प्रथमश्रेण्याम् ) ७७४, ७७५, ७७६, ७७८, ७७९, ७८०, ७८२, ७८३, ७८७, ७८९, ७९०, ७९१, ७९२, ७९३, ७९४, ७९५, ७९६, ७९७, ७९८, ८००, ८०१, ८०२, ८०३, ८०४, ८०५, ८०६, ८०९, ८१०, ८११, ८१२, ८१३, ८१४, ८१५, ८१६, ८१७, ८१८, ८२०, ८२१, ८२२, ८२३, ८२४, ( ८२५, ८२६, ८२७, ८२८ प्रथमश्रेण्याम् ) ८३०, ( ८३१, ८३२ प्रथमश्रेण्याम् ) ८३३, ८३६, ८३७, ( ८३८ प्रथमश्रेण्याम् ) ८४०, (८४१ प्रथमश्रेण्याम्) ( ८४३ प्रथमश्रेण्याम् ) ८४४, ८४५, ८५०, ८५२, ८५३, ८५४, ८५७, ( ८५९ प्रथमश्रेण्याम् ) ८६०, ( ८६१ प्रथमश्रेण्याम् ) ८६२, ८६३, ८६४, ८६६, ( ८६८ प्रथमश्रेण्याम् ) ८७०, ८७१, ८७२, ८७३, ( ८७५ प्रथमश्रेण्याम् ) ८७६, ८७७, ८७८, ( ८७९ प्रथमश्रेण्याम् ) ८८०, ८८१, ८८२, ( ८८३ प्रथमश्रेण्याम् ) ८८५, ८८७, ८८८, ( ८८९ प्रथमश्रेण्याम् ) ८९०, ( ८९१ प्रथमश्रेण्याम् ) ( ८९३, ८९४ प्रथमश्रेण्याम् ) ८९५, ८९६, ८९८, ९००, ( ९०२ प्रथमश्रेण्याम् ) ९०३, ०४, ( ९०५ प्रथमश्रेण्याम् ) ९०६, ९०७, ९१५, ९१९, ९२०, ९२१, ९२३, ९३२, ९३३, ९३४, ९३५, ९३६, ( ९३८ प्रथमश्रेण्याम् ) ९३९, ( ९४० प्रथमश्रेण्याम् ) ९४२, ९४४, ९४५, ९४७, ९४८, ( ९५१, ९५२ प्रथमश्रेण्याम् ) ९५३, ( ९५४, ९५५ प्रथमश्रेण्याम् ) ९५७, ९५८, ( ९५९ प्रथमश्रेण्याम् ) ९६०, ९६१, ९६२, ९६४, ९६५, ९६६, ९६९, ९७१, ९७४, ९७५, ९७६, ९७८, ९७९, ९८१ ९८२, ९८६, ९८७, ९९०, ९९२, ९९५, ९९६, ९९७, ९९८, ९९९, १०००, १००१, १००२, १००३, ( १००४, १००५ प्रथमश्रेण्याम् ) १००६, १००७, १००९, १०१०, १०११, १०१४, १०१५, १०१६, १०१७, १०१८, १०१९, १०२०, १०२१, १०२२, १०२३, १०२५, १०२६, १०२८, ( १०२९ प्रथमश्रे० ) १०३०, १०३१, १०३२, १०३३, १०३४, १०३५, १०३६, १०३७, १०३८, १०३९, १०४०, १०४१, १०४२, १०४६, १०४७, ( १०४८ प्रथमश्रे० ) १०५०, १०५१, १०५२, १०५३, १०५५, १०५६, १०५७, ( १०५८ प्रथमश्रे० ) १०५९, १०६०, १०६१, ( १०६३ प्रथमश्रे० ) १०६४, १०६८, १०७०, १०७२, १०७३, १०७५, १०७७, १०७८, १०७९, १०८०, ( १०८१ प्रथमश्रे० ) ( १०८३ प्रथमश्रे० ) १०८६, १०८८, १०८९, १०९०, १०९१ ( १०९२, १०९३ प्रथमश्रे० ) १०९५, १०९६, १०९७, १०९८, १०९९, ११००, ११०२, ११०३, ११०४, ११०५, ११०६, ११०९, १११३, १११४, १११६, १११७, १११८, १११९, ११२०, ( ११२१ प्रथमश्रे० ) ११२६, ( ११३२ प्रथमश्रे० ) ११३८, ११४१, ११४२, ११४३, ११४५, ११४६, ११५१, ११५२, ११५४, ११५५, ११५६, ११५७, ११५८, ११६१, ११६२, ११६३, ११६५, ११६७, ( ११६८ प्रथमश्रे० ) ११६९, ११७०, ११७३, ( ११७४ प्रथमश्रे० ) ११७५, ११७६, ११७७,

११७८, ११८०, ( ११८१ प्रथमश्रे० ) ११८६, ११८७, ( ११८९ प्रथमश्रे० ) ११९०, ११९१, ( ११९३ प्रथमश्रे० ) ११९४, ११९५, ११९६, ( ११९७ प्रथमश्रे० ) ११९८, ( ११९९, १२०० प्रथमश्रे० ) १२०१, १२०२, १२०३, १२०५, १२०६, १२०७, १२०८, १२०९, १२१०, १२१३, १२१४, ( १२१५ प्रथमश्रे० ) १२१६, १२१७, १२१८, १२१९, १२२०, १२२१, १२२२, १२२३, १२२४, १२२९ ( १२३५ प्रथमश्रे० ) १२३९, १२४०, १२४१. १२४३, १२४८, १२५०, १२५२, १२५४, १२५६, १२५७, १२५८, १२५९, १२६०, १२६१, १२६३, १२६४, १२६५, १२६७, १२७१, ( १२७६, १२७७ प्रथमश्रे० ) १२७८, १२७९, ( १२८०, १२८१ प्रथमश्रे० ) १२८२, १२८३ १२८५, १२८६, १२८७, १२९०, १२९१, ( १२९२ प्रथमश्रे० ) १२९३, १२९५, १२९६, १२९७, ( १२९८ प्रथमश्रे० ) ( १३०१ प्रथमश्रे० १३०२, १३०३ १३०४, १३०५, १३०६, १३०७, १३०८, १३०९, ( १३१० प्रथमश्रे० ) १३११, १३१२, १३१३, ( १३१४ प्रथमश्रे० ) १३१५, १३१६, १३१७, १३१९, १३२०, १३२२, १३२६, १३२७, १३२८, १३३०, १३३१, १३३२, ( १३३६, १३३७, प्रथमश्रे० ) १३३८, ( १३३९ प्रथमश्रे ) ( १३४१ प्रथमश्रे० ) ( १३४५ प्रथमश्रे० ) १३४६, ( १३४८ प्रथमश्रे० ) १३४९, १३५१, १३५२, १३५४, १३५५, १३५७, १३५९. १३६०, १३६१, १३६२. ( १३६४, १३६५ प्रथमश्रे० ) १३६६, ( १३६७ प्रथमश्रे० ) १३६८, १३६९, १३७२, १३७६, १३७७, (१३७९ प्रथम श्रे० ) १३८२, १३८४, १३८६, १३८७: १३९१, १३९३, १३९६, १३९८, १३९९, १४००, १४०४, १४०५, १४०६, १४०८, १४०९, १४१२, १४१३, १४१४, १४१५, ( १४१७, १४१८ प्रथम श्रे० ) १४१९, ( १४२० प्रथम श्रे० ) १४२१, १४२३, १४२४, १४२५, १४२७, १४२८, १४२९, १४३१, १४३२, १४३५, १४३७, १४३८, १४३९, ( १४४० प्रथम श्रे० ) १४४१, १४४२, १४४३, १४४५, १४४६, १४४७, १४४९, १४५०, १४५१, १४५२, १४५३, १४५५, १४५६, १४५७, १४५८, १४५९, १४६०, १४६१, १४६३, १४६४, १४६५, १४६६, १४६७, १४६९, १४७०, १४७१, १४७३, १४७४, १४७५, १४७७, १४७८, १४७९, १४८०, १४८१, १४८३, १४८४, १४८७, १४८८, १४९१, १४९३, १४९५, १४९६, १४९८, १५००, १५०१, १५०२, १५०५, १५०६, १५०७, १५०८, १५०९, १५१० ( १५११ प्रथम श्रे० ) १५१२, १५१३, १५१४, १५१६, १५१८, १५२०, १५२२, १५२३, १५२५, १५२६, १५२७, १५२८, १५३०, १५३१ १५३२, १५३३, १५३४, ( १५३५ प्र-म श्रे० ) १५३६, १५३७, ( १५३८ प्रथमश्रे० ) १५४२, १५४३, १५४४, १५४६, १५४७, १५४८, १५५१, १५५९, १५६३, १२६४, ( १५६५ प्रथमश्रे० ) १५६६, ( १५६९प्रथमश्रे० ) १५७०, ( १५७१ प्रथमश्रे० ) १५७४, १५७५, १५७६, १५७८, १५७९, ( १५८०, प्रथमश्रे० ) १५८२, १५८३, १५८४, १५८५, १५८७, १५८८, १५८९, १५९०, १५९२. १५९३, १५९४, १५९५, ( १५९६ प्रथमश्रे० ) १५९९, १६००, ( १६०१, १६०२, प्रथमश्रे० ) १६०३, १६०४, १६०६, १६०९, १६१०, ( १६११, प्रथमश्रे० ) १६१२, १६१३, १६१४, १६१५, १६१६, १६१८, १६१९, ( १६२१, प्रथमश्रे० ) १६२२, १६२३, १६२८, १६२९, १६३०, १६३२, १६३७, १६३८, १६४२, १६४३, ( १६४४, प्रथमश्रे० ) १६४६, १६४७, १६५१, १६५२, १६५३, १६५४, १६५५, १६५७, १६५८,

१६६०, १६६१, १६६३, १६६५, १६६६, १६६७, ( १६६८, प्रथमश्रे० ) १६६९, १६७१, १६७२, १६७३, १६७४, १६७५, १६७६, १६७९, १६८०, १६८१, १६८९ १६९०, १६९१, ( १६९२ प्रथमश्रे० ) १६९३, १६९४, १६९५, १६९६, १६९७, ( १६९८ प्रथमश्रे० ) १७०१, १७०२, १७०३, १७०४, ( १७०५ प्रथमश्रे० ) १७०७, १७०८, ( १७०९ प्रथमश्रे० ) १७११, १७१४, ( १७१८, १७१९ प्रथमश्रे० ) १७२४, १७२६, १७३२, १७३५, १७३७, १७३९, ( १७४१ प्रथमश्रे० ) १७४२, १७४३, १७४४, १७४५, १७४६, १७४७, १७४९, १७५०, १७५५, ( १७५९ प्रथमश्रे० ) ( १७६१ अन्धछात्र ) ( १७६३ प्रथम श्रे० अन्ध )

## साहित्य मध्यमाप्रथमखण्डे ।

१७६५, १७७०, १७७२, १७७३ १७७४, १७७८, १७७९, १७८०, १७८१, १७८६, १७८८, १७८९, १७९९, १८१०, १८१७, १८१८, १८१९, १८२१, १८२२, ( १८२४, प्रथमश्रे० ) १८२५, १८२६, १८३४, १८३७, १८४१, १८४२, १८४६, ( १८४७, प्रथमश्रे० ) ( १८५१; प्रथमश्रे० ) १८५४, ( १८५५, प्रथमश्रे० ) १८५६, १८५७, १८६३, १८६४; १८६५, १८६९, १८७०।

## दर्शन मध्यमाप्रथमखण्डे ।

१८७५, ४८८२, १८७६, १८८०, १८८१, १८८२, १८८३, ( १८८५, १८८६, प्रथमश्रे० )

## ज्योतिष मध्यमायां प्रथमखण्डे ।

१८८९, १८९२, १८९५, १८९८, १८९९, १९००, १९०१, १९०२, १९०३, १९०४, १९०८, १९११, १९१२, १९१३, १९१५, १९१६, १९१९, १९२०, १९२५, ( १९२७, प्रथमश्रे० )

## पुराणमध्यमायां प्रथम खण्डे ।

१९३२, ( १९३४, प्रथमश्रे० )

## वेदमध्यमायां प्रथम खण्डे—१९३५ ।

## व्याकरण मध्यमायां द्वितीय खण्डे ।

( १९३७, प्रथमश्रे० ) १९३८, १९३९, १९४१, १९४२, १९४३, १९४४, १९४६, १९४७, १९४९, १९५०, १९५२, ( १९५३, प्रथमश्रे० ) १९५५, १९५७, १९५८, १९५९, १९६०, ( १९६१, प्रथमश्रे० ) १९६२, १९६३, १९६४, १९६७, १९६८, ( १९६९ प्रथमश्रे० ) १९७०, १९७१, १९७२, ( १९७४ प्रथमश्रे० ) १९७६, १९७७, १९७८, १९७९, १९८३, १९८४, १९८९, १९९०, ( १९९१ प्रथमश्रे० ) १९९२, १९९४, १९९५, १९९६, ( १९९७ प्रथमश्रे० ) १९९८, २०००, २००२, २००४, ( २००५ प्रथमश्रे० २००६, २००७, २००८, २००९, ( २०१० प्रथमश्रे० ) २०१२, २०१४, २०१६, २०१७, ( २०१८ प्रथमश्रे० ) २०२०, २०२१, २०२२, २०२४, २०२६, २०२७, २०२८, २०३०, २०३२, ( २०३३ प्रथमश्रे० ) २०३४, २०३५, २०३६, २०३७, २०३८, २०४०, २०४१, २०४२, २०४३, २०४४, २०४५, २०४६, २०४८, २०५०, २०५३, २०५४, २०५५,

समानयनं कर्तुं चरमसाधनतां व्रजतः। कर्म-विपाकस्य कीदृक् परिणामः कथञ्च संस्कारसमष्टितः सृष्टिचक्रं प्रचलतीत्यादि दार्शनिकं गूढं रहस्यं मसृण-मञ्जुल-मनोज्ञ-संस्कृतभाषया हिन्दीभाषया च साधूपदर्शितम्, येनाल्पज्ञानामपि भवति स्वल्प-प्रयासेनैव दर्शन-रहस्यावगतिरिति।

तृतीयम् पुराणरहस्यं विद्यते। ग्रन्थेऽस्मिन् पुराणीयविषयोपरि विधर्म्मिभिः सधर्मभिर्वा कृतानां अद्यावधि सर्वासामपि शंकानां समाधानं विद्यते। केवलमस्यैवैकस्य ग्रन्थस्याध्ययनेन सर्वमपि पुराणीयं रहस्यं स्फुटं हृद्गतं भवितुमर्हति। चतुर्थस्थानं "धर्मविज्ञान"स्यायाति। इदं ग्रन्थ-रत्नन्तु कलशे सागरप्रवेशवत् सर्वमेव सनातनधर्मीयमुपदेशरत्नं स्वस्मिन् प्रवेशयति। एकस्यास्यैवाध्ययनेन सर्वथा सनातनधर्मस्य महोपदेशकनामधिगन्तुमनायासेनैव समर्थो भवतीति एतद्विषयेऽतिबहूक्तिरप्यतिशयोक्तिर्भवितुं नार्हतीति स्वल्पेनैव विरम्यते। इत्थमेव बहून्यत्र शास्त्रप्रकाशविभागतो ग्रन्थरत्नानि-निःसृतानि सन्ति। येषामध्ययनं सम्प्रति स्वल्पसंस्कृतज्ञानामपि हिन्दीभाषा-विदां च धर्मप्रेम्णामध्ययनं परमोपयोगि विद्यते। हित-बुद्ध्योपदिशन्तो वयं स्वल्पसंस्कृतज्ञान् वा संस्कृत-पारावारीणान् वा केवलं हिन्दीभाषामात्र-ज्ञानपि वा ब्राह्मणान् वान्यान् क्षत्रियादीन् वा सर्वानेव सनातनधर्मरहस्यं ज्ञातुकामान् सादरमनुरुंध्मो यत्ते चतुर्षूपरि निर्दिष्टेषु ग्रन्थरत्नेषु सर्वेषामन्यतमस्य वाध्ययनं विधाय धर्मशास्त्ररहस्यज्ञा भवन्तो धर्मोपदेशं कुर्वन्तः स्वतन्त्र जीवनयात्रानिर्वाहेन सह जगतिप्रवर्द्धमानां धर्मतोऽश्रद्धामामूलतो निकृन्तन्तु, स्वशिष्यांश्च सम्यग् धर्मपरिचितान् कुर्वन्तु। स्वयमपि जगति धर्मोपदेशजन्य-पुण्ययशोनामख्यातिभाजो भवन्तु। तेषु ग्रन्थेषु कर्ममीमांसा पुराणरहस्यञ्च संस्कृतेऽपि विद्येते। अपराणि हिन्दीभाषामयान्येव सन्ति। मध्ये मध्ये च सर्वेषां-धर्मशास्त्रपुराणादि ग्रन्थस्थपद्यानां संग्रहाः सन्ति, येषां हिन्दीभाषापि तत्रैव कृता विद्यते। किम्बहुना ग्रन्थानामेषामन्यतमस्याप्यध्येता सर्वानधीत्यैव विरमतीति बहुशः श्रुतिगतमस्ति। कर्ममीमांसा तु हिन्दीभाषायां पृथगस्त्येव पुराण-रहस्यं च हिन्दीभाषामध्येतुकामैः मार्कण्डेयपुराणस्य हिन्दीभाषायां प्रकाशितं खण्डत्रयं ग्राह्यमिति।

× × × × ×

## काश्यां संस्कृतविश्वविद्यालयः

———:():———

सम्प्रति भारते वर्षे काशी नगरी संस्कृत-विद्यालयानां सनातनधर्मस्य च

जागरूकं क्षेत्रं वर्तते । इह हि प्रतिरथ्यं यथादेवमन्दिराणि सन्ति तथैव प्रतिप्रतोलि संस्कृतपाठशाला अपि सन्ति । ईदृक् कोऽपि मार्गो नावलोक्यते यत्र गच्छता पुंसा मध्येमार्गं किमपि देवमन्दिरं कापि संस्कृत-पाठशाला नोपलभ्येत । इह विरलैव कापि रथ्या स्याद्या संस्कृतच्छात्राणां निवासैर्नालङ्कृता स्यात् । संस्कृताध्यायिनश्चेह सर्वत्र काशीमध्ये व्याप्ता स्तिष्ठन्ति । येन साधु ज्ञानं न भवति तेषां संख्यायाः। यदि संकलना कृता स्यात्तर्हि दशसहस्राणि संख्याः संस्कृतच्छात्राणां काश्यामुपलभ्येरन् । संस्कृत पाठशालानामपि पञ्चशतानि संख्याः स्युः । शास्त्राण्यपि सर्वाण्येवेहाध्याप्यन्ते । क्वचन वेदानां षडङ्गोपेतानामध्ययनं भवति । क्वापि केवलं दर्शनशास्त्राणामेव कुत्रापि एकस्यैवाङ्गस्य । कुत्रचनोपाङ्गानामन्यतमस्य कस्मिंश्चित्स्थाने आयुर्वेदस्यैव, कुहचन पुराणस्यैव, कुत्रचित्साहित्यस्यैव । कस्याञ्चन पाठशालायां तन्त्राणामेवाध्यापनं भवति । तथैव प्रतिसंस्कृतपण्डितगृहमेका संस्कृत-पाठशाला विद्यत एव । यत्र प्राचीनरीत्यनुसारं संस्कृतच्छात्रा अनियन्त्रित प्रवेशं यथावेलं यथारुचि संस्कृतग्रन्थानधीयते । इत्येवमिह काश्यां रात्रौ दिवा वा पूर्वाह्णे पराह्णे वा सर्वस्मिन्नपि काले सर्वस्मिन्नपि स्थाने संस्कृतपाठशालायां संस्कृतपाठः प्रचलति । संस्कृतच्छात्राणां वस्त्राभरणादीनामपि साध्वी व्यवस्था विद्यते । षण्णुत्तरशतत्रयाणामन्नसत्राणां काश्यां स्थितिरस्तीति प्राचीनः प्रवादो नैव वितथो विद्यते । अत्र बहुत्रान्नसत्रेषु व्यवस्थाभावात् ब्राह्मणेतराः संस्कृताध्यायिव्यतिरिक्ता अन्यव्यापारकर्तारःशूद्रा अपि भुञ्जते, परन्तु भूयसी संख्या तु संस्कृताध्यायिनां ब्राह्मणवटूनामेवास्ति । इत्थमिह काश्यां सम्प्रति अन्नवस्त्रादिसाहाय्यं लभमाना दशसहस्रसंख्यकाः संस्कृतच्छात्राः सन्ति, येषां सर्वेषामपि निवासभूतेयं वाराणसी कथं न संस्कृतविश्वविद्यालयसंज्ञयाऽलङ्कृता स्यात् । पूर्वस्मिन् बौद्धकाले 'नालन्द'-विश्वविद्यालयस्य महती ख्यातिः श्रूयते । यत्तत्राप्येवमेव दशसहस्री संस्कृत-पाली-पाठकानां छात्राणां वसति स्म, ततोऽपि पूर्वं तक्षशिला-पाटलिपुत्र-काश्मीरनगरप्रभृतीनां ख्यातिः श्रूयते । परन्तु सम्प्रति तु सर्वेभ्योऽपि काशी नगरीयमतिरेकमादधाना विराजते । यत्र संस्कृताध्यायिनामेव दशसहस्री विद्यते इंग्लिशभाषाध्यायिनां राष्ट्रभाषास्वरूपाया हिन्दीभाषाया स्तथा तत्तत्प्रान्तीयभाषाणां गुर्जरसिन्धुकर्णाट तैलङ्गद्राविणान्ध्रोत्कल वङ्ग मगध नयपालपर्वतीय-सिन्धु पाञ्चालादिप्रभृति प्रान्तीयभाषाणान्तु अध्येतृणां संख्या यदि संकलिता स्यात्तर्हि तु कियती संख्या स्यादिति संकलनानन्तरमेव विदितं भवेत् । अस्तु नाम इत्थं हि सम्प्रति सर्वतोऽपि गौरवमादधानेयमस्माकं काशी नगरी ।

"पुरी श्रेष्ठा तीर्थराजी त्रित्वरी च तपःस्थली ।
काशी वाराणसी काशिर्वरणासी वराणसी" ॥

इति प्राचीनां स्वसंज्ञां साधु संगमयति । अधुना तु मया अस्या अपरं तपःस्थलीत्वादि वैभवन्तु न वर्ण्यते। केवलं विद्यास्थानतयैवेयं स्तूयते । यथेयं विद्यास्थानं तथैव धर्मस्थानं तपःस्थानं सुखस्थानमिति प्रत्नैरपि श्रीहर्षादिभिः स्तुतैव विद्यते । तथाहि—

"वाराणसी निवसते न वसुन्धरायां,
तत्र स्थितिर्मखभुजां भुवने निवासः ।
तत्तीर्थमुक्तवपुषामत एव मुक्तिः,
स्वर्गात् परं पदमुदेतु मुदे तु कीदृग्" इति ॥

इत्थं हि धर्मधाम तीर्थस्थानं, तपःस्थलं, सुखभूमिरपि काशी संस्कृत-विश्वविद्यालयतामवगाहते इति परमसंतोषस्थानमस्माकम् । तत्रास्याः काश्या विश्वविद्यालयत्वसम्पादनार्थं कृतोद्योगानां वदान्यानां विद्यानुरागिणां कतिपयेषां नामोच्चारणं नाप्रासङ्गिकतामवगाहेतेति कियन्तो महाशया धन्यवादपूर्वकं नाम्नाऽभिधीयन्ते । तत्र सर्वप्रथमन्तु काशीराज एव श्रीमान् महाराज उपस्थिता भवति । यस्यार्थव्ययेनैव सर्वाभ्यर्हिता काशिकराजकीय-संस्कृतपाठशाला प्रचलति । ततश्च हिन्दुविश्वविद्यालयो वर्तते । यत्र च श्रीमतो महाराजस्यैव सर्वाभ्यधिकं भूमिसाहाय्यं विद्यते । साम्प्रतमपि हिन्दुविश्वविद्यालयीय-रणवीर संस्कृतपाठशाला महाराजस्यैव 'काशी नरेशहाल' इत्याख्ये प्रासादे प्रचलति । तृतीयं स्थानं खुर्जानिवासिनः श्रीगौरीशङ्करगोयनकामहाशयस्यायाति येन स्वपितृस्मृतिरक्षार्थं जोखूमलमटरूमलगोयनकासंस्कृतमहाविद्यालयेति नाम्ना महाविद्यालयः प्रचाल्यते । यत्र शतद्वयतोऽधिकाश्छात्राः सर्वथा वस्त्राभरणादिना अध्याप्यन्ते । इत्थमेव टेकमणिसंस्कृत-कालेजाध्यक्षाः, मारवाड़ीसंस्कृत-कालेजसञ्चालकाः, रुइय्यासंस्कृतपाठशाला-प्रवर्तका, विडलासंस्कृत-विद्यालयाध्यक्षा, राजाश्रीवलदेवदासविडलामहोदयाः उपदेशकमहाविद्यालयसञ्चालका दर्शनकेशरिणः श्रीगोपालशास्त्रिमहाशयाः, श्रीसन्यासिसंस्कृतपाठशाला-सञ्चालकाः श्रीजयेन्द्रपुरीमण्डलेश्वरमहोदयाः, श्री वन्द्रसंस्कृतपाठशालासञ्चालकाः वेदान्तकेशरिणः श्रीदर्शनानन्दस्वामिनस्तथा सीगरासंस्कृतपाठशाला-ध्यक्षप्रभृतयो बहवो महानुभावाः सन्ति ये हि सर्वथा सर्वतः संस्कृत-विद्यायाः प्रचारार्थं स्वस्वशक्त्यनुसारं संस्कृतविद्यालयाद्युद्घाटनेन संस्कृत-च्छात्रेभ्यश्च वृत्तिवस्त्रादिप्रदानेन काशीमिमां विश्वविद्यालयं विदधति ।

इह हि बहवः सर्वतन्त्रस्वतन्त्राः महान्तः प्रखरपाण्डित्यभाजो विद्वांसः सन्यासिनश्च सन्ति, ये हि स्वस्थाने एव विद्यालयतोऽप्यधिकान् छात्रान ध्यापयन्ति। येषाम्पार्श्वे दुरूहाणामपि ग्रन्थानामध्ययनाध्यापनं भवति। अत्र हि काश्यां सम्प्रत्यपि वैदेशिका विद्वांसः समागत्य यत्रकुत्र विदुषां स्थाने समधीत्य स्वशङ्का दूरीकुर्वन्ति। निदाघाद्यवकाशे च बहिस्थाः संस्कृत-पाठ-शालाध्यापका बहवः समेत्येहाधीयते। तेषु स्वतन्त्रविद्वत्सु त्यक्तमहामहोपाध्यायपदवीका त्यागमूर्तयः पण्डितप्रवरः श्रीपञ्चानन तर्करत्नमहोदयाः श्रीमन्तो माध्वसम्प्रदायाचार्य्याः श्रीदामोदरलाल गोस्वामिमहोदयाः पण्डितराजराजेश्वर-शास्त्रि महानुभाव प्रभृतयो बहवः सन्ति। सनातनधर्मेतरधर्मावलम्बिनामपि बहूनां महानुभावानां संस्कृतविद्यालयः प्रचलति। तत्र स्याद्वादजैनसंस्कृतविद्यालयः, दयानन्दसंस्कृतविद्यालयः, कबीर-संस्कृतविद्यालयप्रभृतयः उल्लेखनीयाः पाठशालाः सन्ति। याभिश्च काश्याः संस्कृतविश्वविद्यालयत्वे साहाय्यं क्रियते। एवं सर्वथाऽपि महाविश्वविद्यालयभूतायामस्यां वाराणस्यां एतासां सर्वासामपि संस्कृतपाठशालानां सर्वेषाञ्च संस्कृताध्यायिनां छात्राणां विदुषाञ्चैकं प्रभावशालि बृहत्संघटनं नास्ति। येन सर्वमपीदं विशृंखलितं कार्य्यजातं एकसूत्रग्रथितं सत् वर्तमानयुगीयं महामन्त्रं—"संघे शक्तिः कलौ युगे" इति। चरितार्थयेत्।

यदि सर्वेऽपि काशीस्था विद्वांसो विद्यार्थिनोऽध्यक्षाश्च परस्परं रागद्वेष विहाय एकां धार्मिकीं पद्धतिम् एकं पाठनप्रकारं सर्वेषां छात्राणां पारस्परिकं सम्मेलनं निर्मापयेयुः। धर्म-प्रचारार्थञ्च सर्वेऽपि मिलित्वा दृढं कमपि नियमं निर्धारयेयुः, सदाचारादि शिक्षार्थमपि कोऽपि नियमितो दृढः प्रबन्धः स्यात्, एतेषां वाक्छक्तिविकाशाय सामूहिकः संघ एकः स्यात्, तदा इमे दशसहस्रसंख्यकाः संस्कृतच्छात्रा भारतवर्षे सर्वत्र ग्रामे ग्रामे प्रसृत्य सनातनधर्मस्यापूर्वां जागर्तीं विदध्युर्येनेयं काशी प्रत्यक्षतो जागरूक-विश्वविद्यालयत्वं सफलं स्फुटी कुर्य्यात्। सनातनधर्माभ्युदयोऽपि साधुसमेधिनः स्यादिति वयं परमेश्वरं प्रार्थयामहे यदखिलभारतवर्षीय-संस्कृत-विश्वविद्यालय भारतधर्ममहामण्डल तः प्रवर्तितां धार्मिकपरीक्षां पद्धतिमीदृशीं 'सर्वोन्नतां प्रबलां दृढां सर्वप्रियाञ्च विदध्यात् या काशीस्थानां विदुषां पारस्परिक-सम्मेलनभावमुद्दीपयेद्। यतः सर्वेऽपि वयं सम्मिलिता धार्मिकं जगदुन्नयन्तः, अनया परीक्षया सर्वानपि काशीस्थान् संस्कृतच्छात्रानलङ्कृतान कुर्वन्तः, धार्मिकसूत्रबद्धान् विदधतो गुप्तसंस्कृतविश्वविद्यालयत्वमुपगतामिमां काशीं प्रत्यक्षत एव संस्कृतविश्वविद्यालयतां नयाम इति काशीपतिं श्रीविश्वनाथमेव सर्वथा समाश्रयामः।

# कालस्य विचित्रा गतिः।

——:※:——

ले०—पं० रमापतिमिश्रः साहित्याचार्यः, एम्० ए०, एल० एल० बी०।

( २ )

पूर्वलेखे साधक-बाधक-युक्त्या प्रस्तुते भ्रातृवर्गे प्रमीतपतिकानामनपत्यानां रिक्थे स्त्रिया अनधिकारो निरूपितः पुनरपि सहृदयमनोविनोदाय चोद्यपूर्वकं निरूप्यते।

अत्रेदानींतनानां नव्यानामिमे आक्षेपाः—

१—मृते पत्यौ तद्रिक्थे तत्पत्न्यनधिकारे भ्रातृवर्गैस्तत्पतिरिक्थमुपगृह्यापि तद्भरणपोषणे न क्रियेते।

२—सम्यक् भरणमन्तरोदरपीडिता गृहान्निःसृत्य इतस्ततोऽटन्ती कुलटा सञ्जायते। सञ्जातायाः कुलटायास्तस्या ऐहिकामुष्मिकावपि नश्यतः।

३—पितृपैतामहं धर्ममपहाय मोहमदकाड्क्षमतमङ्गीकृत्य देशस्य समाजस्य च प्रत्यहं हानिमेव करोति। तस्माल्लोकहितैषिणा सततमेव विधवायाः पत्युर्धने सर्वाधिकारार्थं यतनीयम्। भाविफलान्यनुसंधायैवार्षज्ञानेन परमकारुणिकैर्महर्षिप्रवरैर्बहुषु निबन्धेषु निर्णीतोऽयं विषयः- तथा चोक्तं प्रजापतिना—

जङ्गमं स्थावरं हेमकुप्यं धान्यं रसाम्बरम्।
आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकम्॥
पितृव्य गुरु दौहित्रान् भर्तुः स्वस्रीयमातुलान्।
पूजयेत्कव्यपूर्ताभ्यां वृद्धांश्चाप्यतिथीन्स्त्रियः॥

कुप्यम् त्रपुसीसादि। कव्यम् पित्रर्थं सङ्कल्पितमन्नादि पूर्तं खातादि दक्षिणादि। अत्रायं निष्कर्षः स्थावरेणापि सहाखिलं भर्तृधनमधिगत्य धनसाध्यं स्व्यधिकारिकं पत्युरात्मनश्च हितकरं कर्म पतिपक्षीयपुरस्कारेण पत्न्या कार्यमिति। एवं तिष्ठन्त्या ये पीडा कारिणस्ते राज्ञा चोरवद्दण्ड्या इति स एव ब्रूते—

सपिण्डा बान्धवा ये तु तस्याः स्युः परिपन्थिनः।
हिंस्युर्धनानि तान् राजा चौरदण्डेन शासयेत॥

यद्यपि बार्हस्पत्यत्वेन पत्न्याः स्थावरग्रहणनिषेधकं स्मृतिचन्द्रिकायाम्—

यद्विभक्ते धनङ्किञ्चिदाध्यादि विविधं स्मृतम्।
तज्जाया स्थावरं मुक्त्वा लभते मृतभर्तृका॥

इति वचनमभिहितम् । तदेकदेशानुयायिभिश्च जङ्गमं स्थावरमित्यादि प्रजापति-वचन-विरोधपरिहाराय वृत्तविहीन-पत्नीविषयपरत्वम् । अविभक्तपत्यंश-विषयत्वं वा—अभिहितम् ।

"वृत्तस्थापि कृतेऽप्यंशे न स्त्री स्थावरमर्हतीति" । तच्छ्लेषविरोधेनापास्य दुहितृ-रहित-पत्नीविषयत्वेन व्यवस्थापितश्च । तत्र मदनरत्नकारेण मिताक्षरा-कल्प-तरुहलायुधादि-सर्वग्रन्थान्तरेष्वलिखनात् निर्मूलत्वमस्य । जङ्गमं स्थावरमिति प्राजापत्यस्य च सर्वत्र लिखनात्समूलत्वमिति दोषमभिधाय तदुक्त व्यवस्थायाश्च स्वोत्प्रेक्षामात्रकल्पितत्वेन अयुक्तत्वमभिधाय समूलत्वेऽपि स्थावरादि-सकलधन-ग्रहणं ब्राह्मादि विवाहोढाविषयं तद्वचनेषु-पत्नीशब्दप्रयोगात् । स्थावरग्रहण-प्रतिषेधक-बृहस्पतिवचनं तु जाया-स्त्री-शब्दमात्रप्रयोगादासुरादि विवाहोढा विषयमिति स्वयं व्यवस्था कृता । आसुरादिविवाहोढायाः "पत्युर्नो यज्ञसंयोगे" इति पाणिनिसूत्र स्वारस्यात्पत्नीशब्देनाग्रहणाज्जायादिशब्दोपेतवचनानामपि तदे-कमूलकतया तत् परत्वात् स्मृतिचन्द्रिकायामेव निरस्ता ।

ननु—

मृते भर्तरि भर्त्रंशं लभते कुलपालिका ।
यावज्जीवन्नहि स्वाम्यं दानाध्यमनविक्रये ॥

इति कात्यायनवचनबलात् गृहीतधनायाः पत्न्यास्तद्धनेन जीवनमात्रं दाना-धिकरणविक्रयेषु तु नाधिकारः प्रतीयत इतिचेन्न—तस्य दृष्टार्थनटनर्तकादि दाना स्वातन्त्र्यपरत्वात् । अदृष्टार्थदाने तदुपयोगिनो ह्यधिकरणविक्रययोश्च तेनैवाधि-करणाभिधानाच्च । अत एवात्र मनुव्यासावप्यनुकूलौ तथा हि—

मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता ।
स्नाता प्रतिदिनं भक्त्या भर्त्रे दद्याज्जलाञ्जलीन् ॥
विष्णो राराधनं चैव कुर्यान्नित्यमनुव्रता ।
कुर्याच्चानुदिनं भक्त्या देवतातिथिपूजनम् ॥
दानानि विप्रमुख्येभ्यो दद्यात् पुण्यविवृद्धये ।
उपवासाँश्च विविधान् कुर्याच्छास्त्रोदितान् शुभे ॥
लोकान्तरस्थं भर्तारमात्मानञ्च वरानने ।
तारयत्युभयं नारी नित्यं धर्मपरायणा ॥
पत्न्येव दद्यात्तत् पिण्डं कृत्स्नमंशं हरेत चेत्यादि ॥

एवञ्चास्मादुपोद्बलकवचनात् पत्न्या अपि पतिनरकनिस्तारकत्वाद्धन-हीनतया वा कार्यं कुर्वन्ती स्वीयापुण्येनार्धशरीरसंस्तवात् 'पतत्यर्धशरीरस्य यस्य-

भार्या सुरां पिबेदित्यादि' वचनदर्शनात् पतिमपि पातयेदिति तया गृहीतं स्वाम्यर्थ-मेव तद्धनं भवतीति सर्वेभ्योऽपरेभ्यः प्रथमं पत्न्या एव पतिधनग्रहणं युक्तम्। परन्तु पत्न्या विभक्तापुत्रपति-स्वामिक-निखिलरिक्थग्रहणं तु कात्यायन-वचन-विरोधादुपेक्ष्यम्—यदाह—

स्वर्याते स्वामिनि स्त्री तु ग्रासाच्छादन-भागिनी ।
अविभक्ते धनांशे तु प्राप्नोत्यामरणान्तिकम् ॥

अत्रत्यः 'तु' शब्दो वा शब्दार्थकः। तथा चायं निष्कर्षः मृते भर्तरि ग्रासा-च्छादनमेव साक्षाल्लभते आमरणान्तिकं यावज्जीवं यावता धनेन जीवनं स्त्र्यधि-कारिकमावश्यकञ्च कर्म सिद्ध्यति तावत्पर्यन्तं वा धनांशं प्राप्नोति।

धनांशमामरणान्तिकमित्येतद्घटकधनांशमात्रोपकथनेनाविभक्तस्य पत्युः कृत्स्नं धनं लभते इति कथनं प्रलापमात्रमेव।

न चात्र श्लोके सामान्ययोषिद्वाचकस्त्रीशब्दश्रवणात् विशेषार्थयज्ञसंयोगे पतिकर्तृकफलभोक्त्र्यर्थकपत्नी व्यतिरिक्तस्त्रीपरमिदमपीति वाच्यम् 'अविभक्त' इति विशेषणानर्थक्यापत्तेः। विभक्तेऽपि स्वामिनि पत्नी-भिन्नाया अपुत्राया मरणमात्रोक्तेः। अत एव कृतेऽप्यंशे इत्यनुवृत्तौ बृहस्पतिः।

प्रदद्यादेव पिण्डञ्च क्षेत्रांशं वा यदीच्छति ॥

स्मृतिचन्द्रिकायाञ्चास्य व्याख्यानम्। पिण्डग्रहणं भोजनाच्छादनोपल-क्षणार्थन्तत्पर्याप्तं धनं तत्सम्पादकं क्षेत्रांशं वा निजरुच्या भर्त्रंशार्हपत्नीव्यतिरिक्त-विधवायै भ्रात्रादिस्तद्धनग्राही प्रदद्यात्। एवकारः प्रदानस्यावश्यकत्वार्थं इति। एतद्विषयकानुवादकमेव नारदवचनम्—

यावत्यो विधवाः साध्व्यो ज्येष्ठेन श्वसुरेण वा ।
गोत्रजेनापि वान्येन भर्तव्याश्छादनाशनैः ॥

सर्वत्र भर्तृधनग्राहिणय इतिशेषः। धनग्रहनिमित्तत्वाद् भरणस्य। साध्व्य इत्यनेन सर्वत्र सदाचारिणीनामेव भरणमसतीनान्तु पत्नीनां भरणमात्रमपि न। आच्छिन्द्युरितरासु स्विति प्रागुक्तनारदवचनवाक्यशेषादिभ्यः। अत एव बृहस्पति-रपि सदाचारिणीनां जीवनयापनार्थं श्वसुरादिभिर्दत्तमन्यैश्चापि दायादैर्नाप-हार्यमित्याह—

स्थावरादि धनं स्त्रीभ्यो यद्दत्तं श्वशुरेण तु ।
नतच्छक्यमपाहर्तुन्दायादैरिह कर्हिचिदिति ॥

अताहशानान्तु दत्तमपि हर्तव्यमिति ब्रवीति कात्यायनः—

भोक्तुमर्हति पत्न्यंशं गुरुशुश्रूषणे रता ।
न कुर्याद्यदि शुश्रूषाञ्चैलपिण्डे नियोजयेत् ॥

अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका ।
व्यभिचाररता या च स्त्रीधनञ्च च सार्हति ॥

श्लोकघटकनार्हतीत्यनेन जीवनयापनमात्रमपि न देयम् । अपि तु दत्त-मपि व्यभिचारिण्याः सकाशादपहरणीयमिति द्वयमुक्तम्भवति । एवञ्च शास्त्राणां पूर्वापरविमर्शनेन विधवाया भरणपोषणमन्तरा किमपि अन्यन्नापेक्षते !

यत्तु नव्यैराक्षिप्तं भरणपोषणमन्तरा वृत्यर्थं कुलटा संजायते तत्तुच्छम्—सर्वथा विलास-सामग्रीसज्जितायामेव कामवासनातृप्त्यर्थं व्यभिचारबाहुल्य-दर्शनात् ।

सम्यक् सज्जितानामिन्द्रिय-वशीभूतानामेवेन्द्रिय विषयसुहितार्थं परधर्म-स्वीकरणावलोकनाच्च । नव्यशिक्षाशिक्षिता एव देशे समाजे च महिला दृश्यन्ते प्रायशः । नूतनधारा वाहिन्यो दासवत् पतिं मन्यन्ते । तस्माद् धर्मप्राणैः सर्वथा सर्वदा स्त्रियोऽस्वतन्त्राः कार्या न तु पाश्चात्यमहिलावदित्यलंपल्लवितेन ।

——

लेखक—महामहोपाध्यायः श्रीगदाधरविद्याभूषणः ।
पो०—इच्छापुर । जि० गञ्जाम ।

"श्रद्धाऽवहित चित्तेन" सारः सम्यग्विविच्यताम् ।
कथायाः प्रकृतार्थायाः प्रार्थये पाठकोत्तमाः ॥

अयि शास्त्रशाण-निशित-शेमुषी-जुषो धर्म-संस्थापन-रहस्य-विचार-चातुरीपुषो विद्वांसः ।

पश्यन्ति किल तत्र भवन्तः, स्वराज्यलाभ-तृष्णातिरोहित-विवेकैरनेकैः, पञ्चमानां चातुर्वर्ण्येन सह संचिकलयिषया प्रपञ्चितैरकृत सम्यक्परामर्षैः सर्वथा सतां दुर्मर्षैर्वृथा वादवर्षैं देशसंप्लाविनीं मैषमस्तनीं कादम्बिनीमपि विडम्ब-यद्भिः, वातेनेव गान्धि-महाशयानां मतेन नीयमानै दुर्निरोध-पयःप्रवाह-निकरैरिव परितः प्रसृमरैः, सनातनधर्मसेतु-लङ्घन-जाङ्घिकैरनुगम्यमानाः, पाश्चात्यशिक्षामात्रेण सर्वज्ञायमानाः, सन्तो, भारतेऽत्र वर्षे लब्धसन्मानाः कतिपये महाजनाः सम्प्रति लोकमिममुद्वेजयन्ति । येन यावता वर्षेणानेन दुर्दि-नायितं तमेनमुद्वेगमनुभवामः किलः ?

जयन्ति चैते आत्मनात्मीयैः, लोकानां तथाविधानां स्वराज्यप्राप्त्याशा-मात्रोत्पादनसारैर्व्यय-प्रयास-निर्भरैरपि सिद्धधे विदूरैः समिति-समाज-महो-

रसवाद्याकारैरतिगम्भीरारम्भ-सम्भारै विमोहयन्तो, दुर्दशा-जलधिमग्नानां सामान्यतो भारतवासिनां प्रोत्साहमुत्सूनयन्तो हन्त नेतृपदे? इतीदं न कस्य विमृशतो विस्मयमावहेत्? हन्त संक्षेपतः, स्वयं भगवानात्मस्वरूपान्तरेण धर्मेण लोकममुं संस्थापयतीति, विजानानो जनो, न कथंचिदपि चालयितुं वैयाल-वलयबन्धे इव धर्मनिबन्धे, हस्तं क्षिपेत्। कः पुनर्लाङ्गूलमाकलयन्नुत्तोलयेत् यस्त्वस्पृश्यान् स्पृश्याययितुमुत्सहेत्? गान्धि महाशयास्त्वाहितुण्डिकवद-सामान्य विज्ञानधन्याः, तेषां यदि शक्यं, तैरेव तथा प्रवर्त्तितव्यं, न तु सामान्यतो लोकोऽयं प्रवर्त्तयितव्यः। जानीमो वयं, सनातनोऽपि धर्मोऽयं कालोचित-संस्कार-सापेक्षः, युगे युगे तत्तत्समयोचित-संस्कार-परम्परा-परिप्राप्तत्वात्। परं तु शिशूनां कर्णयो र्वेध-संस्कार-सहत्व-दृष्ट्या कर्णयोरामूलच्छेदः केना-नुमोद्यताम्? तस्माद्गान्धि महाशयानां संस्काराध्वनि न मादृशैः सहाध्वनीनै र्भूयते, इति च न वयमेतान् लोकानुकम्पासम्पन्नहृदयान् महोदयान् विद्विष्मो दूषयामो वाभ्यसूयामहे। परं तु तेषां सत्प्रवृत्तिमाशास्महे।

वर्द्धन्तामिह नेतारो विजयन्तां शतं समाः।
गमयन्तोऽखिलान् लोकान् धर्माध्वनि सनातने॥
अरक्षिते न रक्ष्यन्ते रक्ष्यन्ते यत्र रक्षिते।
रक्षणीयः स्वधर्मोऽयं लोकै रक्षामभीप्सुभिः॥
इत्यार्षीणां गिरां दम्भाद्ध्वनन्तीं भाग्यझर्झरीं।
अवधाय प्रवर्त्तन्ते नेतारो ये जयन्तु ते॥ इति।

यैः शैलाः सागरे निपातिता स्तैरेव खलु पुनरुद्धर्त्तुं शक्यते। ततो विप्ला-वकैरेव धर्मः संस्थापनीय इति त एवास्माभि राशंसिताः।

अथास्मिन् प्रबन्धे नेतृपक्षस्य अस्पृश्यतानिवारणप्रयुक्ते स्वधर्मोन्मूलने प्रवृत्ति र्विमृश्यते।

'शौचमूलाः क्रियाः सर्वाः इति, स्वधर्माचारस्य शौच मूलकत्वेन, अशौ-चानां मध्येऽस्पृश्य-स्पर्शजं साक्षादशौचमिति तस्य स्वधर्माचारप्रतिबन्धकत्वेन, गीतामाहात्म्येऽपि व्यासभगवत्पादैरेव—

"अभक्ष्यभक्षजं पापमस्पृश्य स्पर्शजं तथा व्यपोहति।"

इत्यादिना अस्पृश्यस्पर्शस्य पापावहत्वप्रतिपादनात् अशौचानां मध्ये गरिष्ठत्वेन, हेयत्वात् तस्य स्पृश्यत्वं नैवोपपद्यते। तेन स्वधर्माचारोन्मूलनापत्त्या लोकसंस्थापनायत्तमतीनां महामतीनां तत्प्रवृत्ति र्न साधीयसीति सर्वसंमतमे-

वैतत्। तत एव सदाशयैः पण्डितमालवीयमहाशयैः तत्र न प्रवृत्तमिति विश्वसिमः। एवमेव पवित्र-प्रकृतयोऽपरे परःसहस्राः स्वधर्मध्वंसशङ्किनः पराङ्मुखा आसन्निति विश्वविदितमेवैतत्। तथापि सर्वाग्रेसराणां गान्धिमहाशयानामाग्रह स्तत्र न निवर्त्तते इति वयमत्र प्रत्यवतिष्ठामहे।

प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते इति आप्तानां वचन-प्रामाण्यात्, अस्पृश्यतोन्मूलने प्रवृत्तिनिमित्तप्रयोजनं किमिति प्रश्ने कृते गान्धिमहाशयैः प्रतिवाक्यं दीयते पत्रमुखेन—

'यत्र देशे यद्धर्मावलम्बिनां संख्याज्येष्ठत्वं स तेषां स्वदेश इति हि भारतसाम्राज्ये नीतिरस्ति। अस्माकं स्वराज्यसम्पादनाभिलाषिनां स्वधर्मे संख्या ज्येष्ठत्वमादौ संपाद्यम्। स्वराज्यस्य तदनन्यथा सिद्धेः। यदि च पञ्चमैः संभूयास्माकं संख्याज्येष्ठत्वमस्त्येव तथापि ते चतुर्णां वर्णानां मध्ये स्वकीयामस्पृश्यता-प्रयुक्तावमाननामसहमानाः क्रैस्त-धर्मे दीक्षां जिघृक्षन्ति। तथा सति अस्माकं संख्याज्येष्ठत्वं व्याहतं भवेत्। ततश्च स्वराज्यमस्माकमशक्य सम्पादनं स्यात्। अतः स्वराज्यलम्भक संख्याज्येष्ठत्वसिद्धयेऽस्पृश्यानां धर्मान्तर-परिग्रहो निवारणीयः। तत् निवारणं च अस्पृश्यानां स्पृश्यत्वापादनं विना न सम्भवति'। इति अस्पृश्यतोन्मूलने पञ्चमानां, स्वराज्यलाभ-प्रयोजक-स्वधर्मि-संख्या-ज्येष्ठत्व-सिद्धिः प्रयोजनं तदेव प्रवृत्तिनिमित्तमिति।

अत्रोच्यते—यत्र देशे यद्धर्मावलम्बिनां संख्याज्येष्ठत्वमित्यादि व्याप्ति र्न देशगतस्वत्वसाधिका। अननुगमात्। एकस्मिन् काले एक 'धर्मिणां स्वत्वे सिद्धेऽपि कालान्तरे अन्यधर्मिणां स्वत्वसिद्धेः। धर्माणां च ग्राहकेच्छायत्तत्वेन धर्माणां परिग्रहपरित्यागसहिष्णुत्वेन ह्रासवृद्धिस्वभावप्रयुक्तया धर्मिणां संख्याकनिष्ठत्वज्येष्ठत्वयोः कालभेदेनैकत्र संभवात्। आश्रयविपर्याससम्भवाच्च। देशदेशीययोः परतः कालात् धर्माचाराणां प्रवृत्तेः प्रमाणसिद्धत्वेन तत्तद्देशदेशीययोः परस्परं स्वत्वस्य प्रागेव धर्माचारप्रवृत्तेः सिद्धत्वात् तत्तद्धर्मिणां संख्याज्येष्ठत्वस्य तत्तद्देशगतस्वत्वं प्रति हेतुत्वकल्पनानौचित्यात्। अन्यथा धर्माचारप्रवृत्तेः प्राक् तत्तद्देश-देशीययोः परस्परस्वत्वव्यवहाराभावस्यावश्यं स्वीकर्त्तव्यत्वापत्तेः।

किञ्च फ्रैञ्चब्रिटिश-रसिया-जर्मनी प्रभृतिषु देशेषु क्रैस्तधर्मस्य व्यापकत्वेन तद्धर्मिणां संख्याज्येष्ठत्वात् तद्देशसामान्ये क्रैस्तधर्मिणां स्वत्वे प्राप्ते विशेषाभावेन एकदेशस्थानां क्रैस्तधर्मिणामन्ये देशा अपि स्वदेशाः स्युः। तथा च देशतोऽप्यननुगमाद् व्यवहारविरोधापत्तेः। अर्थात् ब्रिटिशदेशनिवासिनां

क्रैस्तधर्मिणां रसिया स्वदेशः स्यात् । तद्देशीयानां तेषां जर्मनी स्वदेशः स्यात् । जर्मनीवासिक्रैस्तानामपि फ्रान्स् स्वदेशः स्यात्, इति । अतो धर्मिसंख्याया ज्येष्ठत्वे देशगतं स्वत्वं न सिद्ध्यति, नापि कनिष्ठत्वेन सिद्धं स्वत्वं व्याहन्यते । परन्तु देशानां पृथक् पृथक् विभाजकोपाधिरूपा ये धर्माः, तत्र तत्र देशे प्रसिद्धा वर्त्तन्ते त एव पुनः तत्रजातेषु वर्त्तन्ते इति तत्तद्देश-देश-जातयोः स्वत्वसाधकः स एव धर्मो भवति । तथा च ये यद्देशप्रकृतिका स्तेषां स स्वदेशः । अत एव विदेशीय भेद प्रयोजक स्व प्रकृतिसजातीय प्रकृतिमत्त्वं देशगतं स्वत्वं (स्वकीयत्वं) इति स्वत्वस्य लक्षणं पर्यवसितं भवति । तथा च-प्रत्यक्षं ह्येतत्-सृष्टिवैचित्र्यात् प्राच्य-पाश्चात्य गोलार्द्धयो स्तत्र तत्र च महाभूखण्डेषु एसिया यूरोप-अफ्रिका-इत्यादिषु भूजलवायूनां प्रकृतौ, तत्र जायमान जड़ाजड़ वस्तुवैलक्षण्यदर्शनेन, परस्पर भेदसिद्धौ, तत्प्रकृतिभेदप्रयुक्तया तत्तन्महाभूखण्डानां परस्परं भेदात् पृथक् पृथक् व्यवहारो जातः ।

तथा हि एकत्र भूखण्डे जायमानाः कतिचनवानस्पत्या वनस्पतय स्तृण-जातयः पशवः शकुन्ताः प्रायोऽन्यत्र भूखण्डे न जायन्ते । जातेषु फलपुष्पादिषु पुष्टिपुष्कलता सरसत्वनीरसत्वादिना भेदो जायते । किञ्च एकभूखण्डजातानां मनुष्याणां नासोष्ठललाटतालुमेरुदण्डादे वर्णस्य वाचामुच्चारणस्य रुच्यादेरपि प्रायो भेददर्शनात्, उष्णानुष्णप्रकृतिभेदाच्च प्रकृतिभेदः प्रत्यक्षसिद्धः । तस्मा-त्तत्तन्नाम्ना भेदेन च तत्तद्भूखण्डानां प्रकृतिभेद प्रयुक्तो भेदव्यवहारः प्रवर्त्तत इति प्राचीनै र्नवीनैश्च तुल्यमुरीकार्यः । तत्र-तत्र भूखण्डेषु पुनरन्त रवान्तरभेदविशेष-सद्भावात् वाप्यभूभागानाम् इङ्गलाण्ड-फ्रान्स-जर्मनी प्रभृतीनां भेदव्यवहारो वर्त्तते । तत्र जातानां मनुष्याणामपि तत्र तत्र जाताऽहार्यपदार्थसारगततत्तत्प्रकृ-तिकोपादानजन्यतया हेतुना तत्तत्खण्डजातानां जातिभेदः संजातः ।

ताश्च जातयो नित्याः हिन्दु (भारत) चैन जर्मन् व्रिटिश प्रभृतीनां परस्परं विभिन्नाः । ता एव देशगता देश विभाजकोपाधि पदवाच्याः, व्यक्तिगता हिन्दु-व्रिटिश प्रभृति विभागहेतवो भवन्ति । अत एव हिन्दूनां हिन्दुदेशः स्वदेशः । तथा व्रिटिश व्यक्तीनां वृटिश देशः स्वदेशः एव । एवमितरेऽपि । इत्थं हिन्दुत्वमेव स्वत्वसाधकं न तु धर्मिणां संख्याज्येष्ठत्वमिति । अतः क्रैस्तादिधर्मान्तरग्रहणेऽपि हिन्दुत्वं न व्याहन्यते । धर्मस्यैव व्याघातः । तेन धर्मिसंख्या ह्रासेऽपि न हिन्दु-संख्याह्रासः । तथा च हिन्दुसंख्या ज्येष्ठत्वस्य जागरूकत्वेन स्वराज्यसम्पादने न प्रतिबन्धः । पञ्चमेषु अस्पृश्येषु हिन्दुत्वं यथा न बाध्यते तथा क्रैस्तमतावलम्बि-

ष्यपि न बाधः । धर्माचारस्य जातिबाधकत्वाभावात् । न च विधर्मावलम्बिनः स्वजातेर्भ्रष्टा भवन्तीति व्यवहारविरोधापत्तिरिति वाच्यम्, तत्र जातिपदस्य धर्मपरत्वात् । स्वधर्माद्भ्रंशे सति धर्मवतां समाजाद्बहिष्कृतत्वेन तथा व्यवहारात् । समानधर्मित्वं हि उत्पाद्यो धर्मविशेषः, धर्मान्तरावलम्बनेन विनश्यति । न तु हिन्दुत्व जातेर्नाशः, तस्य नित्यत्वात् । तदपि बाध्यते इति चेत्, पूर्वमेव क्रैस्तधर्मावलम्बनाद्ब्रिटिशत्व फ्रेञ्चित्वादि जातीनां बाधितत्वापत्तेः । इत्यलम् । अपि तु स्पृश्यास्पृश्य सधर्मि बिधर्मि साधारणं हिन्दुत्वमादायैव स्वराज्य साधनं कर्त्तुमौचित्येऽपि तां पद्धतिं परित्यज्य अस्पृश्यता निवारणपूर्वकोऽयं प्रक्रमः सुस्पष्टं, स्वापकीर्तें निस्तारोपाय इव, प्रतिभाति ।

एतावति प्रबन्धे धर्मधर्माचारादिपदैः, सर्गादौ भगवता लोकसंस्थापनार्थं 'गुणकर्म विभागशः' सृष्टपूर्वस्य सार्वलौकिकस्य सनातनधर्मस्य हिन्दुत्वादि सर्वजातिव्यापकस्य बहिरिन्द्रियागोचरस्य 'अनुष्ठानमात्र' मुद्दिष्टं, लोकव्यवहारानुसारात, इति सावधानमवधार्यम् ।

अनुधाविनि प्रबन्धे धर्मस्य सनातनस्य, लोकसंस्थापकता विवरणावसरे, विभाजनपूर्वकं संस्थापनक्रमो विस्तार्य विवरिष्यते ।

स्वराज्यलिप्सया, पञ्चमानां स्पृश्यत्वसाधनविधया देवालयेषु तेषां प्रवेशावकाशदाने मूलतः स्वधर्मध्वंसो यत्कार्यते गान्धि-महाशयैस्तेन सह तुलनया स्वराज्यं तैरभिप्रेतं कियदिति विवेचनीयम् । तथा हि स्वराज्यं नाम प्रकृते नैव भारत राजासनारोहः । परन्तु महामान्येषु ब्रिटिशप्रभुषु साम्राज्यसिंहासनमधिरूढेषु, तेषां स्वायत्तीभूतेषु कोशदुर्गेषु, श्यामगौरीभ्यामनीकिनीभ्यामपि भारतभूमण्डलमावार्य प्रवृत्तिमस्माकं सावधानमवधारयत्सु, स्वराज्यदण्डमुद्यम्य विजयमानेषु सत्सु किञ्च पार्लियामेण्ट महासभायां साम्राज्यतन्त्रं मन्त्रयमाणायां सत्यां, तैरेव भरताचार्यैः शिक्षापितैस्तद्देशभाषा भूषावेशाचारैर्यथास्थानं भारतरङ्गमध्ये पारिश्रमिक मूल्यप्रतिबन्धेन भारतसाम्राज्यशासनसन्दर्भस्य कुशीलवानामिवास्माकमभिनयनमात्रं किल !! एतस्मै लाभाय स्वधर्मस्य स्वैरेव ध्वंसनम् ? विधर्माणो महामतयः किमपहसन्तीति नारुन्तुदमेतत् ? एतावताऽत्र महाकविवाक्यं स्मर्यते—

'स्वल्पस्य हेतोर्बहु हातुमिच्छन् ।
विचारमूढः प्रतिभासि मे त्वम्' । इति ।

# सुरभारत्यवस्था ।



ले०—पण्डितरामकृष्णशास्त्री, अध्यापकः ( उज्जैन )

सुरभारत्याः सम्बन्धो हिन्दूसमाजेन साकं यथा स्थितोऽस्ति न तथान्यैः साकम् । संस्कृतभाषायां हिन्दु-वीराणामस्माकं पूर्वजानां चरितानि, तत्तत्कालीन-सभ्यता,आचारः तद्वारा च तेषामभ्युदयः, इत्यादि हिन्दुसमाजोपयुक्तं साहित्यं समुद्रे रत्नानीव सुगुप्तमस्ति। सागरमेनमुन्मथ्य सुरासुरैरिवास्माभिरितरैश्च शतशो रत्नान्यवाप्तुं शक्यन्ते । दृष्ट्वै तत्खिद्यते चेतः, यत्सुरभारत्याः प्रचारोऽतीव-न्यूनः, भारते हिन्दूनां संख्या यवनेभ्यः प्रशस्तास्ति । परन्तु यवनेषु "अरबी फारसी" शिक्षा-भूषिता यावन्तः सन्ति न तावन्तः संस्कृतज्ञा आर्यजातिषु। कुत्रचित्समाचारपत्रे प्रकाशिता अङ्का दर्शयन्ति यद्भारते विंशतिवर्षात्पूर्वं यावनीभाषाध्यायिनश्छात्राः ३१,३४६, पाठशालाश्च १४७० आसन्। संस्कृतविद्यार्थिनस्तु केवलम् २०,६१०, पाठशालाश्च १२६८ आसन्। एतादृशानंकान् कः संकलयति ? इत ऊर्ध्वकालीना ईदृशी संख्योपलभ्यते न वा ? संस्कृतभाषासेविनां या नाम भारतीयाः संस्थास्ता विषयेऽस्मिन्किमाचरन्त्युत निद्रामवलम्बन्ते ?

संस्कृतपाठनप्रणाली या पूर्वमासीत् सा चेदानीं खण्डिता दृश्यते नूतना च न सार्वजनीना निर्धारिता दृश्यते ।

संस्कृतसाहित्यसंमेलनं निखिलभारतीयम् कुत्रचिद्भारते प्रत्यब्दं सम्पद्यत इति श्रूयते। तत्किं तथ्यमुत मिथ्येति नाभ्युपगन्तुं शक्यते। परीक्षाश्च संस्कृतच्छात्राणां काश्चित् प्रत्यब्दं भवन्ति काश्चिन् षाण्मासिकाः, परं तासु प्रभूताः संस्था नोत्तरदायिन्यः ( रिस्पाँसिबल् ) सन्ति। परीक्षाग्रहण-व्यवसायेन द्रविणोपार्जनमेव तासामुद्देश्यम्, व्यवसायिनां मतयो बहुशाखाश्चानन्ताश्च भवन्ति। नास्मिन्विषये विमर्शावसरः। काशीस्थराजकीय-संस्कृतपाठशालीय-( बनारस-गवर्न० सं० कॉ० ) परीक्षाः वंगीयाः पंचनदप्रान्तीयाः ( पंजाब ) परीक्षाश्च लब्धप्रतिष्ठा इत्यत्र न संदेहः। परंतु तासु न सामानाधिकरण्यम्। यथा काशीस्थराजकीय-मध्यमोत्तीर्णः कलिकातास्थ-तीर्थपरीक्षायां न प्रवेष्टुमर्हति ।ः विषयस्यास्यान्तस्तलप्रवेशतो ज्ञायते यद्विदुषामपारस्परिकः सौमनस्याभाव

परीक्षानीतेः पार्थक्ये चात्र प्रधानं कारणम् । आंग्लपरीक्षाव्यवस्थापिकाः संसदो यथा पाठशालानां निरीक्षणं कुर्वन्ति न तथा गीर्वाणभाषापरीक्षासंसदः । नियतकालावधिपाठशालासु अनुपस्थिता अपि छात्राः पाठशालाभ्यः परीक्षानुमतिं लभन्त इत्यतीवासमंजसम् । संपूर्णस्य पाठ्यस्याध्ययनं विना परीक्षायामुपस्थिति रुत्तीर्णता च परीक्षावैयर्थ्यमेव सम्पादयति ।

यासु पाठशालासु न्यूनसंख्यका अध्यापका अधिकसंख्यकाँश्छात्रान्सहैवान्यान्यविषयान्पाठयन्ति तत्रत्यविद्यार्थिनां कालापव्ययो दुरवस्था च न शक्यते वर्णयितुम् । अत्रार्थे परीक्षाव्यवस्थापका यदि अनुसन्धानं कुर्युः तर्हि छात्राणां जीवनसाफल्यमधिकृतानां च कर्तव्यपालनम्भवेत् इत्यत्र न संदेहावसरः ।

संस्कृतभाषा "मृतभाषे"ति पाश्चात्यशिक्षादीक्षादीक्षिता वदन्ति । केचिच्च यावनी-( अरबी फारसी, ) वद्धार्मिकीं भाषां मन्यन्ते यद्वा तद्वास्तु । संस्कृतभाषा भारतीयानेकभाषाणां जनयित्रीति सर्ववादिसम्मतो राद्धान्तः । तदुज्जीवनतस्तदुत्पन्नभाषाणाम्भारतीयेतिहासस्य पोषण-संवर्धन-संशोधनेषु विश्वजनीन उपकार इत्यत्र न लवमात्रोऽपि संशयः । श्रीभारतधर्ममहामण्डलं स्कूल-कालेजेषु धार्मिकीं शिक्षां प्रचारयितुं प्रयत्नं वितनुते इति नितरां प्रमोदास्पदम् । अत्रार्थे संस्कृतपरीक्षासु धार्मिकविषयाणामावश्यककरणेन आदर्शः स्थापनीयः ।

---

## उद्गारः ।



**ले०—श्रीभोलानाथशास्त्री, गोयनका महाविद्यालयस्थः, ( काशी )**

पूर्वोद्भवानां विदुषामृषीणां, सज्ज्ञानविद्याचरणप्रणालीम् ।
विप्रैस्सदास्माभिरनुस्मरद्भि विचारणीयाद्य दशा स्वकीया ॥ १ ॥

आसन् ये यमिनः पुरा भगवतो ध्यानावधानेक्षणाः,
कान्तारामपरायणा जगति सच्छास्त्रार्थचिन्तापराः ।
तेषामेव कुलोद्भवा वयमिह स्वान् विस्मरन्तः कथं,
कान्तारामपरायणा भुवि गता हा ! हन्त केयं दशा ॥ २ ॥

यद्वंशे पूर्वमासन् कपिलभृगुसमास्तापसा ब्रह्मनिष्ठा,
इन्द्राद्या देवधुर्य्या अपि विभवयुता यत्कृपामाचकाङ्क्षुः ।
अद्यैते ते द्विजाख्या वयमिह भुवने वेदविद्याविहीना-
दीनत्वं सम्प्रपन्ना विषयपरिगता हा ! महाकष्टमेतत् ॥ ३ ॥
एकस्तैः कुलजैः सुशोभिनगरेणोद्भासितस्सर्वदा,
देवोऽन्यो नरकान्तकोऽर्चित इह स्वात्मप्रमुक्तीच्छया ।
अस्माभिस्तु सुपूजितो नृपवरो नित्यं धनाकाङ्क्षया,
हा ! कीदृक् तु विपर्ययोऽयमधुना जातः पुरातः कलौ ॥ ४ ॥
अस्माकं तु दशाऽधुनातिगलिता नेयं समायास्यति,
भूयः प्रोन्नतिदुर्गशैलशिखरं मत्वेति यत्नात्ततः ।
माकार्षी विरतिं सदा प्रयततामस्मिन् सुभूमण्डले,
किं सायं पतितोऽर्क एष भुवने नारोढुमाकाङ्क्षति ॥ ५ ॥

---

## वर्णव्यवस्था मनोविज्ञानं च ।

**ले०—पं. लक्ष्मणमिश्रा व्या. का. तीर्थः। सरस्वतीसदन पुस्तकालय पहरा (गया)**

आर्य्यजातौ विद्यमाना शाश्वती चैषा वर्णव्यवस्था आधुनिकैः समाजसुधारकैः महाप्रलयङ्करी "पापलीला" इत्यवहस्य सर्वथा निन्द्यमाना सर्वतो भिद्यमाना प्रायः शीर्णप्राया नितरां दुःखाकरोति धर्मप्राणायाश्चार्य्यजातेः प्राणान् ।

किं "सत्यमेषा तथाविधा" आहोस्वित् "अध्यात्ममूला" वेति न ते कदाचित् स्थिरमनसा मननयाञ्चक्रुः। रागद्वेषात्मकमुपनेत्रमवतार्य्य प्रवर्त्तमाने मनने तत्त्वजिज्ञासया, "अध्यात्ममूलैवेयम्" इति प्रतिभास्यति प्रतिभावताम्। "अकारणः सुसूक्ष्मोऽपि, धर्मो नैवास्ति जाजले !" भा० "प्रभवार्थाय भूतानां, धर्मप्रवचनं कृतम्" मनुः" इतिवचनाभ्यां महर्षिभि र्दिव्य-दृष्ट्या सम्यग् विविच्यैव निश्श्रेयसाभ्युदयोदयायैव सर्वे धर्म्मा निर्मिता आसन्। "यस्तर्केणानुसंधत्ते" इतिमनुमनुसृत्य तर्कदृष्ट्यापि "आध्यात्मिकयेव" साधु सेत्स्यत्यस्मिन्नपि तर्कयुगे । तथाहि—

प्राणिनामुच्चावचमनोवृत्तिरेवोच्चावच-शरीरलाभहेतुः। मनोवृत्तेरतिशयविकासावस्थायामेव मनुष्यत्वलाभः। तत्रापि विचारप्रधानाया स्तस्यास्तथा-

विधत्वे ब्राह्मणत्वाप्तिः। क्रियाप्रधानत्वे तस्यां क्षत्रियत्वलाभः। एवं कामना प्रधानत्वे वैश्यत्वम्। अविकासितमनोवृत्तयश्शूद्रा अभूवन्।

विज्ञानविवेकप्रधाना ब्राह्मणा अध्ययनादिषु मानसिकश्रमप्रियाः, क्रियावृत्तिप्रधाना राजन्याः समाजरक्षायामधिकारप्रियाः, विविधकामनाप्रधानाः वैश्या उत्पादनवर्धनादिषु भोगप्रिया स्तथाऽविकसित-वृत्तयश्शूद्रा द्विजातीनां शुश्रूषासु तात्कालिक-शरीर-सुखप्रिया अजायन्त। समाजश्च तादृशेभ्यो ब्राह्मणेभ्योऽनुरूपमध्ययनाध्यापन-धर्मशास्त्रनिर्माणादि कार्य्यजातं, तदनुरूपं सर्वमान्यत्वप्रवर्तकं पारितोषिकं च, तथाविधेभ्यो राजन्येभ्यः समाजरक्षाभारं तदनुरूपमधिकारमेव वेतनं च, तादृशेभ्यो वैश्येभ्यः कृषिगोरक्षादि-कार्य्यजातं तेषु तेषां स्वच्छन्दोपभोगं च वेतनत्वेन, शूद्रेभ्यस्तु शारीरिकेषु कर्मसु शरीरसुख स्वरूपमेव वेतनं व्यतरत्।

मनोरचनानुकूलायामस्यां वर्णव्यवस्थायां तूत्तमः श्रमविभागः, अन्योन्याश्रयत्वं, स्पर्धाविहीनं सहयोगित्वं पृथक्पृथक् सुविभक्तं राष्ट्रियकार्य्यजातं साधुसमावेशितं समुपलभ्यते। विराट्-शरीरवर्णनव्याजेन, विश्ववर्णनमेव "ब्राह्मणोऽस्य मुखमासीदित्यादिना मन्त्रेण लुप्तोपमया प्रतिपादितवान् तत्र भगवान् वेदः।

तथा चैषा समाजरचना नैसर्गिक मनोविज्ञानानुगुणा शाश्वती विश्वजनीना महोपकारिणी च। न च सर्वेषां मनसां समुन्नतौ समानता, सर्वेषां मनस्सु एकस्या एव वृत्तेः प्रधानता केनापि कदाचित् दृष्टा श्रुता वा तदा कथमेकैव जातिरेक एव वर्णः समानोऽधिकारी विज्ञानविद्भि र्विद्भिरनुमोदयितव्यः? समानता तु प्रलयावस्थायामेव। अत एवाह भगवान् कपिलः–"सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः"—इति प्रकृतिभूतावस्था तु महाप्रलयावस्थैव। गीतोपदेष्टा श्रीभगवानपि मनोवृत्तीरेव लक्ष्यीकृत्य नैसर्गिकगुणकर्मद्वारैवेमां वर्णव्यवस्थामदिदृढत्।

दीपाज्जायमान-दीपवद् उपादानसमानगुणान्येवोत्पाद्यानि भवन्ति। अत एव नैसर्गिक-गुणकर्मविशिष्टेभ्यस्तेभ्यः सवर्णास्वेव विवाहोपदेशः, असवर्णासु सङ्करोत्पत्ते नैसर्गिकवर्णव्यवस्थाभङ्गापत्तेश्च। एतेन "कर्मणा वर्णव्यवस्था न जन्मनेति" मतं निरस्तम्। यतो हि ते प्रतिपलं परिवर्त्तमानैरनियतैः क्षणविध्वंसिभिःकर्मभिः वर्णान् व्यवस्थापयितुं कथं प्रभवेयुरिति।

# आह्वानम् ।

ले०—शास्त्री-विठ्ठलनाथदीक्षितः ।
महाराना सं० का० अध्यापकः ( उदयपुर )

——:※:——

गोविन्द ! दीनबन्धो ! नवभारतार्तिहारिन् ! ।
आगच्छ भारतेऽस्मिन्निजभक्तदुःखदारिन् ! ॥
अयि धर्मराज-पालिन् ? खलकौरवादि-दारिन् !
त्रायस्व पापहारिन् ! गीतोपदेश-कारिन् !
यातो नयोऽतिनीचैः प्राप्तोऽनयस्तदुच्चैः ।
शिष्टा स्वधर्महानिः किं धर्मपक्षकारिन् ! ॥
आगस्कृतां जनानां शरणे तवागतानाम् ।
क्षन्त्वापराधपुञ्जान् दययस्व शान्तिधारिन् ! ॥
गोविन्द दीनबन्धो ! नवभारतार्तिहारिन् !
आगच्छ भारतेऽस्मिन्निज-भक्त-दुःखदारिन् ।

——

# नयपालदेशस्य इतिवृत्तम् ।

——:※:——

ले०—श्रीशिवकुमारशास्त्री ( काव्यतीर्थः ज्यो० शास्त्री )

नयपालप्रदेशो भारतस्योत्तरस्यां दिशि वर्तते। लघीयान् सम्प्रति स्वतन्त्रोऽयं भूभागः। देशोऽयं कृषिप्रधान एव गण्यते। प्राचीनकाले भारतभूपतेराधीन एवासीत्। पर्वतमालासमावृत एवायं देशः। उत्तरस्यां हिमालयः, अपरास्वपि तिसृषु दिक्षु पर्वतश्रेण्यः सन्ति। अस्य देशस्य राज्ञः काठमाण्डूनाम्नी प्रधानराजधानी विद्यते। अचलश्रेणीसंकुलतया देशोऽयं शत्रुभिर्दुर्जयः। अत्रत्या गोरखानाम्नी जातिरपि पराक्रमशीला या दुर्जयाऽन्यराजैः। मार्गाणां दुर्गमत्वमपि देशमिममन्यराजहस्तगमनाद्रक्षति।

इहत्या वसतिः प्रधानतया ब्राह्मण-क्षत्रिय-वैश्य-शूद्र-तामङ-दनुवार-गुरुङ-मगर-राई-लिम्बूप्रभृतीनां जातीनामस्ति। अत्र सर्वप्रथमा गोरखाली भाषा

विद्यते, या हि हिन्दीराष्ट्रभाषामनुकरोति। विद्यमानास्वपि नेवार,–तामाङ-दनुवारप्रभृतिभाषासु गोरखाभाषैव लेखपाठादिषूपयुज्यमाना विलोक्यते।

इह जनसंख्यायाश्चतुर्थांशो बौद्धानां त्रयोंऽशास्तु सनातनधर्मणामेव मानवानाम्। अस्मिन् देशे देवमन्दिराणि बहूनि सन्ति। येषु कियन्ति बौद्धानां कियन्ति च वैष्णवानां भूरीणि शैवमन्दिराणि एव सन्ति। नयपालदेशस्था बौद्धा अपि शैव-वैष्णव-मन्दिरेषु गतागतं कुर्वन्ति। शैवाश्च बौद्धवैष्णवमन्दिरेषु गत्वा पूजां विदधति। एतद्देशगानि इमानि स्थानानि दर्शनीयानि गण्यन्ते। श्रीपशुपतिनाथः गोसाईस्थानम्, मुक्तिनाथः, कृष्णानदी, सप्तगण्डकी, आर्य्यतीर्थं, धनुषतीर्थं, जनकपुरं (राजर्षेर्जनकस्य राजधानी) स्वयम्भूबौद्धस्थानम्, नाम्मूडा, शिम्बुप्रभृतीनि प्राधान्यमाश्रयन्ति।

इह प्राचीनार्वाचीनशिक्षाकृते कुमारपाठशाला, संस्कृतपाठशाला, कन्यापाठशाला, विद्यालयो महाविद्यालयः निःशुल्कमेव संचाल्यन्ते। येनाकिञ्चना अपि बालकाः शिक्षां ग्रहीतुं समर्था भवन्ति।

अत्रत्येषु क्षत्रियेषु पूर्वप्रथानुरूपमेव प्रौढ़ानां कुमाराणां तथैव बालिकानाञ्च पाणिग्रहः संस्कारः सम्पाद्यते। वैश्यशूद्रादिष्वपि प्राचीनरीतित एव रजोदर्शनतः पूर्वमेव परिणयो भवति, तथा ब्राह्मणेषु तद्दर्शादर्शि ग्रामीणक्षत्रियेष्वपि रजोदर्शनतः पूर्वं बालिकानामुद्वाहः संस्कारः सम्पाद्यते। कियतः कालात् (गताग्रहायणमासतो) बालिकानां परिणय एकादशवर्षतो न्यूनत्वे नैव भविष्यतीति नियमो राजनीतिविधानाद्विहितो विद्यते। येन बालविवाहप्रथा न वर्द्धितुमर्हति।

इह देशे अवगुण्ठनप्रथायाः प्राबल्यं नास्ति। इहापि द्विजविधवानां पुरुषान्तरेण सम्बन्धो निन्दितो मन्यते। यदि काचिद्विधुरा नारी स्वसतीव्रतपालनासमर्था स्वजातिकुलवयोऽनुरूपं नरं वृणीते चेत्तत्सम्बन्धादुत्पन्नः सन्तानः "जैसी ब्राह्मण" इति संज्ञां लभ्यते। समाजदृष्टौ च निम्नकोटिगो ब्राह्मणो गण्यते। ये अस्पृश्याः सन्ति, तेषां देवदर्शने धर्मशास्त्रीया बाधा तत्रापि विद्यते। कृषीवला अत्रोपत्यकाप्रदेशेऽधिकतया कृषिं कुर्वन्ति, प्रायशश्चाधित्यकायाम् धान्यकृषिमेव कुर्वन्ति। वृहद्वञ्जरस्य कोद्रवस्य चेह प्राधान्येन समुद्भवो भवति। गोधूमप्रभृतयो नेह प्रोद्भवन्ति। पर्वतीयाः स्ववेश्मनि तर्कुचक्रं चालयन्ति। येन स्वयमेव ते स्वपरिवारपरिधानीयं स्वदेशीयं वस्त्रं समुद्भावयन्ति। अतश्च

महापणेऽपि करकर्तित-करनिर्मितान्येव वस्त्राणि समुपलभ्यन्ते । इहत्याः स्वभावत-एवोग्रा भवन्ति । प्रथमतस्तु इमे नम्रा दृश्यन्ते, परन्तु तर्जिताः सन्त उद्दीप्ता भवन्ति। अत्रत्या वीरप्रसवा युद्धशीला गोरखा जाति र्जेगीयते। अत एव सम्प्रति महासमरतः प्रसिद्धे यं जातिः भारते सर्वत्रैव सैनिकरूपे समुपलभ्यते । नयपाल-देशस्य शासकः सनातनधर्मावलम्बी परमधार्मिकः, तत्रत्यं प्रजाशासनं धर्मशास्त्रा-नुसारं भवति ।

---

## सं० परीक्षाप्रश्नवैषम्यम् ।

विहारोत्कलसंस्कृतसमिति–कार्यसम्पादकाः ! अत्र दृष्टिपातं विद-धतु । विहारप्रान्तीय राजकीय-संस्कृतपरीक्षासु मध्यमाचार्य्यपरीक्षार्थिनां कृते यादृक् सुव्यवस्था यादृक् च तत्तद्विषय-सौलभ्यं न तथा सुकुमारमतीनां प्राथमिकान्तेवसतामिति चित्रयति सहृदयानां चेतांसि । दृश्यते च नितरां सर्वप्रान्तेषु या च परीक्षा यस्मिन्विषये ग्रन्थे वा गृहीता भवति तस्मिन्नेव विषये ग्रन्थे वा प्रश्नाः सञ्जायन्ते । किन्तु विहारप्रान्ते बहोः कालात् प्रथमपरीक्षायां व्याकरणविषयस्य-सारस्वते मुग्धबोधे लघुकौमुद्याश्च-प्रायः सर्वे प्रश्नाः समाना जायन्ते । प्रश्ने प्रयोगाः विशेषतो लघुकौमुदीतो गृह्यन्ते । ये च सारस्वते न तिष्ठन्ति, तेषामुत्तरदाने सारस्वतानां प्रथमपरी-क्षोपस्थितबालकानां भवति महान् विप्रकर्षः । बहुशो लघुकौमुदीप्रयोगाः नृन्'पाहि' सदृशाः सारस्वतव्याकरणेन साध्या न भवन्ति । एवमननुकूलप्रश्नाना मुत्तरदाने बालकानां मनोभीतिरेव भवति । तत्र कथञ्चिद्द्वित्रा एवोत्तीर्णतां भजन्ते । आशासे सहृदयाधिकारिमहोदया एतन्नैजमितिकर्त्तव्यं मन्यमानाः सन्तः प्रश्नास्तत्तद्विषयका यथा स्युस्तथा शीघ्रमेव यतिष्यन्ते । येनास्मिन्नेवाब्दे छात्राणां सौलभ्यलाभो भवेदवश्यमिति दिक् ।

विद्वच्चरणानुरागी कश्चिद्,
रघुनन्दनपाण्डेयो व्याकरणाचार्य्यः ।
श्रीभास्कर सं० वि० अंगारी धाम, पो० एकंगरसराय ( पटना )

---

# "श्रीकृष्ण-प्रार्थना"

——:※:——

लेखकः—पण्डित श्रीघनश्यामचन्द्र शास्त्री,
( आचार्य्यः, श्रीऋषिकुल ब्रह्मचर्य्याश्रमस्य )

श्रीकृष्ण दीनबन्धो, त्रायस्व मां मुरारे ॥ टेक ॥
वंशी-विभूषितेन, संराजसे करेण ।
नवनीरदाभ ! नान्य स्त्वत्तः परोऽसुरारे ॥ १ ॥ श्रीकृष्ण० ।
शिशुपाल कंसमुख्यै र्मदगर्वितैर्जघन्यैः ।
संपीडिता धरित्री त्वामाश्रिता बकारे ॥ २ ॥ श्रीकृ० ।
देवैः समन्वितायाः श्रुत्वा क्षितेः स्तवं तम् ।
त्वं द्वापरेऽवतीर्णो दैत्यान्तकृद्भवारे ॥ ३ ॥ श्रीकृष्ण० ।
लोलुप्यतेऽत्र रम्या, वर्णाश्रमव्यवस्था ।
नानाघसङ्घहर्त्री स्राव्या द्रुतं जितारे ॥ ४ ॥ श्रीकृष्ण० ।
गोपीगणस्य भक्तिं दृष्ट्वा समुद्धृतः सः ।
भक्तिः प्रिया कलौ ते, "घनश्याम" नाशितारे ॥ ५ ॥ श्रीकृष्ण० ।

---

# शोकसमाचारः ।

——:※:——

मुम्बई पुर्य्याः प्रसिद्धज्योतिर्विदां एतत्प्रान्तीय श्रीभारतधर्ममण्डलोप-सभापतीनां विद्याभास्कराणां श्रीमतां पं० कृष्णमोहनजी कार्तान्तिकमहोदयानां धर्मपत्न्या जीवमबाई देव्याः पञ्चाशद्वर्षीये वयसि ५० स्वर्गारोहणं जूनमासस्य एकविंशतितमे दिवसे प्रातःकाले भरूचाविल्डिङ्गमध्ये जातम् । तद्वियोगेन सन्तप्तहृदयेभ्यः कार्तान्तिकमहोदयेभ्यः समवेदनां प्रकटयन् गतात्मनः शान्तिप्रदानाय परमेश्वरं प्रार्थयते—

सन्तप्तहृदयः—
श्रीरेवाशङ्कर मेघजीशास्त्री,
अध्यापक डी.एल.सं. पाठशाला, गुलालवाड़ी, बम्बई ४ ।